# आनन्दाश्रममुद्रणालयस्थग्रन्थानां सूचीपत्रम् ।

| ग्रन्थनाम । | मूल्यम् । रू० | आ० |
|---|---|---|
| १ गणेशाथर्वशीर्षम्—सभाष्यम् । ... | ० | ६ |
| २ रुद्राध्यायः-सायणाचार्यभट्टभास्करप्रणीतभाष्याभ्यां संवलितः। | १ | ६ |
| ३ पुरुषसूक्तम्—सायणभाष्योपेतम् । ... ... ... | ० | ४ |
| ४ योगरत्नाकरः—वैद्यकशास्त्रीयग्रन्थोऽतीव पुरातनः । ... | ५ | ० |
| ५ ईशावास्योपनिषत्—सटीकशांकरभाष्याद्युपेता । ... | ० | १४ |
| ६ केनोपनिषत्—सटीकशांकरभाष्याद्युपेता । ... | १ | ० |
| ७ काठकोपनिषत्—टीकाद्वयसहितशांकरभाष्योपेता । ... | १ | ४ |
| ८ प्रश्नोपनिषत्—सटीकशांकरभाष्याद्युपेता । ... ... | १ | ० |
| ९ मुण्डकोपनिषत्—सटीकशांकरभाष्याद्युपेता । ... ... | ० | १० |
| १० माण्डूक्योपनिषत्-सटीकशांकरभाष्यगौडपादीयकारिकाद्युपेता। | २ | ५ |
| ११ ऐतरेयोपनिषत्—सटीकशांकरभाष्याद्युपेता । ... ... | १ | ४ |
| १२ तैत्तिरीयोपनिषत्—सटीकशांकरभाष्याद्युपेता। ... ... | १ | १२ |
| १३ तैत्तिरीयोपनिषद्भाष्यवार्तिकम्—सुरेश्वराचार्यकृतं सटीकम् | २ | २ |
| १४ छान्दोग्योपनिषत्—सटीकशांकरभाष्योपेता । ... ... | ५ | ० |
| १५ बृहदारण्यकोपनिषत्—सटीकशांकरभाष्योपेता । ... | ८ | ० |
| १६ बृहदारण्यकोपनिषद्भाष्यवार्तिकम्—भागत्रयात्मकम् । | २२ | ८ |
| १७ श्वेताश्वतरोपनिषत्—भाष्यदीपिकाद्युपेता । ... ... | २ | ४ |
| १८ सौरपुराणम्—श्रीमद्द्वैपायनप्रणीतम् । उपपुराणम् । ... | ३ | ० |
| १९ रसरत्नसमुच्चयः—श्रीमद्वाग्भटाचार्यविरचितः। वैद्यकग्रन्थः । | ३ | १२ |
| २० जीवन्मुक्तिविवेकः—विद्यारण्यविरचितः सटीकः । ... | ३ | १२ |
| २१ ब्रह्मसूत्राणि—सटीकशांकरभाष्योपेतानि भागद्वयात्मकानि । | १२ | ० |
| २२ श्रीमच्छंकरदिग्विजयः—विद्यारण्यकृतः। टीकाटिप्पणीभ्यांसहितः। | ६ | ० |
| २३ वैयासकन्यायमालाविस्तरः—भारतीतीर्थमुनिप्रणीतः । | १ | १२ |
| २४ जैमिनीयन्यायमालाविस्तरः—श्रीमाधवप्रणीतः । ... | ८ | ० |
| २५ सूतसंहिता—माधवकृतटीकोपेता । भागत्रयात्मिका । ... | ११ | ८ |
| २६ हस्त्यायुर्वेदः—पालकाप्यमुनिविरचितः । ... ... | ७ | ६ |
| २७ वृन्दमाधवः—श्रीमद्वृन्दप्रणीतः । सटीकः । वैद्यकग्रन्थः । | ६ | १२ |
| २८ ब्रह्मपुराणम्—श्रीमद्व्यासविरचितम् । प्रथमं महापुराणम् । | ६ | ४ |

| ग्रन्थनाम । | मूल्यम् । रु० | आ० |
|---|---|---|
| २९ उपनिषदां समुच्चयः-श्रीनारायणशंकरानन्दकृतदीपिकासहितः | ६ | १२ |
| ३० नृसिंहपूर्वोत्तरतापनीयोपनिषत्—भाष्याद्युपेता । ... | १ | १२ |
| ३१ बृहदारण्यकोपनिषन्मिताक्षरा—श्रीनित्यानन्दमुनिविरचिता । | २ | १२ |
| ३२ ऐतरेयब्राह्मणम्—सायणभाष्यसमेतम् । भागद्वयात्मकम् । | १० | १० |
| ३३ धन्वन्तरीयनिघण्टुः—श्रीधन्वन्तरिविरचितः। वैद्यकग्रन्थः । | ६ | ४ |
| ३४ श्रीमद्भगवद्गीता—शांकरभाष्योपेता । ... ... | २ | ० |
| ३४ श्रीमद्भगवद्गीता—सटीकशांकरभाष्योपेता । ... ... | ६ | ४ |
| ३५ संगीतरत्नाकरः—शार्ङ्गदेवकृतः सटीको द्विभागः। गानशास्त्रम्। | १० | ४ |
| ३६ तैत्तिरीयारण्यकम्—सायणभाष्यसमेतं भागद्वयात्मकम् । | ९ | १ |
| ३७ तैत्तिरीयब्राह्मणम्—सायणभाष्यसमेतं भागत्रयात्मकम् । | १४ | ८ |
| ३८ ऐतरेयारण्यकम्—सायणभाष्यसहितम् । ... ... | ३ | ० |
| ३९ संस्काररत्नमाला-गोपीनाथभट्टविरचिता । भागद्वयात्मिका । | १२ | ८ |
| ४० संध्याभाष्यसमुच्चयः—खण्डराजश्रीकृष्णपण्डितादिप्रणीतः । | २ | ० |
| ४१ अग्निपुराणम्—महर्षिव्यासप्रणीतम् । महापुराणम् । ... | ५ | ४ |
| ४२ तैत्तिरीयसंहिता—सायणभाष्यसमेता । भागनवकात्मिका । | ४८ | १० |
| ४३ वैयाकरणसिद्धान्तकारिकाः—भट्टोजीदीक्षितकृताः सटीकाः। | ० | १२ |
| ४४ श्रीमद्भगवद्गीता—पैशाचभाष्यसमेता । ... ... | १ | ८ |
| ४५ श्रीमद्भगवद्गीता—मधुसूदनश्रीधरकृतटीकोपेता । ... | ५ | ४ |
| ४६ याज्ञवल्क्यस्मृतिः-अपरार्ककृतटीकासहिता भागद्वयात्मिका। | १३ | ० |
| ४७ पातञ्जलयोगसूत्राणि—भाष्यवृत्तिभ्यां समेतानि । ... | ३ | ० |
| ४८ स्मृतीनां समुच्चयः—अङ्गिरःप्रभृतिसप्तविंशतिस्मृत्यात्मकः । | ५ | ० |
| ४९ वायुपुराणम्—महर्षिव्यासप्रणीतम् । महापुराणम् । ... | ४ | १२ |
| ५० यतीन्द्रमतदीपिका—श्रीनिवासदासकृता । प्रकाशटीकोपेता । | १ | ४ |
| ५१ सर्वदर्शनसंग्रहः—माधवाचार्यप्रणीतः । ... ... | २ | ० |
| ५२ श्रीमद्गणेशगीता—नीलकण्ठकृतटीकोपेता । ... ... | २ | ० |
| ५३ सत्याषाढश्रौतसूत्रम्—सत्याषाढविरचितं भागदशकात्मकम् । | २८ | ५ |
| ५४ मत्स्यपुराणम्—श्रीमद्द्वैपायनमुनिप्रणीतम् । महापुराणम् । | ६ | ० |
| ५५ पुरुषार्थचिन्तामणिः—आठवलेइत्युपाह्वविष्णुभट्टकृतः । | ४ | ० |
| ५६ नित्याषोडशिकार्णवः—भास्कररायोन्नीतटीकासहितः । ... | ३ | ८ |

| ग्रन्थनाम । | मूल्यम् । रू० | आ० |
|---|---|---|
| ५७ आचारभूषणम्—हिरण्यकेश्याह्निकमोकोपाह्वत्र्यम्बककृतम् । | ४ | ६ |
| ५८ आचारेन्दुः—माटेइत्युपाह्वत्र्यम्बकविरचितः । ... | ४ | ० |
| ५९ श्राद्धमञ्जरी—केळकरोपाह्वबापूभट्टविरचिता । ... | २ | ० |
| ६० यतिधर्मसंग्रहः—विश्वेश्वरसरस्वतीकृतः । ... | १ | १२ |
| ६१ गौतमप्रणीतधर्मसूत्रम्—हरदत्तकृतटीकासमेतम् । ... | २ | ८ |
| ६२ ईशकेनकठप्रश्नमुण्डमाण्डूक्यानन्दवल्लीभृगूपनिषदः-सटीकाः | २ | ८ |
| ६३ छान्दोग्योपनिषत्—रङ्गरामानुजविरचितप्रकाशिकोपेता । | ३ | १२ |
| ६४ बृहदारण्यकोपनिषत्—रङ्गरामानुजविरचितप्रकाशिकोपेता । | ३ | ४ |
| ६५ शाङ्खायनब्राह्मणम्—ऋग्वेदान्तर्गतबाष्कलशाखीयम् । | १ | ४ |
| ६६ काव्यप्रकाशः—उद्द्योतयुतप्रदीपसहितः । ... ... | ६ | ४ |
| ६७ ब्रह्मसूत्राणि—दीपिकासमेतानि । ... ... ... | ४ | ८ |
| ६८ बृहद्ब्रह्मसंहिता—नारदपञ्चरात्रान्तर्गता । ... ... | १ | १२ |
| ६९ ज्ञानार्णवतन्त्रम्—ईश्वरप्रोक्तम् । तन्त्रशास्त्रग्रन्थः । ... | १ | ४ |
| ७० स्मृत्यर्थसारः—श्रीधराचार्यविरचितः । ... ... ... | १ | १० |
| ७१ बृहद्योगतरङ्गिणी—त्रिमल्लभट्टविरचिता भागद्वयोपेता । | १० | १२ |
| ७२ परिभाषेन्दुशेखरः—वैद्यनाथकृतगदाख्यटीकायुतः । ... | २ | ६ |
| ७३ गायत्रीपुरश्चरणपद्धतिः—श्रीमच्छंकराचार्यविरचिता। ... | १ | ८ |
| ७४ द्राह्यायणगृह्यसूत्रवृत्तिः—रुद्रस्कन्दप्रणीता । ... ... | १ | ० |
| ७५ ब्रह्मसूत्रभाष्यार्थरत्नमाला—सुब्रह्मण्यविरचिता । ... | ४ | ४ |
| ७६ ईशकेनकठोपनिषदः—दिगम्बरानुचरकृतव्याख्यासमेताः । | १ | ० |
| ७७ वेदान्तसूत्रमुक्तावलिः—ब्रह्मानन्दसरस्वतीविरचितः । ... | २ | ६ |
| ७८ त्रिस्थलीसेतुः—नारायणभट्टविरचितः । ... ... ... | ३ | १२ |
| ७९ छान्दोग्योपनिषत्—मिताक्षराव्याख्यासमेता । ... ... | २ | ० |
| ८० वाक्यवृत्तिः—श्रीमच्छंकराचार्यकृता सटीका । ... ... | ० | ८ |
| ८१ आश्वलायनश्रौतसूत्रम्—नारायणकृतवृत्तिसमेतम् । ... | ४ | ११ |
| ८२ ब्रह्मसूत्रवृत्तिः—हरिदीक्षितविरचिता । ... ... ... | २ | ७ |
| ८३ संक्षेपशारीरकम्—व्याख्यासहितं भागद्वयोपेतम् । ... | ९ | १ |
| ८४ अद्वैतामोदः—म. म. अभ्यंकरोपाह्ववासुदेवशास्त्रिप्रणीतः । | २ | ० |
| ८५ ज्योतिर्निबन्धः—शूरमहाठश्रीशिवराजविरचितः । ... | ३ | १५ |

आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः १०९

# श्रीमद्भगवद्गीतायाः प्रथमद्वितीयाध्यायौ ।

—०~~~~~~०—

श्री. म. य. विद्वद्रत्न—अभ्यंकरोपाह्ववासुदेवशास्त्रिप्रणीताद्वैताङ्कुराख्यटीकासंवलितौ ।

एतत्पुस्तकं

वे० शा० सं० रा० शंकरशास्त्री मारुलकर

इत्येतैः संशोधितम् ।

तच्च

बी. ए. इत्युपपदधारिभिः

विनायक गणेश आपटे

इत्येतैः

पुण्याख्यपत्तने

श्रीमन् ' महादेव चिमणाजी आपटे ' इत्यभिधेय-

महाभागप्रतिष्ठापिते

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

शालिवाहनशकाब्दाः १८६० ।

खिस्ताब्दाः १९३८ ।

—:+×+:—



मूल्यमाणकत्रययुतरूप्यकद्वयम् ( २-३ ) ।

# प्रास्ताविकं किंचित् ।

## पायादपायाज्जगदीश्वरो नः ।

अयि भो गीर्वाणवाणीरसिका अद्वैतवेदान्ततत्त्वजिज्ञासव आनन्दाश्रमग्रन्थावलीग्राहकमहाभागाः शृणुतेदानीं निवेदनीयमस्ति किंचित् । अतोऽत्रावधानं दीयमानमभ्यर्थये । श्री. म. म. विद्वद्रत्न—अभ्यंकरोपाह्ववासुदेवशास्त्रिप्रणीताऽद्वैताङ्कुराभिख्याऽभिनवा सरला सरसा च गीताव्याख्याऽन्यत्र क्वाप्यप्राप्याऽत्र मुद्रणालये मुद्रणायोपक्रान्ता । उपक्रान्तायाश्च तस्याः पञ्चषा मासाः समभूवन् । संप्रति परिसमाप्तमुद्रणेयं शरज्ज्योत्स्नेव दिदृक्षुलोचनानन्ददायिनी दृष्टिपथमवतरतीति प्रमोदावहमेतत् । अद्वैताङ्कुरेति नाम्नैवास्या विषयोऽवगतो भवति । सा चेयं व्याख्या भगवद्गीतायाः प्रथमद्वितीयाध्याययुगुलोपर्येव गता समनुशिष्टा ।

यद्यपि श्रीभागवतोक्तगोपीगीताऽध्यात्मरामायणोक्तरामगीताऽऽश्वमेधिकपर्वोक्ते ब्राह्मणगीतानुगीते देवीभागवतोक्तभगवतीगीता गणेशगीता विष्णुगीता शिवगीतेत्यादयो बहुला गीता वर्तन्ते तथाऽप्यतितरां प्रसिद्धत्वाद्भगवद्गीतामेव केवलो गीताशब्दो वक्ति । यथा निरुपपदो मालाशब्दः पुष्पमालामेवाभिधत्ते तद्वत् ।

तदेतस्यां गीतायां कस्मिन् प्रसङ्गे केन कं प्रति किं किमुपदिष्टमित्यासेत्वाहिमालयं नभोमण्डलादधःप्रदेशे जगतीतले ज्ञानेश्वर्यादिग्रन्थद्वारा परःशतमहाराष्ट्रभाषाटीकाद्वारा नित्यं स्थले स्थले गीताजयन्त्याद्युत्सवप्रसङ्गे च व्याख्यानप्रवचनद्वारा वर्तमानपत्रादिषु वादप्रतिवादचर्चया चैतावत्प्रसिद्धं जातमस्ति यत्र जगदन्तर्गतास्तरुशैलप्रभृतयः स्थावरा अपि गीतार्थचर्चां कुर्वाणा इव दृश्यन्ते। तदेवं नात्रेषदपि लेखनीव्यापारस्यावकाशः । तथाऽप्यत्र मुद्रणालये पुस्तके मुद्रिते सति तत्र प्रस्तावनया भाव्यमेवेति निर्बन्धानुसारेण प्रवृत्तोऽहं गीतासंबन्धिनौ द्वौ शब्दौ लिलिखिषामि—गीयते स्म इति गीता । आत्मविद्योपदेशात्मिका ।ब्रह्मतत्त्वोपदेशमयी कथा यत्रेति यावत् । शब्दार्थकाद्गै धातोर्भूते क्तः। सा तु महाभारतीयभीष्मपर्वान्तर्गता कर्मोपासनाज्ञानकाण्डत्रयात्मिकाऽष्टदशाध्यायी । तदुक्तम्—

भारते सर्ववेदार्थो भारतार्थश्च कृत्स्नशः ।
गीतायामस्ति तेनेयं सर्वशास्त्रमयी मता ।
कर्मोपास्तिज्ञानकाण्डत्रितयात्मा निगद्यते । इति ।

इत्थं हि गीताशास्त्रप्रस्तावः—कुरूणां पाण्डवानां च मिथः संप्रहारे समुपस्थिते युद्धार्थं मिलितान् पितृपितामहपितृव्यपुत्रपौत्रमित्रभ्रातृश्वशुरशालमातुलादीन् स्वसंबन्धिजनान् वीक्ष्यैतेषां सर्वेषां युद्धप्रसङ्गेन मरणप्रसङ्गं पश्यन् परममोहाविष्टः पार्थ आत्मनश्चैतद्धननजन्यपातकरूपमधर्मं मन्यमानः शोकाकुलो भूत्वा सशरं धनुस्त्यक्त्वा स्वकीयात्क्षात्रधर्माद्युद्धादुपरराम । भगवान् वासुदेवः श्रीकृष्णश्च दुःसहभाराक्रान्तगोरूपधरधराप्रार्थितेन ब्रह्मदेवेनाभ्यर्थितो भूभारापहारार्थं वसुदेवेन देवक्यामाविर्भूय तादृशधराभारापहाररूपकार्यकारित्वेन मध्यमं पार्थं प्रथितपराक्रमं मोहापनयनद्वारा स्वधर्मे युद्धे प्रवर्तयितुं सर्ववेदार्थसारसंग्रहरूपं गीताशास्त्रार्थमुपदेष्टुं प्रववृत इति ।

अत्र केचिदेवमाशङ्कन्ते—तादृशेऽवसरे यो ह्यर्थो भगवताऽर्जुनायोदीरितः स तात्कालिकव्यवहारप्रचलितया जन्मतोऽभ्यस्तया हिन्द्यादिस्वभाषयैवोदीरितः स्यान्न गीर्वाणभाषयेति कल्प्यते । यतो यः कोऽपि दुरवगमो गम्भीरोऽर्थो याथातथ्येन सुविस्तृततया सर्वाङ्गपरिपूर्णत्वेन सुगमतया च यथा स्वीयभाषयाऽनायासेन मञ्जुलपदप्रयोगं ग्राहयितुं शक्यो भवति न तथा चिरकालं स्वधीतयाऽप्यनात्मीयया संस्कृतादिभाषयेति लोकेऽनुभूयते । तथा च भगवता श्रीकृष्णेन गीर्वाणवाण्यतिरिक्तवाण्युदीरितस्य तादृशगभीरार्थस्य प्रतिपादिकां छन्दोबद्धां गीर्वाणवाणीं व्यरीरचद्वेदव्यास इति गीतायाः कर्ता व्यास इति लोकप्रसिद्धिरप्युपपद्यते ।

किंच महाभारतान्तर्गता गीताव्यतिरिक्ताः सर्वा अपि कथाः प्रत्यक्षतो घटिता व्यासेनैव रचिताः, न तत्र लेशतोऽप्यन्यस्य कस्यचिद्व्यापार इति तत्साहचर्यादियमपि गीता केवलं व्यासेनैव विरचितेति भवितुमर्हति । अर्थाद्भगवताऽन्यादृशयैव वाण्योदीरिता सा । यदि तु वासुदेवेनानुष्टुप्छन्दोमय्यैव वाण्योदीरिता, व्यासेन तु केवलं तादृशी सा संगृहीता स्यात्तर्हि व्यासकर्तृकानेकार्थमध्येऽयमेकोऽन्यकर्तृकोऽर्थो निबद्ध इति काव्यप्रकाशाद्युक्तः सहचरभिन्नतादोष आपद्येत । न च व्यासोक्तौ तादृशदोषः कल्पयितुं युक्तः ।

अपि च यः खलु यं कंचिदर्थविशेषं प्रतिपादयितुं स्वातन्त्र्येण पदवाक्यसंदर्भमारचयति स कर्तेत्युच्यते लोके । यदि च भगवता यादृशानुपूर्वीका गीतोक्ता तादृशानुपूर्वीकैव व्यासेन संगृहीतेति मन्यसे चेद्व्यासः केवलमनुवादको न कर्तेति गीताया व्यासकर्तृकत्वप्रसिद्धिरपि व्याकुप्येत । तस्माद्धिन्द्यादिप्रचलितस्वभाषयैव गीतार्थो भगवतोदीरित इति ।

नच यद्यपि भगवतो वासुदेवस्य भगवदवतारत्वात्संस्कृतभाषायाश्च गीर्वाणवाणीत्वाद्गीर्वाणवाणी श्रीकृष्णस्य स्वभाषैव भवतीत्यतो गीर्वाणवाण्या तादृशगभीरार्थावेदने श्रीकृष्णस्य न खलु कश्चिदप्यायास इत्यर्जुनं प्रति गीर्वाणवाण्यैव गीताशास्त्रार्थो भगवतोदीरित इति किं न स्यादिति शङ्कनीयम् । पार्थिवस्यापि पार्थस्य मानवजातीयत्वात्तेन स्वधीताऽपि संस्कृतभाषा न तस्य सा स्वभाषा भवितुमर्हति । स्वभाषायां चाभिहितोऽर्थः श्रोत्रा सर्वात्मना निष्कलङ्कत्वेन यथावच्च यथा ग्रहीतुं शक्यो न तथा स्वभाषेतरभाषायामुक्त इति कृत्वा स्वावतारकर्तव्यस्य धराभारापहारस्य मुख्यस्य निर्वाहार्थं नरवीरमध्यमपार्थकर्तृकसांपरायिकप्रवृत्तिं समिच्छता तत्प्रतिबन्धकं धर्मेऽधर्मबुद्धिरूपं भ्रमं धर्मतत्त्वोदीरणेन निरसिसिषुणा चिकीर्षितधराभारापहारसमयस्यातितरां सांनिध्यमाकलयता कर्तव्यकार्यस्य महत्त्वे दृष्टिं दत्त्वा कालविक्षेपं परिजिहीर्षुणा भक्तिपरवशतामापन्नेन भगवता श्रीवासुदेवेन स्वकीयामपि गीर्वाणवाणीं त्यक्त्वा यया भाषयाऽऽवेदितोऽर्जुनस्तत्त्वं सम्यग्गृह्णीयाज्झटिति च स्वीयक्षात्रधर्मे युद्धे प्रसज्जेत्तादृश्येव भाषा तदा भगवताऽङ्गीकृता स्यान्न त्वन्यादृशी । तादृशी च भाषाऽर्थात्पार्थजन्मभाषा तत्कालव्यवहारप्रचलिता हिन्द्यादिरूपैव नतु शस्त्रास्त्रविद्यायामद्वितीयपण्डितेन पार्थेन मेधाविना धनुर्वेदग्रहणसमये सुशिक्षिताऽपि गर्वाणवाणी लुप्तप्रायेत्यवगच्छ ।

अथैवं मन्यसे—नन्दनन्दनः श्रीकृष्ण इव नरवरः पार्थोऽपि भगवदवतार एव । अत एव भगवान्नरनारायणरूपेण भूलोकेऽवतीर्णः पृथ्वीपरिपालनायेति पौराणिकप्रसिद्धिः संगच्छते । तथा च तादृशाऽर्जुनेन शिक्षिताऽपि गीर्वाणवाणी तस्य स्वभाषैव भवति ।

किंच—कृते जनार्दनो देवस्त्रेतायां रघुनन्दनः ।
द्वापरे रामकृष्णौ च कलौ श्रीपादवल्लभः ॥

इत्यभियुक्तोक्त्या द्वापरयुगावसानसमये नरनारायणावतारस्य श्रूयमाणत्वेन द्वापरे च वेदशास्त्राध्ययनप्रचारबाहुल्यस्येतिहासपुरातनशिलालेखादिनोपलभ्यमानत्वात्तत्कालप्रचलिता राजव्यवहृता गीर्वाणभाषैवाऽऽसीन्न तदपभ्रंशरूपा हिन्द्यादिः । अत एव च श्रीव्यासेनाप्यष्टादशसु पुराणेषूपपुराणेषु च सर्वजनीना संस्कृतभाषैवाऽऽदृतेति मन्यामहे । तथा च श्रोतुर्वक्तुश्च द्वयोरपि गीर्वाणभाषा स्वभाषैवेति तादृशस्वभाषया गभीरार्थस्य ग्रहणे ग्राहणे च न कस्यापि स्वल्पोऽप्यायास इति संस्कृतभाषयैव भगवताऽर्जुनाय गीताशास्त्रार्थ उदीरितः । सैव च वचनभङ्गी वेदव्यासेन केवलमनूदिता नापूर्वं विरचितेति न गीतायाः कर्ता व्यासः किंतु भगवानेवेति चेदत्रापर एवमाहुः—

यथेदानीं व्यवहारे प्रचलिताऽऽबालवृद्धं सर्वैर्व्यवह्रियमाणा महाराष्ट्रभाषा सर्वेषां महाराष्ट्रीयाणां स्वभाषैवेति निश्चप्रचम् । तथाऽपि तयैव भाषया गद्यात्मिकया यं कंचिदर्थं श्रोता वक्ता च यथा यथावदनायासेन गृह्णाति ग्राहयति च न तथा तयैव भाषया पद्यात्मिकयेति लोकेऽनुभूयते । अतो गीर्वाणभाषा यद्यपि वक्तृश्रोत्रोरुभयोः स्वभाषाऽस्ति तयैव च भाषया भगवता गीताशास्त्रार्थ उदीरितोऽपि च्छन्दोबद्धपद्यात्मकगीर्वाणभाषया गभीरं धर्मतत्त्वं प्रतिपादितं चेन्नार्जुनस्तद्यथावच्छीघ्रं च ग्रहीतुं शक्नुयात् । ततश्च भ्रमरूपावरणाभङ्गात्स्वसमीहिताऽर्जुनकर्तृका युद्धे प्रवृत्तिर्विलम्बिता स्यादित्यनुसंधाय भ्रमापगमद्वारा झटित्यर्जुनस्य युद्धे प्रवृत्तिर्भूयादिति मन्यमानेन श्रीकृष्णेन श्रोतुर्वक्तुश्च द्वयोरपि स्वभाषाभूतया गीर्वाणवाण्या गद्यात्मिकयैव व्यवह्रियमाणयाऽऽवेदितस्तादृशो गभीरोऽर्थ इत्येवानुभवानुरोधेन कल्पयितुमुचितम् । तथा च सर्वज्ञेन व्यासेन तादृशगभीरार्थाभिधायिका सुगमपदवाक्यसंदर्भा छन्दोबद्धा गीर्वाणवाणी विरचितेति व्यासो गीतायाः कर्तेति प्रसिद्धिरञ्जसा संगच्छते । अत एवाष्टादशसु पुराणेषूपपुराणेषु च तत्र तत्रेश्वर उवाच महादेव उवाच ब्रह्मोवाच नारद उवाच सूत उवाचेत्येवमनेकेषां वक्तृत्वे श्रूयमाणेऽपि न तावता तत्र तत्रभवतां तेषां कर्तृत्वं किंतु व्यासस्यैवेति कृत्वा 'अष्टादशपुराणानां कर्ता सत्यवती सुतः' इत्युद्घोषोऽपि सामीचीन्येन निर्वहतीति । तदेतत्सर्वं कुशङ्कजालमिति मन्तव्यम् । यथोक्तं गीतामाहात्म्ये—

गीताः सुगीताः कर्तव्याः किमन्यैः शास्त्रविस्तरैः ।
याः स्वयं पद्मनाभस्य मुखपद्माद्विनिःसृताः ॥ इति ।

आचार्यचरणा अपि गीताभाष्ये—'तं धर्मं भगवता यथोपदिष्टं वेदव्यासः सर्वज्ञो भगवान् गीताख्यैः सप्तभिः श्लोकशतैरुपनिबबन्ध' इति प्राहुः। मधुसूदनसरस्वत्योऽपि—'तत्र च प्रायशः श्रीकृष्णमुखनिःसृतानेव श्लोकानलिखत्कृष्णद्वैपायनः। कांश्चित्तत्संगतये स्वयं व्यरचयत्' इत्यूचुः। एतावतैवं स्पष्टमवगम्यते—यदद्य गीतायां सप्त शतानि श्लोका अध्यक्षमीक्ष्यन्ते ते सर्वे प्रायशः श्रीभगवद्विरचितानुपूर्वीकाः। अत एव गीताया मुख्यः कर्ता साक्षाच्छ्रीकृष्ण एव व्यासेन तु केवलं तेऽनूदिता इति श्रीकृष्णार्जुनयोः संवादः पद्यैरेवाभूदिति निश्चिनुमः।

नन्वेवं गीताया व्यासकर्तृकत्वमिति प्रसिद्धेः का गतिरिति चेत्, केषांचिच्छ्लोकानां व्यासेन प्रणीतत्वात्तत्प्रकाशकत्वाद्वा गीतायाः कर्ता व्यास इति गौणो लोकव्यवहारो यथाकथंचिन्निर्वाह्य इत्येव युक्तमुत्पश्यामः।

अथात्र व्याख्येयत्वेन सकला गीता किमिति नोपात्ताऽध्यायद्वयमेव कस्मादाहृतम्। तदध्यायद्वयस्य गीताशास्त्रारम्भकत्वेन मुखत्वान्मुखस्य च 'सर्वेषु गात्रेषु शिरः प्रधानम्' इति प्रधानत्वात् 'प्रधाने जिते सर्वं जितं भवति' इति लोकन्यायेन प्रधाने सम्यगन्वाख्यातेऽन्यत्सर्वमन्वाख्यातप्रायं भवतीत्यभिप्रायेणाध्यायद्वयमेवोपात्तमिति लक्ष्यते। तत्रापि द्वितीयाध्याय एव मुख्यत्वेन गीताशास्त्रारम्भकः। प्रथमाध्यायस्तूपोद्घातात्मकत्वेन तदङ्गभूतः। गीताशास्त्रप्रवृत्तिकारणप्रदर्शनपर इति यावत्। तदुक्तमाचार्यचरणैर्भाष्ये—'दृष्ट्वा तु पाण्डवानीकमित्यारभ्य न योत्स्य इति गोविन्दमुक्त्वा तूष्णीं बभूव ह, इत्येतदन्तः प्राणिनां शोकमोहादिसंसारबीजदोषोद्भवकारणप्रदर्शनार्थत्वेन व्याख्येयो ग्रन्थः' इति। परमार्थतो गीताशास्त्रारम्भस्तु 'अशोच्यानन्वशोचस्त्वम्' इत्यारभ्यैव। अत एव प्रथमाध्यायमारभ्य द्वितीयाध्यायस्थ 'तूष्णीं बभूव ह' इत्येतच्छ्लोकपर्यन्तं शांकरभाष्यं न दृश्यते। द्वितीयाध्यायस्तु गीताशास्त्रारम्भकः सन् समस्तगीताशास्त्रार्थसूत्रीभूतः। तृतीयाद्यध्यायास्त्वत्र गीताशास्त्रारम्भके द्वितीयेऽध्याये संक्षेपतः प्रतिपादितानामर्थानां वैशद्येन प्रतिपादकाः। एवं च प्रथमाध्यायेनोपोद्घातितो गीताशास्त्रार्थः कृत्स्नो द्वितीयाध्यायेन सूत्रित इति द्वितीयोऽध्यायः सूत्रीभूत इत्युच्यते। तत्र द्वितीयेऽध्याये सूत्रीभूताः के केऽर्थाः, केषां केषां च तृतीयाद्यध्याया विस्तरशः प्रतिपादकास्तत्क्रमेण प्रदर्श्यन्ते—

तत्र द्वितीयाध्याये सूत्रिता अर्थाः—आदौ निष्कामकर्मनिष्ठा । ततोऽन्तःकरणशुद्धिः । ततः शमदमादिसाधनपुरःसरः सर्वकर्मसंन्यासः । ततो वेदान्तवाक्यविचारसहिता भगवद्भक्तिनिष्ठा, तस्याः फलं च त्रिगुणात्मकाविद्यानिवृत्त्या जीवन्मुक्तिः प्रारब्धकर्मफलभोगपर्यन्तं तदन्ते च विदेहमुक्तिः । जीवन्मुक्तिदशायां च परमपुरुषार्थालम्बनेन परवैराग्यप्राप्तिर्दैवसंपदाख्या च शुभवासना तदुपकारिण्यादेया । आसुरसंपदाख्या त्वशुभवासना तद्विरोधिनी हेया । दैवसंपदोऽसाधारणं कारणं सात्त्विकी श्रद्धा । आसुरसंपदस्तु राजसी तामसी चेति हेयोपादेयविभागेन कृत्स्नशास्त्रार्थपरिसमाप्तिः ।

तत्र 'योगस्थः कुरु कर्माणि' ( २।४८ ) इत्यादिना सूत्रिता सत्त्वशुद्धिसाधनभूता निष्कामकर्मनिष्ठा सामान्यविशेषरूपेण तृतीयचतुर्थाभ्यामध्यायाभ्यां प्रपञ्च्यते । ततः शुद्धान्तःकरणस्य शमदमादिसाधनसंपत्तिपुरःसरा 'विहाय कामान् यः सर्वान्' ( २ । ७१ ) इत्यादिना सूत्रिता सर्वकर्मसंन्यासनिष्ठा संक्षेपविस्तररूपेण पञ्चमषष्ठाभ्याम् । ततो वेदान्तवाक्यविचारसहिता 'युक्त आसीत मत्परः' ( २ । ६१ ) इत्यादिना सूत्रिताऽनेकप्रकारा भगवद्भक्तिनिष्ठाऽध्यायषट्केन प्रतिपाद्यते । तावता च तत्पदार्थो निरूपितः । ततस्त्वंपदार्थैक्यज्ञानरूपा 'वेदाविनाशिनं नित्यम्' ( २ । २१ ) इत्यादिना सूत्रिता तत्त्वज्ञाननिष्ठा त्रयोदशे प्रकृतिपुरुषविवेकद्वारा प्रपञ्चिता । ज्ञाननिष्ठायाश्च फलं 'त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन' ( २ । ४५ ) इत्यादिना सूत्रिता त्रैगुण्यनिवृत्तिश्चतुर्दशे सैव जीवन्मुक्तिरिति गुणातीतलक्षणकथनेन प्रपञ्चिता । 'तदा गन्तासि निर्वेदम्' ( २ । ५२ ) इत्यादिना सूत्रिता परवैराग्यनिष्ठा संसारवृक्षच्छेदद्वारेण पञ्चदशे । 'दुःखेष्वनुद्विग्नमनाः' ( २ । ५६ ) इत्यादिना स्थितप्रज्ञलक्षणेन सूत्रिता परवैराग्योपकारिणी दैवी संपदादेया, 'यामिमां पुष्पितां वाचम्' ( २ । ४२ ) इत्यादिना सूत्रिता तद्विरोधिन्यासुरी संपच्च हेया षोडशे । दैवसंपदोऽसाधारणं कारणं च सात्त्विकी श्रद्धा 'निर्द्वंद्वो नित्यसत्त्वस्थः' ( २ । ४५ ) इत्यादिना सूत्रिता तद्विरोधिपरिहारेण सप्तदशे । एवं सफला ज्ञाननिष्ठाऽध्यायपञ्चकेन प्रतिपादिता । अष्टादशेन च पूर्वोक्तसर्वोपसंहार इति कृत्स्नगीतार्थसंगतिरिति ।

सोऽयं गीताशास्त्रार्थः किमर्थमुपदिष्ट इत्येतद्विषये विदुषां मतभेदो दृश्यते । तत्र केचिज्ज्ञानोत्तरं निष्कामकर्मानुष्ठानार्थं स इति वदन्ति । केचिज्ज्ञानोत्तरं

भक्त्यर्थमित्याहुः । केचित्तु स्वधर्मानुष्ठानरूपनिष्कामप्रवृत्तिलक्षणधर्मद्वारा ज्ञाननिष्ठायोग्यताप्राप्त्यर्थमिति प्रतिपादयन्ति । तत्राऽऽद्यः कल्पोऽज्ञातो रामानुजाचार्याणाम् । मध्यमः कल्पो वल्लभाचार्याणां भक्तिमार्गिणां च । अन्त्यस्तु श्रीशंकराचार्याणामिति ज्ञेयम् ।

गीताशास्त्रस्य प्रयोजनं परं निःश्रेयसम् । निःश्रेयसं च द्विविधं—निरतिशयसुखाविर्भावो निःशेषानर्थोच्छित्तिश्च । तदुक्तं मधुसूदनसरस्वतीभिः—

सहेतुकस्य संसारस्यात्यन्तोपरमात्मकम् ।
परं निःश्रेयसं गीताशास्त्रस्योक्तं प्रयोजनम् ॥ इति ।

तच्च सर्वकर्मसंन्यासपूर्वकादात्मज्ञाननिष्ठारूपाद्धर्माद्भवति । आचार्यचरणैः प्रवृत्तिलक्षणो निवृत्तिलक्षणश्चेति द्विविधो वैदिकधर्म उक्तः। तत्र निवृत्तिलक्षणो धर्मः साक्षान्निःश्रेयससाधनम् । अयमेव च ज्ञाननिष्ठाज्ञानयोगेत्यादिशब्दैरुच्यते । प्रवृत्तिलक्षणो धर्मस्तु फलकामनयाऽनुष्ठीयमानोऽभ्युदयार्थो भवति । नामैहलौकिकपारलौकिकोत्कर्षं करोतीत्यर्थः । यदि तु स एव धर्मः फलाभिसंधिं त्यक्त्वा केवलमीश्वरार्पणबुद्ध्याऽनुष्ठीयते चेच्चित्तशुद्धये भवतीति तद्द्वारा परम्परया निःश्रेयससाधनं भवति । अयमेव निष्कामकर्मयोगः स्वधर्मानुष्ठानलक्षणः कर्मयोग इति चोच्यते । एवं च परमप्रयोजननिःश्रेयससाधनीभूता या ज्ञाननिष्ठा तद् गीताशास्त्रस्य प्रतिपाद्यमित्युक्तं भवतीत्यर्थः ।

नन्वत्र न केवलमात्मज्ञाननिष्ठैवोच्यते किंतु ' कुरु कर्मैव तस्मात्त्वम् ' इत्येवं कर्मनिष्ठाऽप्युक्ता । तथा च कथं गीताशास्त्रप्रतिपाद्यं ज्ञाननिष्ठैवेत्युच्यते इति चेत्। यद्यपि गीतायां कर्मनिष्ठाऽप्युक्ता तथाऽपि ज्ञाननिष्ठाशेषत्वेन सोक्ता। प्राधान्येन तु ज्ञाननिष्ठैवोक्ता। कस्मादिदं निश्चीयत इति चेत्पृच्छसि तर्हि वाक्यतात्पर्यनिर्णायकैरुपक्रमोपसंहारादिषड्विधलिङ्गैरिति गृहाण । यस्यां निष्ठायां षड्विधलिङ्गान्यन्वियुः सा निष्ठा गीताशास्त्रस्य मुख्यं प्रतिपाद्यमिति यावत् । तानि च लिङ्गानि मीमांसकैरित्थमभिहितानि—

उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥ इति ।

उपक्रमोपसंहारौ ( १ ) अभ्यासः ( २ ) अपूर्वता ( ३ ) फलम् ( ४ ) अर्थवादः ( ५ ) उपपत्तिः (६) इत्येवं षड् लिङ्गानि भवन्ति । तत्र प्रकरण-

प्रतिपाद्यस्यार्थस्य तदाद्यन्तयोः प्रतिपादनमित्येवंस्वरूपमुपक्रमोपसंहाराख्यमेकं लिङ्गम् । सोऽयमुपक्रमोपसंहारो गीताशास्त्र एवं दृश्यते—'अशोच्यानन्वशोचस्त्वम्०' ( २ । ११ ) 'तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि' ( २ । २५ ) 'एषा तेऽभिहिता सांख्ये बुद्धिः' ( २।३९ ) इत्येवं ज्ञानेन गीताशास्त्रमुपक्रम्य, उपसंहारोऽपि 'इति ते ज्ञानमाख्यातम्' ( ८ । ६३ ) 'सर्वधर्मान् परित्यज्य०' ( १८ । ६६ ) 'कच्चिदज्ञानसंमोहः प्रनष्टस्ते धनंजय' (१८।७२) 'नष्टो मोहः स्थितिर्लब्धा... स्थितोऽस्मि गतसंदेहः०' ( १८ । ७३ ) हेऽच्युत त्वत्प्रसादान्मोहो नष्टोऽथ चाऽऽत्मस्वरूपस्मृतिर्जाताऽतो गतसंदेहः स्थितोऽस्मीत्येवं ज्ञानेनैव कृतोऽस्ति । प्रकरणप्रतिपाद्यस्य तन्मध्ये पौनःपुन्येन प्रतिपादनमभ्यासः । सोऽप्यत्रैवं दृश्यते—'श्रद्धावान् लभते ज्ञानम्' (४।३९) 'यज्ज्ञात्वा न पुनर्मोहम्' (४।३५) 'ज्ञानं तेऽहं सविज्ञानम्' ( ७ । २ ) 'ज्ञानयज्ञेन' ( ९ । १५ ) 'ददामि बुद्धियोगम्' ( १० । १० ) 'मदनुग्रहाय परमं गुह्यमध्यात्मसंज्ञितम्' ( ११ । १ ) 'परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम्' ( १४ । १ ) 'एतद्बुद्ध्वा बुद्धिमान् स्यात्' ( १५ । २० ) 'बुद्धियोगमुपाश्रित्य' ( १८ । ५७ ) इत्येवमुपक्रान्तस्याऽऽत्मज्ञानस्यैव वारं वारमुल्लेखः कृतोऽस्ति । प्रकरणप्रतिपाद्यस्य प्रमाणान्तराविषयीकरणमपूर्वता । साऽप्यत्रैवम्—'नाहं प्रकाशः सर्वस्य०' (७।२५) 'कश्चिन्मां वेत्ति तत्त्वतः' ( ७ । ३ ) 'न तु मां शक्यसे द्रष्टुम्' ( ११ । ८ ) इत्येवं तत्र तत्र परमात्मस्वरूपज्ञानस्यापूर्वता व्यक्तीकृता । प्रकरणप्रतिपाद्यस्य तत्र तत्र श्रूयमाणं प्रयोजनं फलम् । तच्चाप्यत्रास्ति । यथा—'बहवो ज्ञानतपसा०' ( ४ । १० ) 'सर्वं ज्ञानप्लवेनैव०' ( ४ । ३६ ) 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन' ( ४ । ३७ ) 'यो मामजमनादिं च वेत्ति लोकमहेश्वरम् । असंमूढः स मर्त्येषु सर्वपापैः प्रमुच्यते' ( १० । ३ ) 'ये विदुर्यान्ति ते परम्' ( १३ । १४ ) 'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः । सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च' ( १४ । २ ) इत्येवं स्थले स्थलेऽज्ञाननिरासः सर्वकर्मदाहो दुरितध्वंसोऽग्रे मोक्षश्चेत्यात्मज्ञानस्य फलान्यभिहितानि । प्रकरणप्रतिपाद्यस्य तत्र तत्र प्रशंसनमर्थवादः । स चात्र यथा 'दूरेण ह्यवरं कर्म०' ( २ । ४९ ) 'श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परंतप०' ( ४।३३ ) 'नहि ज्ञानेन सदृशं पवित्रमिह विद्यते' ( ४ । ३८ ) 'ज्ञानी त्वात्मैव मे

मतम् ' ( ७ । १८ ) इत्येवं स्थले स्थले साक्षान्निन्दाद्वारा च ज्ञानं प्रशंसितम् । प्रकरणप्रतिपाद्यार्थसाधने तत्र तत्र श्रूयमाणा युक्तिरुपपत्तिः । साऽप्यत्र गीताशास्त्र इत्थं दृश्यते—'यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः । इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ' ( २ । ५८ ) ' तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया '( ४ । ३४ ) ' अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम् । अभ्यासयोगेन ततो मामिच्छाऽऽप्तुं धनंजय ' ( १२ । ९ ) 'बुद्धया विशुद्धया युक्तो०' ( १८।५१ ) इत्यारभ्य 'विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते । ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ' ( १८।५५) इत्येवमात्मज्ञाननिष्ठायां युक्तिः प्रदर्शिता । एवं मीमांसापद्धत्या गीताशास्त्रार्थस्य पर्यालोचनायां क्रियमाणायां तात्पर्यनिर्णायकानि षड् लिङ्गानि ज्ञाननिष्ठायां सामीचीन्येनान्वियन्तीति मुख्यतो ज्ञाननिष्ठायां गीताशास्त्रस्य तात्पर्यं पर्यवस्यतीति सिद्धम् ।

नन्वस्मिन् गीताशास्त्रे शंकराचार्यैर्भाष्यं व्यधायि । तेषां च मतं शुद्धचैतन्यातिरिक्तं निखिलमपि पदार्थजातं मिथ्या, केवलं शुद्धचैतन्यमेकमेव सत्यमित्यद्वैतम् । अद्वैतमभेदः । तथा मध्वाचार्यैरप्यत्र गीताशास्त्रे भाष्यं विरचितम् । तेषां च मतं द्वैतम् । द्वैतं भेदः । परिदृश्यमानस्यास्य चराचरप्रपञ्चात्मकस्य जगतः सत्यत्वम् । जीवानां बहुत्वं परस्परं भेदश्चेति । ततश्च नितरां संदेग्धि चेतः किमिदं गीताशास्त्रमद्वैतपरं द्वैतपरं वेति । अतः स्मृतस्योपेक्षानर्हत्वामिति न्यायमनुसृत्य भेदाभेदविचारः संक्षेपतः प्रस्तूयते—

तस्माद्वा एतस्मादात्मन आकाशः संभूतः । आकाशाद्वायुः । वायोरग्निः । अग्नेरापः। अद्भ्यः पृथिवी । पृथिव्या ओषधयः । ओषधीभ्योऽन्नम् ( तै० २।१) इति तैत्तिरीयोक्ताकाशवाय्वादिक्रमेणोत्पद्यमानेऽस्मिञ्जगति व्यवहारदशायां सर्वत्र सर्वैर्भेदोऽनुभूयते । किंतु परमार्थतोऽयं भेद एव सत्य आहोस्विदभेद इति संशयः ।

ननु भेदः प्रत्यक्षतोऽनुभूयते चेत्कुतः संशयः । मैवम् । घटशरावादीनामनेकेषामेकत्र मृदि लयदर्शनेनाऽऽकाशादिप्रपञ्चस्याप्येकत्र क्वचिल्लयस्यानुमानप्रमाणेन सिद्धत्वात् । यद्यप्यनुमानापेक्षया प्रत्यक्षस्य प्राबल्येन संशयोऽनुपपन्न एव

तथाऽप्यलातचक्रे प्रत्यक्षतो दृष्टेऽपि तत्रानुमानेन चक्राभावस्य निश्चयो जायते । तत्र प्रत्यक्षापेक्षयाऽप्यनुमानस्य प्राबल्यदर्शनात् । तथा च संशयः स्थिर एव । अस्मिंश्च संशये निर्णायकत्वेन श्रुतिरेवाऽऽस्थेया भवति । श्रुतिश्च महावाक्यादिभिरद्वैतमेव साधयति ।

ननु द्वैतवादिभिरपि महावाक्यानि द्वैतानुसारेण योजितानीति चेत् । किं ततः । प्रमाणान्तरेण द्वैतं सिद्धवद्गृहीत्वा श्रुत्यविरोधाय तथा श्रुतिर्योजिता । नतु द्वैतं श्रुतिप्रमाणेन साधितं भवति ।

ननु 'आत्मा वा अरे द्रष्टव्यः' इत्यादिश्रुतिर्द्वैतं प्रतिपादयतीति चेन्नैवम् । नेयं श्रुतिर्द्वैतं प्रतिपादयति किंतु द्वैतं सिद्धवद्गृहीत्वा ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादिकर्मकाण्डस्थश्रुतिवद्दर्शनश्रवणादिभिरात्मोपासनां विधत्ते । किंच 'आत्मा वा अरे द्रष्टव्यः' इत्यादिश्रुत्यर्थोपपादकं द्वैतम् । अद्वैतं तु साक्षाच्छ्रुत्यर्थ एवेति महान् विशेषः ।

किंच मोक्षावस्थाप्रतिपादिकायां 'यस्मिन् सर्वाणि भूतान्यात्मैवाभूद्विजानतः । तत्र को मोहः कः शोक एकत्वमनुपश्यतः' ( ईशा० ) इति श्रुतावेकत्वमनुपश्यत इत्येकत्वानुभवः सिद्धवदनूदितः । ननु 'आत्मा वा अरे द्रष्टव्यः' ( बृ० २ । ४ । ५ ) इति श्रुतौ भेदोऽपि सिद्धवद्गृहीत इति तुल्यमेवेति चेन्नैवम् । वैषम्यात् । आत्मा वा अरे, इति श्रुतौ भेदं सिद्धवद्गृहीत्वा केवले भेदे सति संभवि दर्शनादिकं प्रतिपादितम् । उक्तश्रुतौ तु न केवलमभेदः सिद्धवद्गृहीतः किंत्वेकत्वमनुपश्यत इत्येवं तमनूद्याभेदे सति संभवि शोकमोहाभावादिकं कार्यं प्रतिपादितम् । शोकमोहाभावरूपं कार्यमेकत्वानुदर्शनमूलकमेवेति तत्तात्पर्यम् ।

अयं भावः—तत्र को मोहः कः शोक इत्येकस्मिन् वाक्ये निर्दिष्टस्य शोकमोहाभावस्यैकत्वानुदर्शनस्य च मिथः संबन्धो वाच्यः । अत्र शोकमोहाभावश्च न नशब्देनोक्तः किंतु केवलं किंशब्देन शोको मोहश्चाऽऽक्षिप्तः । तेन चाऽऽक्षेपेण तन्निषेधो गम्यः । आक्षेपगम्यश्च निषेधः कारणनिषेधपर्यवसायी भवति । शोकमोहकारणं च सद्वितीयत्वदर्शनम् । तदुक्तम्—

अप्रियत्वे द्वितीयस्य सांनिध्यतदभावयोः ।
शोकमोहौ सुदुर्वारौ प्रियत्वे तु व्यतिक्रमः ॥ इति ।

तथा च तादृशसद्वितीयत्वरूपकारणनिषेध एव चैकत्वानुदर्शनमिति । अत्र निदर्शनम्—क्वचिज्जनसमाजे 'तव कान्यपत्यानि' इत्येवं पृष्टो देवदत्तादिः पुत्रद्वयं कन्या चैकेत्यादि यथायोगं वदति । ततः कश्चिन्निरपत्यो निरपत्यत्वेनाज्ञातस्तथा पृष्टश्चेत्पुत्रोऽपि नास्ति कन्याऽपि नास्तीति नशब्देन निषेधं प्रदर्शयति । ततः कश्चिद्ब्रह्मचारी ब्रह्मचारित्वेनाज्ञातस्तथा पृष्टश्चेत्पुत्रकन्ययोरभावेऽपि 'न पुत्रो नापि कन्या' इत्येवं नशब्देन निषेधमनुक्त्वा 'कुतः पुत्रः कुतः कन्या' इत्येवं पुत्रकन्ययोराक्षेपेण तयोर्निषेधमवबोधयति । आक्षेपगम्यनिषेधे च निषेध्यकारणस्यापि निषेधः पर्यवस्यति । 'विवाह एव नास्ति कुतः पुत्रः कुतः कन्या' इति तात्पर्यम् । एकत्वानुदर्शनं च सद्वितीयत्वप्रतीभावरूपं प्रकाशमात्रम्। इयमेवावस्था 'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति । एवं मुनेर्विजानत आत्मा भवति गौतम' ( कठ. २।१।१५ ) इति श्रुत्यन्तरेण प्रतिपाद्यते । 'यथा शुद्धे निर्दुष्टे जले निर्दुष्टं जलं प्रक्षिप्तं सद्यथा तद्रूपमेव भवति तथा पूर्वं भेदेन प्रतीतो ज्ञानिन आत्मा स्वरूपावबोधे परमात्मरूप एव भवति' इति तदर्थः ।

नन्वत्र श्रुतौ तादृगेव भवतीत्युच्यते । तादृक्शब्दस्य च तत्सदृश इत्यर्थः । तथा चाऽऽत्मज्ञोनात्तरमपि द्वैतं स्यात् । सादृश्यस्य भेदगर्भत्वादिति चेन्न । सादृश्यस्याभेदघटितस्यापि मञ्जूषायां साधितत्वात् । अनन्वयालंकारप्रकरणे सर्वैरेवाऽऽलंकारिकैस्तथा स्वीकारात् । ननु तथाऽप्युक्तश्रुतौ भेदघटितं सादृश्यं नास्तीत्यत्र किं प्रमाणमिति चेन्न । आसिक्तपदस्यैव तत्र प्रमाणत्वात् । द्वयोः शुद्धजलयोः सादृश्यस्य प्रक्षेपात्पूर्वमपि सत्त्वात् ।

यश्चायं द्वैतवादिनामुद्घोषः । यदद्वैतवादिभिरङ्गीकृतं जगतो मिथ्यात्वं तत्स्वयं सत्यमसत्यं वा । आद्ये द्वैतापत्तिः । अन्त्ये मिथ्यात्वस्यासत्यत्वे जगतः सत्यत्वं तदवस्थमेवेति ।

तत्रेत्थमुच्यते—जगतो मिथ्यात्वं स्वयं मिथ्याभूतमपि जगतः सत्यत्वं निराकरोत्येव । यथा स्वप्ने स्वप्नं दृश्यत इति सर्वेषामनुभवः । तत्र स्वप्नगते द्वितीये स्वप्ने दृष्टो हस्ती स्वप्नस्थत्वान्मिथ्येति प्रथमस्वप्ने पश्यति भाषते च तथैव । तदपि दर्शनं भाषणं च स्वप्नस्थत्वान्मिथ्येति जागृतौ पश्यति । तत्र हस्ती मिथ्या, इति दर्शनस्य भाषणस्य च मिथ्यात्वेऽपि न हस्तिनं स्वप्नदृष्टं सत्यतयाऽङ्गी करोति भवानपि । तथैवेदमिति बोध्यम् ।

यस्तु द्वैतवादिभिरद्वैतानुसारिषु ग्रन्थेषु मिथो विरोधः प्रदर्शितः—महावाक्यानां चिन्मात्रबोधकत्वं क्वचिदुक्तं क्वचिदैक्यबोधकत्वं क्वचित्तु बोधकत्वाभाव एवोक्त इति ।

स एष द्वैतवादिनां प्रलापोऽनादरणीय एव । महावाक्यघटकपदानां चिन्मात्रबोधकत्वेनैव ह्यैक्यबोधकत्वं भवति । तथा श्रुतेरपि जगदन्तःपातितया द्वैतनिषेधपर्यन्तमेव गतिः । द्वैतनिषेधे च श्रुतेरपि निषेधादग्रे बोधकत्वाभाव एव भवति । तथा चावस्थाभेदेन श्रुतीनामविरोध एव भवति ।

यदपि च ' उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ' ( ब्र० सू० २।१ ) इति सूत्रकारैर्ब्रह्मणः क्षीरदृष्टान्त आम्नातः । तथा च परिणामवाद एव सूत्रकाराणामभिमतः । दधि हि क्षीरस्य परिणाम एव न विवर्त इति द्वैतवादिभिरुक्तं तदतीव तुच्छम् । नैव दृष्टान्ते सर्वांशेन साम्यमपेक्ष्यते । इतरसाधनाभावेनैव ह्यत्र क्षीरसाम्यं ब्रह्मणोऽभिप्रेतम् । नहि परिणामवादिभिरपि क्षीरवद्ब्रह्म द्रवयुक्तं शुभ्रं स्तनान्निर्गतं चाऽऽश्रीयते ।

नन्वेतस्मिन्गीताशास्त्रे श्रीशंकराचार्याणां भाष्यं वर्तते । भाष्योपर्यप्यानन्दगिरीयं व्याख्यानं वर्तते । अन्यानि च बहूनां सुधियां पण्डितानां बहूनि व्याख्यानानि वर्तन्ते । प्रसिद्धतरं च टीकाष्टकमस्मिन् गीताशास्त्रे । नैतावदेव किंतु मुद्रितं चोपलब्धुं शक्यं चेति । सत्येवं किमर्थमिदं पुनश्चर्वितचर्वणायितमाधुनिकं व्याख्यानम् । तथा च प्राक्तनैर्व्याख्यातृभिः संपादितैर्व्याख्यानैरेवायं समग्रः शास्त्रार्थो निर्वोढुं शक्य इति चेद्भ्रान्तोऽसि । भाष्यस्य सूत्रसमत्वेनाल्पाक्षरत्वाद्गभीरन्यायसंदृब्धत्वाच्चापि गूढार्थकत्वान्मधुसूदनसरस्वतीप्रभृतिसंपादितव्याख्यानानामपि न्यायमीमांसादिशास्त्रान्तरीयसूक्ष्मसूक्ष्मतरार्थप्रतिपादकत्वेन तादृशशास्त्रान्तरीयकर्कशतर्कपरिष्कारादिकर्कशभाषाजालजटिलत्वाच्च यद्यप्युत्तमाधिकारिणस्तैरेव कृतार्था भवेयुस्तथाऽपि मध्यमाधिकारिणां न ततो यथावदर्थबोधो भवेत् । किंतु स्थले स्थले ते ते संशयाः प्रादुर्भवन्त्येव । तादृशसंशयाः कुशङ्काश्चापि मा प्रसाङ्क्षुरिति लोकव्यवहारदृष्टसुगमतर्कसुगमशब्दप्रयोगघटिता दृष्टान्तदार्ष्टान्तोपपत्तीनां यथावद्विस्तृतोपपादनेनातीव सुविशदीकृतात्मेयमद्वैताङ्कुशाभिख्या व्याख्या मन्दमध्यमाधिकारिजनानप्यनुजिघृक्षन्ती प्रावर्तत तत्र । निदर्शनमित्येकः श्लोकस्तदर्थस्तत्रत्यः संशय आक्षेपश्च प्रदर्श्यते—

तस्मात्प्रणम्य प्रणिधाय कायं प्रसादये त्वामहमीशमीड्यम् ।
पितेव पुत्रस्य सखेव सख्युः प्रियः प्रियायाऽर्हसि देव सोढुम् ॥
( भ. गी. ११ । ४४ ) इति ।

भगवन्तं प्रत्यपराधक्षमापनार्थमर्जुनस्योक्तिरियम् । तस्मादिति । यस्मात् 'सखेति मत्वा प्रसभं यदुक्तम् ' ( ११ । ४१ ) 'यच्चावहासार्थमसत्कृतोऽसि ' (११।४२) इत्येवं मया लोकत्रयेऽप्यप्रतिमप्रभावस्य तवापराधाः कृतास्तस्मादहमत्यन्तापकृष्टोऽहमीशमीशनशीलमीड्यं स्तुत्यं च त्वां प्रणम्य कायं प्रणिधाय नीचैः कृत्वा त्वां प्रसादये तव यथा मद्विषये प्रसन्नता स्यात्तथा प्रार्थये । प्रार्थनाप्रकारमेवाऽऽहोत्तरार्धेन—पितेवेत्यादि । यथा पुत्रस्यापराधं पिता सहते यथा च मित्रस्यापराधं मित्रं सहते यथा च प्रियाया अपराधं प्रियः सहते तथा हे देव ममापराधं सोढुमर्हसीति तदर्थः। एवमेव भाष्यकारप्रभृतिभिः सर्वैर्व्याख्यातृभिरयं श्लोको व्याख्यातः । प्रियायाऽर्हसीत्यत्र च्छान्दसः संधिरित्यप्युक्तम् । एवं सत्स्वपि व्याख्यानेषु तत्तात्पर्यमजानानानामत्रेत्थमाक्षेपा दृश्यन्ते—प्रणामादिकस्य स्वकीयाचरणस्य स्वयमाविष्करणं स्वयं स्वगुणवर्णनमिवानुचितम् । शान्तरसप्रधानेऽत्र वेदान्तशास्त्रे प्रियः प्रियाया इति शृङ्गाररसानुगुणो दृष्टान्तो नोचितः । प्रियायाः अर्हसीति पदद्वये प्रियायाऽर्हसीत्येवं संधिकरणं व्याकरणशास्त्रदृष्ट्याऽशुद्धम् । संधिनिर्वाहार्थं प्रियाय अर्हसीत्येवं पदच्छेदो युक्तः। संधिश्छान्दस इत्येवं वचनमज्ञानमूलकमित्यादि, इति ।

अत्र क्रमेणोत्तरं दातुमादौ प्रथम आक्षेपः प्रतिपाद्यते—नन्वत्र पूर्वार्धेऽर्जुनेन प्रणामकायप्रणिधानादिकं स्वकीयाचरणं यत्स्वोक्त्यैवाऽऽविष्कृतं तन्न युक्तम् । न ह्यर्जुनसदृशः प्रेक्षावान् स्वकीयमाचरणं स्वमुखेनैवोद्गिरति । किंतु 'ततः प्रणम्य प्रणिधाय कायं प्रसादितस्तेन स ईश ईड्यः' इत्येवं कव्युक्तित्वेन तादृशार्थस्यात्र

---

परैः प्रोक्ता गुणा यस्य क्षुद्रोऽपि हि महान् भवेत् ।
इन्द्रोऽपि लघुतां याति स्वयं प्रख्यापितैर्गुणैः ॥
न गुणो न च सौभाग्यं स्वयं स्वगुणवर्णने ।
यथैव च कुलस्त्रीणां स्वहस्तकुचमर्दने ॥
कर्मनाशाजलस्पर्शात्करतोयाविलङ्घनात् ।
गण्डकीबाहुतरणाद्धर्मः क्षरति कीर्तनात् ॥ इत्याद्यभियुक्तोक्तेरित्यर्थः ।

निबन्धनमुचितम् । ' एवमुक्त्वाऽर्जुनः संख्ये रथोपस्थ उपाविशत् । विसृज्य सशरं चापं शोकसंविग्नमानसः ' ( १ । ४७ ) इतिवत् । ननु तत्र तादृशोऽर्थः ' अधुनोपविशाम्येव रथोपस्थेऽत्र केवलम् । विसृज्य सशरं चापं शोकसंविग्नमानसः ' इत्येवमर्जुनोक्त्योपनिबद्धं इति चेत् । सत्यम् ।

यद्यप्येवं तथाऽपि तदानीमर्जुन आत्मानमत्यन्तापराधिनं मन्यमानो विषादातिशयग्रस्तो विवेकशिथिलस्तथा स्वयमुक्तवान् । सांप्रतमपि लोके काश्चिद्दारिद्र्यातिशयपीडितः क्षुधार्तः क्वचिद्गृहद्वार्यवस्थितोऽन्नं याचमानस्तथा ( तुमच्या पाया पडतो ) विलपन् दृश्यते । तेन च गृहे निवसतां मानसं दयार्द्रतां नीयते । प्रकृतेऽपि च भगवतो मानसं दयार्द्रतां निनीषन्नेवार्जुन ईदृशं वक्तुं प्रवृत्तः । भगवतो मानसं प्रकृत्यैव दयार्द्रमिति त्वन्यत् । एवं चात्र स्वोक्त्यैव स्वीयाचरणाविष्करणेनार्जुनस्य विषादातिरेको निरवधिः सूचितो भवतीति गुणावहैवात्र स्वोक्त्याऽऽविष्कृतिः । ( इति प्रथमाक्षेपस्योत्तरम् ) । पूर्वं भीष्मद्रोणादीन् दृष्ट्वा कथमेभिः सह युद्धं कार्यमित्येवं मायामोहितस्यार्जुनस्य यो विषादोऽभूत्स विषादो विराट्स्वरूपावलोकनानन्तरकालिकविषादवन्न परमावधिं गत इति तदानींतनाचरणस्य न स्वोक्त्याऽऽविष्करणं किंतु ' एवमुक्त्वाऽर्जुनः संख्ये ' इत्येवं कव्युक्तित्वेनोपनिबन्धनमिति भेदः। युक्तश्च विराट्स्वरूपावलोकनेनार्जुनस्य मनसि समुत्पन्नस्य विषादस्य परमावधिरतिरेकः। तथा हि—

भगवतो विराट्स्वरूपमदृष्टपूर्वं दृष्टवतोऽर्जुनस्य मनोवृत्तिरानन्दात्मिका विस्मयात्मिका भयात्मिका चाभूत् । तदानीमानन्दविस्मयभयानामतिरेकश्च तथाविधोऽभूद्यथा स तदानीं जीवन्नपि मृतवदेव मोहमूर्छित इवाभूत् । 'इदानीमस्मि संवृत्तः सचेताः प्रकृतिं गतः' ( ११ । ५१ ) इत्यग्रे पूर्ववत्सौम्यं भगवत्स्वरूपं दृष्टवतोऽर्जुनस्योक्तेः । तत्राऽऽनन्दो ' हृषितोऽस्मीति ' ( ११ । ४५ ) हृषितपदे-, विस्मयश्च 'विस्मयाविष्टः'(११।१४) इत्यनेन, भयं च 'भीतभीतः' (११।३५) भयेन च ' प्रव्यथितम् ' ( ११।४५ ) इत्यनेन स्पष्टमेवोक्तम् । विराट्स्वरूपावलोकनवेलायामानन्दविस्मयभयानि । तदनन्तरं च पूर्ववत्सौम्यरूपावलोकनकाले भगवतो दिव्यं रूपं स्मरतः क्व तन्महामाहिमशालि मनसाऽप्यचिन्त्यं भगवतो दिव्यं रूपं क्व चाहं कीट इव क्षुद्रतरः । मेरुसर्षपयोरिव महदेवैतदन्तरम् ।

तथाऽपि तादृशेन भगवता सह मित्रस्येव म आह्वानावहासादिकोऽत्यन्तानुचितो व्यवहार आसीदिति चिन्तयतश्च विषादः। यच्च तद्भगवतो दिव्यं रूपमर्जुनस्य मनस्यानन्दविस्मयभयानां परमावधिमतिरेकमजनयत्तद्विषादस्याप्यतिरेकं परमावधिं जनयेदेवेति युक्तमुत्पश्यामः। अत एव च 'सखेति मत्वा०' (११। ४१) 'यच्चावहासार्थमसत्कृतोऽसि० तत्क्षामये' (११।४२) इत्येवं स्वापराधोक्तिपूर्वकं क्षमा प्रार्थिता। तथा 'तस्मात्प्रणम्य० अर्हसि देव सोढुम्' (११। ४४) इत्येवं प्रकृतश्लोकेऽपि प्रणामकायप्रणिधान ( लोटांगण घालणे ) प्रभृतिस्वकीयाचरणोक्तिपूर्वकं क्षमा प्रार्थितेति बोध्यम्। अत्र च किं सोढुमर्हसीत्येवं सहनक्रियायाः कर्माकाङ्क्षायां 'तत्क्षामये' (११। ४२) इत्यत्र तच्छब्देन गृहीतमपराधजातमत्र संबध्यते। सहनक्रियाकर्मत्वेनैव तत्र तस्य निर्देशात्। अत्रापराधश्च भगवदननुगुणमर्जुनाचरणम्। तत्सहनं चापराधकार्यानुत्पादनम्। अपराधकार्यं चापराधिप्रत्यपकाराचिन्तनं प्रेमह्रासश्च। एतदपराधकार्यं चापराधज्ञानद्वारा बोध्यम्। तथा च मदीयापराधजातं क्षमस्वेत्येवमत्रार्जुनेन भगवान् प्रार्थ्यत इति सिद्धम्।

तत्र दृष्टान्तमाह—पितेव पुत्रस्येति। नन्वत्र कीदृशावस्थः पुत्रो ग्राह्यः। यतः पुत्रसंबन्धेन पितुराचरणस्यावस्थात्रयं दृश्यते—

लालयेत्पञ्च वर्षाणि दश वर्षाणि ताडयेत्।
प्राप्ते तु षोडशे वर्षे पुत्रे मित्रवदाचरेत्॥ इति।

ततश्चात्र पुत्रपदेन किं लालनावस्थो ग्राह्य उत ताडनावस्थोऽथवा मित्रसदृशावस्थ इत्येवं संशयः। नाऽऽद्यः। पित्रा स्वाङ्के गृहीतो बालो यद्धस्तप्रहारादिकं करोति तदनुचितमपि तदा बालस्तदनुचितमिति न मन्यते। पिताऽपि तथा न मन्यते। प्रत्युत तादृशावस्थस्य बालस्य हस्तपादचालनमुचितमेवेति मन्यते। तथा च तत्रापराध एव स्वरूपं न लभते दूर एव तत्सहनचर्चा। न तृतीयः। सखेव सख्युरित्यनेन गतार्थत्वात्पुनरुक्तिप्रसङ्गात्। नापि द्वितीयः। तत्र ताडनोक्त्याऽपराधसहनाभावेन दृष्टान्तासंभवात्। यदि च तत्र प्रत्यपकाराचिन्तनाभावमात्रेण प्रेमह्रासाभावमात्रेण वाऽपराधसहनमित्युच्यते तर्ह्यस्तु। इत एव वाऽरुचेर्दृष्टान्तान्तरमाह—सखेव सख्युरिति। अपराधी सखा ह्यपराधकाले स्वकीयमाचरणमनुचितमित्येवमपराधत्वेन जानाति। यस्य चापराधः सोऽपि सखा तदाचरणमपराधत्वेन जानात्येव। तथा सत्यपि नैव कश्चित्सखाऽपराधिनोऽपकारं

करोति किंत्वपराधं सहत एव तद्वदिति भावः । ननु यथा सखिकृतापराधं सखा सहते तद्वत्त्वं ममापराधं सहस्वेति पर्यवसितं भवति । सखा च पूर्वकृतोपकारस्मरणेन भाव्युपकारसंभावनया वा सखिकृतापराधं सहत इति तत्रापराधसहनमौपाधिकम् । तथाऽत्र भगवता कथमर्जुनकृतापराधः सोढव्यः । नह्यर्जुनेन भगवति पूर्वं कश्चिदुपकारः कृतः । अग्रेऽपि नैवार्जुनादुपकारसंभवः । भगवतः परिपूर्णशक्तित्वेन कस्या अपि न्यूनताया असंभवेनोपकारानवकाशात् । तथा च नायं दृष्टान्तः क्षोदक्षम इति चेत्—सत्यम् । उपकारसहनांशमात्रेण दृष्टान्ताभिधानात् । तथा च सहने यो हेतुविशेषस्तदंशेन साम्याभावेऽपि न क्षतिरित्याशयः । हेतुविशेषसाम्येनापि दृष्टान्तमाह—प्रियः प्रियाया इति । भार्या ह्यपराधकाले स्वकीयाचरणं भर्तुरननुगुणमिति जानाति । भर्ताऽपि तदा तथा जानात्येव । तथाऽपि कश्चिद्भर्ता न भार्यां ताडयति नापकारं चिकीर्षति नापि च प्रेमशैथिल्यमापादयति किंतु केवलमपराधं सहत एव । यतस्तदपराधज्ञानं विद्युल्लवनमिव क्षणिकं क्षणान्तरास्पर्शि भवति । अत एव तत्कार्योत्पादनाय न प्रभवति । एवं च यथा भार्याकृतापराधज्ञानं पत्युर्जायमानमपि प्रेमातिरेकेणाऽऽकालिकं क्षणान्तरास्पर्शि कार्याक्षमं जायते तथा मदीयापराधज्ञानं भगवतस्तव जायमानमपि प्रेमातिरेकेणाऽऽकालिकं क्षणान्तरास्पर्शि कार्याक्षमं भवत्विति प्रार्थ्यतेऽर्जुनेन भगवानिति बोध्यम् ।

ननु भार्यायां भर्तुः प्रेमातिरेके कामो हेतुरत्र त्वर्जुने भगवतः प्रेमातिरेके भक्तिर्हेतुरिति वैषम्यमत्राप्यस्त्येवेति चेदीदृशवैषम्यस्यावर्जनीयत्वेनाकिंचित्करत्वात् । सर्वांशसाम्ये हि दृष्टान्तदार्ष्टान्तिकभाव एव न घटते । एतेन शान्तरसप्रधानेऽत्र वेदान्तशास्त्रे प्रियः प्रियाया इति शृङ्गाररसानुगुणो दृष्टान्तो नोचित इत्यपास्तम् । अत्र शृङ्गाररसस्य प्रतीतावपि तस्य दृष्टान्तगतत्वेन शान्तरसव्यधिकरणत्वात् । ‘ आश्रयैक्ये विरुद्धो यः स कार्यो भिन्नसंश्रयः ’ का० प्र० ७ ) इत्युक्तरीत्याऽत्र शृङ्गारशान्तयोर्व्याश्रयत्वस्य स्पष्टत्वात् । दृष्टान्तगतो यः शृङ्गाररसानुगुणांशस्तेन दृष्टान्तदार्ष्टान्तिकयोः साम्यस्य विवक्षितत्वे हि स्यान्नाम तथा दोषः । प्रकृते तु तेनांशेन वैषम्यमेव । वैषम्यं च वस्तुगतं विद्यत इत्येव ननु वाक्यार्थानुबन्धि । अतो नैव तेन वाक्यार्थबोधेंऽशतोऽपि हीनतेति तस्य दोषत्वाभावात् । वाक्यार्थबोधान्तरायो हि दोषबीजम् । किंच नैव प्रियः

प्रियाया इति पदद्वयश्रवणमात्रेण शृङ्गाररसाविर्भावो भवति ‘ निर्भर्त्सयन्नाचरणं तदीयं प्रियः प्रियाया जनयत्यमर्षम् ’ इतिवत् । ( एतेन द्वितीयाक्षेपस्योत्तरमुक्तम् ) ।

अत्रेदं बोध्यम्—विषादातिरेकग्रस्तमना अर्जुनः स्वकीयाचरणं स्वोक्त्यैव पूर्वार्धे आविष्कृतवानिति पूर्वमुक्तमेव । तथैव विषादातिरेकग्रस्तमना आत्मानमत्यन्तापराधिनं मन्यमानो भगवन्तं प्रार्थयितुं प्रवृत्तः कदा भगवत्प्रसादं लभेयमिति संभ्रान्तस्त्वरया वक्तुं प्रवृत्त इति तदुक्तौ ‘ प्रियः प्रियाया इव ’ इत्यत्रत्य इवशब्दो गलितः । पदच्युतिरियं त्वराद्योतिकेति गुण एव । एवमेवार्हसीत्यत्राऽऽद्योऽकारः, हे सखेति ( ११।४१ ) इत्यत्रेतिशब्दावयव आद्य इकारश्च मनःसंभ्रमेण गलित इति तादृश्यक्षरच्युतिरपि त्वराद्योतिकेति गुण एव । ईदृशस्थले च शब्दानुच्चारणेऽपि तदर्थलाभः सुलभ एव । वर्णानुच्चारणं हि द्विविधम् । उच्चारणानुगुणव्यापारवैचित्र्यात् । वर्णोच्चारणस्य हीत्थं प्रक्रिया—किंचिद्वक्तुं प्रवृत्तस्य मनुष्यस्य मनसा समाहतः कायाग्निर्मारुतमूर्ध्वं प्रेरयति । स ऊर्ध्वं प्रेरितो वायुर्जिह्वाग्रोपाग्रादीनां कण्ठताल्वादिस्थानैः सह तत्तद्वर्णोच्चारणानुगुणसंयोगविशेषजनकं व्यापारविशेषं प्रतिक्षणमन्यमन्यं जनयति । ते च व्यापारविशेषाः क्रमशो जायमानाः स्वस्वानुगुणान् वर्णान् क्रमशोऽभिव्यञ्जयन्ति । एवं स्थिते यत्र वक्तुर्मनसि कस्यचिच्छब्दस्यानुच्चारणमुद्दिष्टमेव भवति तत्र तादृशेन मनसा समाहतेन कायाग्निनोर्ध्वं प्रेरितो वायुस्तादृशशब्दघटकवर्णोच्चारणानुगुणान् जिह्वाग्रादिव्यापारान्नैव जनयति । अयमेकोऽनुच्चारणप्रकारः । यत्र तु न तथोद्दिष्टं किंतु केवलं संभ्रान्तमनास्त्वरया वक्तुं प्रवर्तते तत्र स ऊर्ध्वं प्रेरितो वायुस्त्वरान्वित एकस्मिन्नेव क्षणेऽनेकवर्णानुगुणाननेकान् व्यापारविशेषान् क्रमशोऽपि युगपदिव जनयितुं प्रवर्तते । तत्र केचिद्व्यापारा अलब्धावकाशाः स्वानुगुणान् वर्णान् व्यञ्जयितुं न प्रभवन्ति । अयं हि द्वितीयोऽनुच्चारणप्रकारः । अत्राऽऽद्ये वर्णानुच्चारणं क्रियते द्वितीये तु वर्णानुच्चारणं जायत इति विशेषः । अयं चापरोऽत्र विशेषः—श्रोतुः प्रथमतः शब्दज्ञानं ततस्तदर्थस्मरणं ततो वाक्यार्थावबोधो जायते । तत्राऽऽद्ये प्रकारे श्रोतुरनुच्चारितशब्दार्थज्ञानं वाक्यार्थावबोधकालेऽध्याहारलभ्यम् । द्वितीये तु प्रकारे श्रोतुः शब्दश्रवणसमकालमेवानुच्चारितशब्दस्फुरणम् । तच्चाध्याहारमन्तरेणैव निसर्गत एव जायते । तथा हि—तादृशशब्दोच्चारणजनकव्या-

पारस्य व्यापारान्तरसंमर्दैन तज्जन्योच्चारणस्य स्पष्टत्वाभावेऽपि तस्य सूक्ष्ममुच्चारणं जायत एव । तादृशसूक्ष्मोच्चारितशब्दोपरक्तपूर्वपरशब्दश्रवणाद्वक्तृवैशिष्ट्याच्च श्रोतुर्मनसि सूक्ष्मोच्चारितस्यापि शब्दस्य स्फुरणं भवति । किंचात्राऽऽद्यः प्रकारोऽर्थवत्येव संभवति । द्वितीयस्तु प्रकारोऽर्थवति चानर्थके चैकस्मिन् वर्णे वर्णसमुदाये वा संभवति । तथा चात्र 'प्रियः प्रियाया इवार्हसि देव सोढुम्' इत्यत्राक्षरद्वयात्मकस्यानर्थकस्य 'इवा' इति भागस्य पूर्वोक्तप्रकारेण त्वरावशात्स्पष्टमनुच्चारणं संभवतीतीवशब्दस्यार्हसीत्यत्राकारस्य चेति पृथक्च्युतिद्वयं न कल्पनीयं भवति । ननु च्युतिद्वयकल्पने वैकच्युतिकल्पने वोभयथाऽपि 'र्हसि' इत्यस्यासाधुत्वं स्यात् । अकारलोपस्य शास्त्रीयत्वाभावादिति चेन्नैवम् । अनुकार्यस्यानर्थकस्यासाधुत्वेऽप्यनुकरणस्यासाधुत्वाभावात् । अनुकरणं ह्यनुकार्येणैवार्थवद्भवति । एवं च्युतिप्रकल्पनयोपमा सिध्यति । च्युत्यकल्पने त्विवशब्दाध्याहारेणोपमोपपादनीया । आवश्यकी चेयं प्रियः प्रियाया इवेत्युपमेति प्रागुपपादितमेव । अध्याहारपक्षे प्रियायार्हसीति संधिरार्षः । उपपत्तिस्तु तत्राऽऽतिदेशिकमनित्यमिति 'पूर्वत्रासिद्धम्' (८।२।१) इत्यातिदेशस्यानित्यत्वेन यलोपस्य सिद्धत्वात्सवर्णदीर्घः सुलभ इति । इयं च रीतिरत्राकारच्युतिपक्षेऽप्यवश्यं शरणीकरणीयैव । अन्यथाऽत्रैव प्रिय इति पदे प्रियाया इति पदे च रुत्वस्यासिद्धत्वाद्रोरुकारस्येत्संज्ञालोपयोरभावप्रसङ्ग इति स्पष्टमेव व्याकरणदर्शने । (इदं तृतीयाक्षेपस्य समाधानम्) । एतेनात्र 'प्रियाय' इति पदच्छेदं कल्पयन्तः परास्ताः । अयं हि तेषामाशयः—अत्र चतुर्थ्यन्तः प्रियशब्दो निर्दिश्यते । न तु षष्ठ्यन्तः प्रियाशब्दः । उपमाद्वयमेवात्र । प्रियः प्रियायेति पदद्वयं दार्ष्टान्तिकार्थसंबद्धम् । प्रियायेति च षष्ठ्यर्थे चतुर्थी । यथा पुत्रस्यापराधं पिता सहते यथा वा सख्युरपराधं सखा सहते तथा हे देव प्रियस्त्वं प्रियस्य ममापराधं सोढुमर्हसीत्यर्थः । अत्र च नेवशब्दाध्याहारक्लेशः । नापि संधेरार्षत्वकल्पनं नापि च शान्तरसप्रधानेऽस्मिन् गीताशास्त्रे 'प्रियः प्रियायाः' इति शृङ्गाररसानुगुणवर्णनमनुचितमिति दोष इति । वयं तु पश्यामः किमत्राऽऽनुगुण्यं तैः संपादितमिति । यदुक्तमिवशब्दाध्याहारक्लेशो नेति न तद्युक्तम् । इवशब्दच्युतौ स्वीकृतायामध्याहारस्यैवाभावात् । अध्याहारपक्षेऽप्यत्र क्लेशो नास्त्येव । तदुक्तमध्याहारतत्त्वज्ञैः—

अध्याहारस्तु तेनैव दोषावह उदीरितः ।
तदर्थस्य विवक्षाऽस्ति न वेति यदि संशयः ॥
संशये हि विलम्बेन वाक्यार्थावगतिर्यतः ।
विविक्षा निश्चिता स्याच्चेदध्याहारो न दुष्यति ॥
यतस्तत्राविलम्बेन जायते श्रोतुरर्थधीः ॥ इति ।

एतदुक्तं भवति । अध्याहारक्लेशश्च मानसः । पदार्थज्ञानोत्तरं वाक्यार्थज्ञानमिति क्रमः । तत्र वाक्यार्थज्ञानसाधनीभूते पदार्थज्ञाने यदि काचिन्न्यूनता स्याच्चेत्तर्हि तां दूरीकर्तुं याऽध्याहारकल्पनादिव्यापारान्तरासक्तिर्मनसो जायते स मानसः क्लेशः । स चाध्याहारस्थले सर्वत्रैव भवतीति न नियमः । यत्र हि पदार्थज्ञानसमय एवाध्याहृतपदार्थज्ञानं संस्कारविशेषाद्भवति तत्र न क्लेशः । संस्कारविशेषश्च पूर्वोपक्रान्तार्थज्ञानात्परिस्थित्यवलोकनाद्वा जायते । लोके हि क्वचिद्गवाक्षद्वारा वहन्तं वायुमसहमानेन रोगिणा द्वारमित्युक्ते सद्य एव परिस्थितिज्ञस्य श्रोतुर्मनसि पिधेहीति पिधानक्रियास्फुरणं भवति । प्रकृते च प्रथमान्तं षष्ठ्यन्तं चेति पदद्वयमिवशब्दसहितं ' पितेव पुत्रस्य ' इति ' सखेव सख्युः ' इति च द्विः प्रयुक्तमिति तच्छ्रवणजन्यसंस्काराहितमनसस्तदग्रे प्रियः प्रियायाः ' इत्येवं प्रथमान्तं षष्ठ्यन्तं चेति पदद्वयप्रत्यभिज्ञया पूर्वसदृश एवार्थोऽत्रोपनिबध्यत इति जानतश्च सद्य एवेवार्थस्फुरणं युक्तमेव । तस्मादीदृशस्थले व्यापारान्तरासक्तिरूपक्लेशस्याभावेन दूषकताबीजस्याभावान्नाध्याहारस्य दुष्टत्वमिति विभावनीयं सूरिभिः ।

यच्च प्रियायेति चतुर्थ्यन्तपदच्छेदे संधेरार्षत्वकल्पनं नेत्यानुगुण्यं प्रदर्शितं तत्रैकं संधित्सतोऽपरं प्रच्यवत इति न्यायापातः । संधेरार्षकत्वकल्पनं दूरीकुर्वतः षष्ठ्यर्थे चतुर्थ्या आर्षत्वकल्पनं गले पततीति । किंच संधेरुपपत्तिः प्राक्प्रदर्शिता । षष्ठ्यर्थे चतुर्थ्या उपपत्तिस्तु केवलं ' व्यत्ययो बहुलम् ' ( पा० सू० ३ । १ । ८५ ) इत्येवं बाहुलकं शरणीकरणीयम् । किंच यः संधेरुपपत्तिप्रकारः स चतुर्थ्यन्तपदच्छेदेऽपि प्रिय इति पदे त्वयाऽप्यङ्गीकर्तव्य एव । किंच बाहुलकानुसरणेऽपि यो विभक्तिव्यत्ययो दृश्यते तत्र षष्ठ्यर्थेऽन्या विभक्तिः प्रायो न दृश्यते । षष्ठ्येवान्यविभक्त्यर्थे दृश्यते । किंचात्र गीताप्रणेत्रा तथाऽत्र चतुर्थी निर्दिष्टा स्यादित्यत्र न कंचिद्धेतुं पश्यामः । न 'प्रियस्य'

इति षष्ठीनिर्देशे छन्दोभङ्गापत्तिः । प्रत्युतार्थौचित्यसौलभ्यमेव । यच्च प्रियाया इति षष्ठ्यन्तपदच्छेदे शान्तरसप्रधानेऽस्मिन्गीताशास्त्रे शृङ्गाररसानुगुणवर्णनमनुचितमिति दोषप्रदर्शनं कृतं तत्प्रागेव दत्तोत्तरम् ।(इति चतुर्थाद्याक्षेपस्योत्तरम्)। सोऽयं श्लोकष्टीकाकारैरेव केनचित्प्रसङ्गेन स्वातन्त्र्येण व्याख्यातः। स यथावस्थित एव मयाऽत्र दृष्टान्तत्वेन निवेशितः। एवमद्वैताङ्कुराख्यटीकानुसारेण गीताशास्त्रार्थयोजने कृते सत्येतादृश्यः शङ्काः कुशङ्काश्च नैव प्रादुर्भवन्ति । किंतु गीताशास्त्रप्रणेतुर्भगवतो मनसि यादृशोऽर्थो गूढतयाऽवस्थितः स तादृश एव यथावस्थितः सारल्येनाक्लेशेनापि च श्रोतुर्मनसि स्पष्टतयाऽऽविर्भवतीत्येतादृशमहिमशालिनीयमद्वैताङ्कुराख्या व्याख्या सर्वोत्कर्षेण वर्तते । अत इयमवश्यं संग्राह्या । अस्याः संग्रहे क्रियमाणे सत्यन्यासां सर्वासां व्याख्यानां संग्रहफलं लभेदित्याशास्य समर्पयत्यमुं लेखं श्रीसच्चिदानन्दाख्यस्य संस्थाधीशितुश्चरणकमलयोः—

| | |
|---|---|
| पुण्यपत्तने कार्ति० शु०<br>चतुर्थ्यां शुक्रवासरे<br>शके १८६० । | आनन्दाश्रमस्थप्रधानग्रन्थावलीसंस्करणाधिकृतो **मारुलकरोपाह्वः**<br>**शंकरशास्त्री–भारद्वाजः**। |

# अद्वैताङ्कुरटीकासहितगीताध्यायद्वयस्थविषयानुक्रमणिका ।

—:०:—

**समाप्ता विषयानुक्रमणिका।**

श्री. म. भ. विद्वद्रत्न—वासुदवशास्त्रिप्रणीताद्वैताङ्कुराख्यटीकासंवलितौ

# श्रीमद्भगवद्गीतायाः प्रथम-द्वितीयाध्यायौ ।

## पूर्वपीठिका ।

अथ गीतातात्पर्यसारः प्रारभ्यते ।

आत्मयाथात्म्यावबोधो विद्युद्दीप इव स्वयम् ।
द्योतते यत्र नैव स्यादज्ञानतमसः प्रभा ॥

श्रीमन्महाभारते भीष्मपर्वणि युद्धारम्भसमये शोकाविष्टस्यार्जुनस्य शोकनिरासपूर्वकयुद्धप्रवृत्तिस्थैर्यसंपादनाय श्रीभगवता तदानीमवश्यवक्तव्यतया ये वेदान्तशास्त्रीयसिद्धान्ताः समुपस्थितास्तं तमर्जुनमनोवृत्तिविशेषं समनुसृत्योक्ताः श्रीव्यासमहर्षिभिर्ग्रथितास्तदिदं गीताशास्त्रमिति व्यपदिश्यते । तत्र च सूत्रीभूतो द्वितीयाध्याय इति प्रसिद्धमेव । अस्य च भगवद्गीताभिधेयस्य ग्रन्थस्य वेदान्तशास्त्रीयग्रन्थेषु प्रामुख्येण गणना संदृश्यते । वेदान्तशास्त्रं हि मोक्षतत्साधननिरूपणपरम् । तत्र श्रुतावुपनिषद्भागे मोक्षस्वरूपं तत्साधनीभूतमात्मज्ञानमिति तदर्थमात्मस्वरूपं च प्राधान्येन बहुशो वर्णितम् । किंतु तादृशानां श्रुतिवाक्यानां मिथः समन्वयो यावन्नाधिगतो भवेद्यावच्च लोके प्रसिद्धिमागतैः कापिलादिदर्शनैः सह प्रतिभासमानस्य विरोधस्याकिंचनकारित्वं नावगतं भवेद्यावच्चाऽऽत्मज्ञानमोक्षयोः साधनसाध्यभावः कया विधया संभवतीत्येतन्न निश्चितं भवेद्यावच्च मोक्षस्य सर्वातिशायित्वं न प्रतीतिपथमवतरेत्तावदुपनिषदः स्वोद्देश्यं साधयितुं न प्रभवन्तीत्यालक्ष्य श्रीमद्बादरायणाचार्यैरध्यायचतुष्टयात्मकेन ब्रह्मसूत्रेण क्रमशः समन्वयाविरोधसाधनफलविचारः कृतः। अतश्चोपनिषदो ब्रह्मसूत्राणि च वेदान्तशास्त्रीयग्रन्थेषु प्रामुख्येण गणनामर्हन्त्येव । वेदान्तशास्त्रीयत्वेन प्रसिद्धा इतरे च प्रायो ग्रन्थाः केचिदुपनिषदां ब्रह्मसूत्राणां च टीकारूपाः केचिच्चोपनिषत्सु ब्रह्मसूत्रेषु च संक्षेपेणाभिहितस्यार्थस्य विस्तरेण प्रतिपादकाः

संदृश्यन्ते । वेदान्तशास्त्रेण च यदवश्यं निरूपणीयं तदेतावता यद्यप्यवसितं तथाऽपि न तावता पर्याप्तिः शास्त्रस्य जायते । यावद्धि तस्य प्रयोगावस्थां संपादयितुं प्रयोगाश्रयस्य मुमुक्षोर्योग्यता न साधिता तावद्व्यर्थप्रायमेव तत् । यथा बालरोगचिकित्सायां तादृशरोगविनाशक औषधे वैद्येन समुपदिष्टे तन्निष्पादनसाधने च समुपदिष्टे यदि तत्रात्यन्तदुराग्रही बालो दौर्मनस्यातिशयान्न कथमपि कटुरसाविष्टं तदौषधं गृह्णीयाच्चेत्स वैद्यकृत उपदेशो व्यर्थप्राय एव भवति तद्वत् । तत्र चौषधग्रहणोपाया अनेके मात्रादिभिः संप्रयुज्यमानाः संदृश्यन्ते । तथा हि—१ काचित्तत्रत्यान्तर्गतकटुद्रव्यप्रहाणेन तत्स्थाने तद्गुणकं द्रव्यान्तरं संयोज्य मधुरमौषधं संपादयति । २ कदाचित्तु कटुद्रव्यं तदवस्थमेवान्तर्निधायैव गुटिकां कृत्वा बहिः शर्करयाऽभितः संपुटितां तथा विधत्ते माता यथा बालस्तत्रत्यकटुरसमज्ञात्वा माधुर्याक्रान्तामेव तां मन्यमानो भक्षयितुं प्रवर्तते । ३ क्वचित्त्वन्यः प्रकारो दृश्यते—'भो बाल पश्येममग्रतः प्रफुल्लं वृक्षम् । स्वदते नु तवायम् । पश्य कीदृशमिदं पुष्पम् । तवापेक्ष्यते चेद्दास्यामि ' इत्येवं काचिद्न्यं संवादमुपक्रम्य यावत्तेन विषयान्तरसंवादेनान्यत्रमनाः स बालः स्यात्तावदेव तथा संवदन्त्येव च तमौषधं प्राशयति । ४ क्वचित्तु तदानीमन्यमुपायमप्रश्यन्ती माता स्वाभीष्टसाधनाय बलात्कारेणौषधं प्राशयितव्यमिति मतिं कुरुते । तदा च बालस्य हस्तौ हस्तेन धृत्वाऽङ्गुल्या च तस्य मुखमुद्घाट्य पात्र इव तन्मुखे तदौषधं निक्षिपति । अगत्या च स बालस्तदानीमनिच्छन्नपि तदौषधं गिलतीत्येव । ५ क्वचित्तु माता खण्डशर्करादीन्मधुरान्पदार्थान्संदर्श्य तद्धस्ते प्रस्थाप्यैव वा 'शीघ्रमौषधं गृहीत्वा सद्य एव भक्षयेमं पदार्थम्' इत्येवं बालं प्रलोभयति । ६ क्वचित्त्वेवं सामप्रयोगो दृश्यते । यथा 'ममायं बालो नैव चैत्रादिवन्मूर्खः, औषधं चाञ्जसैव गृह्णाति ' इत्येवं समीपावस्थितां काञ्चिदन्यां स्त्रियं प्रति प्रकथयन्ती ' कथं प्राशो नु त्वम् । गृहाण तर्हीदं सद्य एवौषधम् ' इत्येवं स्वीयं बालं प्रति संभाषमाणा तदौषधं ग्राहयति । ७ क्वचित्त्वेवं दृश्यते गुरूणामत्राऽऽगमनसमयोऽयं यावच्च तेऽत्र न समागतास्तावदेव गृहाणेदम् । इतरथा त्वौषधमगृह्णानं दुराग्रहाविष्टचेतसं त्वां संप्रेक्ष्याचिरादेव ताडयिष्यन्ति ' इत्येवं गिरमुदीरयन्त्येव ताडनभयेन तमौषधं प्राशयति । ८ क्वचित्तु मातेत्थं बालं बोधयति—गृहाणैतदौषधमिदानीमेवेतरथा श्वस्ते महती व्यथा स्यादिति । ९ क्वचित्तु प्रकारान्तरेण बोधयति—अतीव गुणकार्येतदौषधं शीघ्रं गृहाणेदं

कटुकमप्येतन्नेत्रे निमील्य भक्षयेति । बालोऽपि प्रौढ उक्तावबोधसमर्थश्चेन्मातृकृतोपदेशानुसारेण प्रवर्तते । अत्रेदमवधेयम्—औषधग्रहणोपाया हि केचिद्रोगिणोऽज्ञानेन 'अहं रोगी' इत्येवमजानतस्तादृशज्ञानमनुत्पाद्यैवौषधं ग्राहयन्ति । केचित्तूपाया रोगिणस्तादृशज्ञानमुत्पाद्य पूर्वमेव तादृशज्ञानवतो वा रोगिणो रोगनिवृत्तीच्छां समुत्पाद्यौषधं ग्राहयन्ति । पूर्वमेव तादृशेच्छावतस्तु स्वत एवौषधग्रहणे प्रवृत्तिः स्यात् । कदाचित्तु तत्रापि कटुरसादिद्वेषेणाप्रवृत्तावौषधग्रहणे प्ररोचनार्थमुपायस्याऽऽवश्यकता प्रतीयते । अज्ञानिनो रोगिणो हि कटुरसादिविषयकद्वेषबुद्धिरौषधग्रहणे प्रतिबन्धिका भवति । अतस्तत्र तादृशप्रतिबन्धकबुद्धेरभावः साधनीयः । उक्तेषु च नवसूपायेषु प्रथमे कटुरसस्यैवाभावसाधनेन, द्वितीये सतोऽपि कटुरसस्य निह्नवेन, तृतीये कटुरसस्य सत्त्वेऽपि तस्यानिह्नुतत्वेऽपि च तद्विषयकबुद्धेरभावसाधनेन, चतुर्थादिषु च कटुरसस्य सत्त्वेऽपि तस्यानिह्नुतत्वेऽपि तद्विषकबुद्धिसत्त्वेऽपि च तस्याः प्रतिबन्धकत्वाभावसाधनेनौषधग्रहणे रोगिणः प्रवृत्तिर्भवति । तत्र कटुरसादिद्वेषबुद्धेः प्रतिबन्धकत्वाभावसाधनं च चतुर्थे प्रतिबन्धकर्मणि हस्तपादादिसहायाभावसंपादनेन, पञ्चमे खण्डशर्करादिमधुररसास्वादलोभेन, षष्ठे त्वं प्राज्ञोऽसीत्येवं प्राज्ञत्वारोपेऽपि स्वस्मिन्वस्तुत एव प्राज्ञत्वबुद्ध्या, सप्तम औषधाग्रहणे गुरुजनास्ताडयिष्यन्तीत्येवं ताडनभयेन, अष्टम औषधाग्रहणे रोगस्याऽऽधिक्ये पीडातिशयः स्यादित्येवं पीडातिशयभयेन, नवम औषधग्रहणेन रोगो विनङ्क्ष्यतीत्येवं रोगनिवृत्तीच्छोत्पादनेन जायते । एवं च यथा बालस्य तत्तदवस्थोचितैस्तत्तत्समयोचितैश्चानेकैरुपायैरौषधं प्राशयति रोगविनाशाय माता तथा भवरोगविनाशाय तादृशरोगग्रस्तानां जन्तूनां तत्तदवस्थोचितैस्तत्तत्समयोचितैश्चानेकैरुपायैरात्मज्ञानरूपमौषधं प्राशयितव्यं किल । तत्र मातृस्थानीयेयं श्रीमद्भगवद्गीतेति बोध्यम् । तत्र लोके बालस्य रोगविनाशकौषधग्रहणाय मात्रादिभिः प्रयुज्यमाना य उपायाः पूर्वमुक्तास्तेषु जन्तूनां भवरोगविनाशकौषधग्रहणे क उपाया उपयोजयितुमर्हाः कति च गीतायां समाश्रयितुमर्हा इतीदमिदानीमुच्यते । पूर्वोक्तेषु नवसु लौकिकेषूपायेषु १ प्रथम उपायोऽत्र भवरोगविनाशकौषधग्रहणे नोपयुज्यते । तत्र हि बालेनापरित्याज्यस्यौषधान्तरस्य पुरस्कारः । भवरोगविनाशकमौषधं त्वेकमेव श्रुतिसूक्तमात्मज्ञानाख्यम् । न केवलमेकमुक्तमित्येव, किंतु 'ज्ञानादेव तु कैवल्यम्' इत्येवकारेणौषधान्तरं व्यवच्छिद्यते । 'नान्यः

पन्था अयनाय विद्यते ' इत्येवं नञा च स्पष्टमेवौषधान्तरं प्रतिषिध्यते । अतो नात्रौषधान्तरस्य पुरस्कारः कर्तुं शक्यः । द्वितीयोपायविषये त्वग्रे वक्ष्यते । तृतीयश्च य उपायो बालस्यान्यत्रमनस्त्वसंपादनरूपो मात्रा प्रयुज्यते सोऽपि प्रकृते भवरोगविनाशकात्मज्ञानरूपौषधग्रहणे नोपयुज्यते । बालस्य हि तदभिरुचितविषयान्तरव्यग्रमनसो मनोवृत्तौ यावदौषधग्रहणं विषयतां नापद्यते तावदेव तन्मुखे मातौषधं प्रक्षिपति । प्रक्षेपानन्तरं च यद्यपि सद्यस्तत्क्षण एवौषधग्रहणं तदीयमनोवृत्तिविषयतामापद्यते तथाऽपि तस्मिन्नेव क्षणे तेन सममेव तस्यौषधस्य गलबिलस्याधस्तात्प्रवेशः । तथा चाज्ञानावस्थायामेवौषधग्रहणं भवतीत्यतोऽनिच्छन्नपि न तत्प्रत्याख्यातुं प्रभवति बालः । न चाज्ञानावस्था चेदौषधस्यान्तरेव प्रवेशः कुतो मुखाद्बहिर्निर्गमः कुतो न भवतीति वाच्यम् । शरीरावयवानां हि प्रतिस्वं कस्यचित्कश्चिद्व्यापारो मुहुर्मुहुरभ्यासान्नैसर्गिकोऽयत्नसाध्य इव भवति तद्विरुद्धस्तु व्यापारो यत्नसाध्यः । स च यत्नो लघुर्महान्वेत्यन्यदेतत् । नैसर्गिकश्च व्यापारो नावश्यं ज्ञानावस्थामपेक्षते। यत्नसाध्यस्तु तामपेक्षत एवेति। तथा च यथा माता बालस्य मनोवृत्तौ विषयतया प्रविशदौषधग्रहणं ततोऽपसार्यौषधं प्राशयति न तथाऽऽत्मज्ञानरूपौषधविषये । आत्मज्ञानरूपं ह्येतदौषधं तस्यैवाज्ञाने कथं संभवेत् । तथा ४ चतुर्थोऽप्युपायो बलात्काराख्योऽत्र नोपयुज्यते। तत्र चानिच्छोरपि प्रतिकारं कुर्वतोऽपि च बालस्य हठान्मुखमुद्घाट्य तत्रौषधप्रक्षेपः । भवरोगविनाशकमात्मज्ञानरूपमौषधं त्वान्तरं मनोवृत्तिविशेषरूपम् । बलात्कारश्च शरीरसाध्यायां बाह्यक्रियायां संभवति नतु कथमपि केवलमानस्यामान्तरक्रियायाम् । औषधगिलनमपि च गलबिलाधःसंयोगानुकूलव्यापाररूपं तादृशशरीरावयवसाध्यत्वाद्बाह्यमेव नतु केवलं मानसम् । बाह्यव्यापार एव च बलात्कारस्य विषय इति तस्य मनोवृत्तौ कथमुपयोगः स्यात् । किंच बाह्यक्रियाविषयेऽपि समारब्धायाः क्रियायाः प्रतिबन्धो यथा बलात्कारेणाञ्जसा कर्तुं शक्यते न तथाऽनारब्धायाः क्रियायाः प्रादुर्भावः। बलात्कारेण कारिता हि क्रिया नान्तःकरणेन स्वातन्त्र्येण प्रेरिता भवतीत्यकृतप्रायैव सा । तथाभूतायाश्च तस्याः क्रियायाः क्वचिद्दृश्यमानं फलमपि प्रायः फलाभास एव । तत्रापि लोके क्वचित्फलं संभवेत्प्रकृते त्वसंभव एव । सर्वथा भवरोगविनाशकरं यदात्मज्ञानं तत्र मनसः प्रवृत्तिर्नैव बलात्कारसाध्या । अन्ये चावशिष्टाः पञ्चोपाया भवरोगविनाशकमात्मज्ञानरूपमौषधं ग्राहयितुं यथायथं

पर्याप्ता भवितुमर्हन्ति नवेति विचार्यते । तत्र यथा बालस्य दीयमानमौषधं मूर्तं मुखद्वाराऽन्तः प्रवेश्यते न तथैतत् । एतत्त्वात्मज्ञानरूपमौषधममूर्तं श्रवणेन्द्रियद्वारा मनोवृत्तौ प्रवेश्यते । मनोवृत्तौ प्रवेशश्च नाज्ञानावस्थायां संभवति किंतु ज्ञानावस्थामेव ।

अत्र कश्चिज्ज्ञानावस्थायामेवेति श्रुत्वाऽऽक्षिपति । बालो ह्यज्ञानादेवौषधं प्रत्याचष्टेऽतस्तदानीं तस्यौषधग्रहणोपायोऽपेक्ष्यते । ज्ञानी तु तरुणो वृद्धो वा स्वयमेवौषधं जिघृक्षति तदानीं च तस्य निष्प्रयोजना एवोक्ता उपायाः । तथा भवरोगग्रस्तो ज्ञानी चेत्स स्वयमेवौषधग्रहणे प्रवर्तेतेति नोक्तोपायापेक्षेति ।

तत्रोच्यते । ज्ञानिनो नोक्तोपायापेक्षेति सत्यम् । किंतु तत्र ज्ञानं किं पारमार्थिकं व्यावहारिकं वा । पारमार्थिकं चेत्तत्रौषधस्यैवापेक्षा नास्ति दूरे तद्ग्रहणोपायानाम् । कृतकृत्य एव हि सः । केवलं व्यावहारिकं ज्ञानं चेत्तादृशं ज्ञानं वस्तुतत्त्वाज्ञानसहकृतमेवेति तादृगज्ञानसत्त्वादौषधस्य तद्ग्राहकोपायानां चापेक्षा विद्यत एव । रोगग्रस्तस्य बालस्य भवरोगग्रस्तस्य जन्तोर्वा यदज्ञानमौषधाग्रहणे बीजभूतं तद्रोगस्य रोगत्वेनाज्ञानम् । तच्च जन्तोर्व्यावहारिकज्ञाने सत्यपि विद्यत एव । किंच रोगग्रस्तबालापेक्षया भवरोगग्रस्ते जन्तौ विशेषश्चाधिको दृश्यते । रोगस्य रोगत्वेनाज्ञानात्स्वं रोगिणं न मन्यते बालः । व्यावहारिकज्ञानाभावाच्चारोगिणमपि स्वं न मन्यते । भवरोगग्रस्तो जन्तुस्तु रोगस्य रोगत्वेनाज्ञानात्स्वं रोगिणं न मन्यते । प्रत्युत व्यावहारिकज्ञानसत्त्वात्तु स्वमरोगिणं मन्यते । तथा चौषधग्रहणोपायैर्माता बालमौषधं प्राशयितुं प्रभवेत्किल । न तथा सुलभं भवरोगग्रस्तस्य जन्तोरौषधग्राहणम् । एवं च भवरोगवैद्यस्य योगीन्द्रस्यैतत्कर्तव्यतामापद्यते यद्भवरोगग्रस्तस्य जन्तोः ' अहमरोगी ' इत्येवं भ्रमः प्रथममपाकरणीयः । अयमेवात्र मुख्य औषधग्रहणोपायः । तादृशे भ्रमेऽपसृते हि तस्य रोगनिवृत्तीच्छोत्पादनद्वारा नैसर्गिक्येवौषधग्रहणे प्रवृत्तिः स्यात् । बालस्यापि च पूर्वोक्तेष्वौषधग्रहणोपायेष्वन्तिमो नवम उपायो मुख्यः । तेन ह्युपायेन रोगनिवृत्तीच्छोत्पादनं भवति । ये ह्युपाया रोगनिवृत्तीच्छामनुत्पाद्याप्यौषधं ग्राहयन्ति ते क्षणिका एवोपाया नतु स्थिराः । तत्रौषधग्रहणं च यावदुपायास्तित्वं तावदेव । खण्डशर्करालोभेनौषधग्रहणे प्रवृत्तः खण्डशर्कराभक्षणोत्तरं पुनरौषधग्रहणसमये पूर्ववदेवौषधं प्रतिषेधति । रोगनिवृत्तीच्छायां तु निरुपाधिकायां सत्यां निसर्गत एवाऽऽफलोदयमौषधग्रहणे मुहुर्मुहुः प्रवृत्तिर्भवति । मुख्यश्चायमुपायो

यत्र न साधयितुं शक्यते तत्रान्य उपाया अभिलष्यन्ते। भवरोगग्रस्तस्य जन्तोश्चौषधग्रहणोपायेषु पूर्वोक्तेष्वौषधान्तरपुरस्काराख्यः प्रथम उपायस्तथाऽन्यत्र मनसोऽवधानसंपादनरूपस्तृतीय उपायस्तथा प्रसह्यौषधनिक्षेपरूपश्चतुर्थ उपायश्च नोपयुज्यत इत्युक्तमेव। इतरेऽप्युपाया भवरोगग्रस्तस्य जन्तोरौषधग्रहणाय प्रायो न पर्याप्ता भवन्ति। तेषु ह्युपायेषु यथा बालस्यौषधग्रहणे कटुरसादिद्वेषबुद्धिः प्रतिबन्धिकेति तस्याः प्रतिबन्धिकाया अभावः साधितस्तथा भवरोगग्रस्तस्य जन्तोरौषधग्रहणे या प्रतिबन्धिका बुद्धिस्तस्या अभावः साध्यः।

अथात्र भवरोगविनाशकमौषधं कीदृशम्। तादृशौषधग्रहणे प्रतिबन्धिका बुद्धिश्च कुत इति चेदुच्यते। भवः संसारः। स एव रोगस्तत्र मुख्यं कारणं शरीर आत्मभावः। शारीरो हि जीवात्मा शरीरेणाखिलान्भोगाननुभवतीति शरीरं तस्यात्यन्तं प्रियतरं भवति। तथा च तत्प्रियतरं यथाऽयं जीवात्मा स्वात्मरूपमेव तन्मन्यते। अतश्च जीवात्मा कदाऽपि तन्नैव जिहासति। भवरोगविनाशकमौषधं च शरीरान्निष्कृष्टात्मस्वरूपज्ञानम्। आत्मत्वेनाभिमतस्य च स्वस्मात्पृथक्करणं तत्रानात्मत्वभावनारूपमतीव दुःखदं भवतीत्यतस्तदौषधं शारीरस्य जीवात्मनः कटुरसायते। अतस्तादृशौषधग्रहणे जीवात्मनः प्रवृत्तिः शशविषाणायते। अप्रिये च पदार्थे द्वेषबुद्धिर्नैसर्गिक्येव भवतीत्यौषधग्रहणप्रतिबन्धिकायास्तादृशबुद्धेरभावोऽत्रौषधग्रहणोपायैः साधनीयः। स च भवरोगग्रस्ते जन्तौ दुर्घटतरः। यतो विश्वस्तवचसो गुरोरपि वाग्देहत्यागप्रयोजिका चेत्सा रुग्णस्याऽप्यासन्नमरणस्यापि च देहिनो न स्वदते किमुत यः स्वं रुग्णं न मन्यते। तदुक्तम्—

सर्वस्यैव शरीरं कष्टावस्थास्वपि प्रियं भवति।
नरकस्थोऽपि हि जन्तुर्यावच्छक्यं स्वदेहमवतितराम्।

एवं च भवरोगग्रस्तस्य जन्तोरारोग्यतावाप्तये यदात्मस्वरूपयाथार्थ्यज्ञानरूपमौषधं तद्ग्रहणोपायो यदि शरीरस्याऽऽत्मस्वरूपात्पृथग्भावभावनारूपो बोध्यते तर्ह्यारोग्यता कस्य स्यात्। न शरीरे। तस्यानात्मत्वात्। नापि जीवात्मनि। तस्य चैतन्यमात्रस्वरूपत्वेन तत्र रोगासंभवात्। किंतु शरीरविशिष्टे जीवात्मनि रोगोद्भवः। तस्य च शारीरस्य जीवात्मनः शारीरत्वं संरक्ष्यैव यदि किंचिदौषधं कथ्यते चेत्तज्जिघृक्षा तस्य स्यान्नत्वन्यथा कदाचिदपि। तथा चोक्तमन्यत्र—

गवि रोगग्रस्तायां रोगनिवृत्तिर्न गोप्रदानेन ।
मूषकपीडातिशये नैवोपायो निकाय्यदाहाख्यः ॥ इति ।

किंच भवरोगग्रस्ते जन्तौ बालेभ्यो वैलक्षण्यमनुपदमुक्तमेव । बालस्य हि यद्यप्यहं रोगीति धीर्नास्ति तथाऽप्यहमरोगीत्यपि धीर्नास्ति । भवरोगग्रस्तस्य जन्तोर्हि 'अहं रोगीति धीर्नास्ति' इत्येतदंशेन बालसाम्येऽप्यहमरोगीति बुद्धिसत्त्वात्ततो वैषम्यम् । अतः—

स गृह्णात्यौषधं यस्य रुग्णोऽहमिति भावना ।
अरोगीतिमतेः सत्त्वे त्वौषधस्य कथाऽपि न ॥

इत्युक्तदिशाऽहमरोगीति मतिर्यावत्तावदौषधस्य शब्दद्वाराऽपि न प्रवेश इत्यतस्तत्रौषधग्रहणोपाया अकिंचित्करा एव भवेयुः । एवं च भवरोगविनाशकमौषधं तद्ग्रहणोपायाश्च दूर एव । प्रथमं तावत् 'अहं रोगीति भावनोत्पादक उपायो योजनीयो भवति।तस्यां चोत्पन्नायां तत्र रोगनिवृत्तीच्छा पदमादधीत । तया चेच्छया तत्र पदे दत्ते तदनुगामिन्या औषधजिघृक्षाया अवसरः स्यात् । तस्याश्चोत्कटत्वे तत्र प्रतिबन्धिकायाः कटुरसादिद्वेषबुद्धेः सत्त्वेऽपि तां दूरतोऽपसार्यौषधजिघृक्षौषधं ग्राहयति । अयं चोपायः पूर्वोक्तेषु नवसूपायेष्वन्तिमो रोगनिवृत्तीच्छोत्पादनरूपः । अयमेव चोपायः श्रुत्या समाश्रितः । तथा हि-दशोपनिषत्सु प्राधान्येनाऽऽत्मस्वरूपं वर्णितम् । तच्च कूटस्थं नित्यं व्यापकं सच्चिदानन्दस्वरूपमित्यादि तत एवावगन्तव्यम् । तथा तत्राऽऽकाशादिकस्य च जगतः सृष्टिक्रमश्च वर्णितः। नन्वात्मज्ञानान्मोक्ष इति सिद्धान्तोऽन्यत्र श्रुत्यैवोक्तः। तदर्थं च श्रुतावात्मस्वरूपवर्णनं युक्तम् । जगतो वर्णनं तत्र केनोद्देशेन कृतं स्यात् । उच्यते।तथा हि—मोक्षसाधनीभूतमात्मज्ञानमिति साधनज्ञानायाऽऽत्मस्वरूपं वर्णितं तथा मोक्षावधिभूतं जगदित्यवधिज्ञानाय जगत्स्वरूपमपि वर्णयितव्यमेव । संसाराद्धि मोक्षः। संसारश्चाऽऽकाशादि बहुप्रपञ्चं जगदेव। तत्रापि च येन रूपेणाऽऽत्मविषयकं ज्ञानं मोक्षसाधनीभाव उपयुज्यते तेन रूपेण श्रुतावात्मस्वरूपं वर्णितम्। तथैव च येन रूपेण जगद्विषयकं ज्ञानं मोक्षावधिभाव उपयुज्यते तेन रूपेण जगतः स्वरूपं श्रुतौ निरूपितम् । जनो हि निसर्गत एवोत्तमं पदार्थं प्रेप्सते निकृष्टं च जिहासति । श्रुतौ ह्यात्मस्वरूपं सर्वातिशायिमहत्त्वेन वर्णितम् । जगच्चानित्यत्वादिदोषदुष्टं निकृष्टतया वर्णितम् । आत्मस्वरूपं हि कूटस्थं नित्यं व्यापकं

सच्चिदानन्दरूपम् । जगच्च विकार्यनित्यमव्यापकमसज्जडं दुःखबहुलं च । ईदृशस्वरूपप्रतिपादिकाः श्रुतयः प्रसिद्धा एवेत्यत्र नोदाहृताः । किंचानित्यत्वादिदोषदुष्टत्वेन यज्जगतो वर्णनं तदात्ममहत्त्वज्ञानोपबृंहणार्थमप्युपयुज्यते । तदुक्तम्—

कस्यापि वस्तुनो लोके महत्ता प्राप्यते गुणैः ।
वर्धते तु प्रतिस्पर्धिवस्तुदोषैर्निरीक्षितैः ॥ इति ।

एवं नित्यत्वनिर्विकारत्वादिभिरात्मस्वरूपे भाविते जगति च तद्विरुद्धानित्यत्वविकारित्वादिदोषैर्दुष्टत्वेन भाविते शरीरेऽपि च जगदन्तर्गततया दुष्टत्वभावनायामुदितायां तत्राऽऽत्मभावः शैथिल्यमापद्यते । न तु सर्वथा तदानीमेव विनश्यति । संसारस्यानादित्वेनानादिकालमारभ्य प्रवृत्तस्य देहात्मभावस्यैकपदे विनाशासंभवात् । एवं नित्यानित्यवस्तुविवेकेन शरीरात्मभावे शैथिल्यमापन्ने तादृशशरीरद्वारा गृह्यमाणेषु भोगेष्वपि चित्तासक्तिरंशतः शिथिला भवति । इन्द्रियाणि पूर्ववद्विषयेष्वत्यन्तासक्तानि न भवन्तीति यावत् । एवमिहामुत्रार्थफलभोगविरागे तेनेन्द्रियाणां मनोहरणसामर्थ्येंऽशतः क्षीणे शमदमादयो मनोवृत्तौ प्रविशन्ति । एवं शमादिषट्कसंपत्तेर्मनस्याविर्भावे मुमुक्षुताऽपि तत्राऽऽविर्भवति । सा च नित्यानित्यवस्तुविवेकं द्रढयितुं प्रवर्तते । एवमेतत्साधनचतुष्टयं मिथोऽन्योन्यसहायेन संजातबलं शनैः शनैः स्वस्वकार्यक्षमं भवति । उत्तरोत्तरं च तस्य पूर्णे सामर्थ्ये सर्वथा विगलिते देहात्मभावे सद्यो जीवन्मुक्त एव स प्रत्येतव्यः । तदुक्तम्—

पर्याप्ततां समापन्ने साधनानां चतुष्टये ।
देहात्मभावसंत्यागान्मुक्तो भवति मानवः ॥ इति ।

अत्राहुः—अयं च श्रुत्यभिप्रेतो मोक्षमार्गो राजमार्गवत्प्रकाशित एव सुतराम् । किंतु पर्वततटाग्रस्थिताम्रादिफलवदुक्तमार्गेण प्राप्यं मोक्षफलं दुरापं भवति जन्तूनाम् । पर्वततटाग्रस्थितं फलं दूरतो दृष्टिपेयमिदं तु श्रोत्रपेयमिति विशेषः । दौर्लभ्यांशे तु साम्यमेव । यथा च पर्वततटाग्रारूढस्य तत्सुलभं तथोक्तमार्गारूढस्य मोक्षरूपं फलं सुलभं भवेत् । किंतु प्रथमत उक्तमार्गप्रवेश एवातिदुर्लभः । साधनचतुष्टयसंपत्तिप्रधानो हि स मार्गः । सा च संपत्तिः सांसारिकस्य जन्तोः प्रायो न संभवति ।

ननु सांसारिकेऽपि जन्तौ लेशतः साधनचतुष्टयं दृश्यते । प्रयत्नेन च तस्य वृद्धौ साधितायामुक्तमार्गप्रवेशो न दुर्लभो भवति । तथा हि—अद्य श्वो वा विनश्यद्वस्तु विहाय संवत्सरं तदधिकं वा कालमवस्थायिनि वस्तुन्यभिलाषो दृश्यते जनानाम् । स्वाद्वप्यन्नं तृप्ताय न स्वदते । एकादश्याद्युपवासेऽन्नभक्षणादौ मनोनिग्रहो दृश्यते । तथा दुःखातिशयकाले संसारं तित्यक्षति जन इत्येवं क्रमेण साधनचतुष्टयं परिचितमालक्ष्यते लोके ।

उच्यते । नैतत्साधनचतुष्टयम् । किंतु साधनचतुष्टयाभासः । औपाधिकं ह्येतत् । अद्य श्वो वा विनश्यतो वस्तुनस्त्यागो न केवलं तदनित्यतैव बीजम् । किंत्वधिककालावस्थायिवस्तुलाभः । अयमेव तत्रोपाधिः । यतोऽधिककालावस्थायिवस्तुनोऽसंप्राप्तावद्य श्वो वा विनश्यदपि वस्त्वभिलषत्येव जनः । तथा तृप्त्युपाधिक एव हि भुक्तस्यान्ने विरागः । तृप्त्यभावे तु जिघत्सत्येवान्नम् । न केवलं जिघत्सतीत्येव प्रत्युत याचते च । तथैकादश्याद्युपवासादौ व्रतोपाधिको मनोनिग्रहः । व्रताभावे तु मन इन्द्रियाधीनमेव क्षणमपि विलम्बं न सहते । तथा दुःखातिशयौपाधिकी संसारजिहासा । सुखोपभोगकाले तु मोक्षकथामपि न शुश्रूषते जनः । किं तर्हि पारमार्थिकं साधनचतुष्टयम् । यदनौपाधिकम् । कथं च तत्प्रत्येतव्यम् । इत्थम् । देहानात्मभावप्रधानो हि नित्यानित्यवस्तुविवेकः । अतो यादृशस्य विवेकस्य पर्यवसाने देहेऽनात्मबुद्धिः स्थिरा भवति स नित्यानित्यवस्तुविवेकः पारमार्थिकः प्रत्येतव्यः । तथा कर्तृत्वाननुसंधानप्रधानो हीहामुत्रार्थफलभोगविरागः । अतो यादृशस्य विरागस्य पर्यवसाने कर्मणि कर्तृत्वाननुसंधानं स्थिरं भवति स इहामुत्रार्थफलभोगविरागः पारमार्थिकः प्रत्येतव्यः । तथा ध्यानप्रधाना हि शमादिषट्कसंपत्तिः । अतो यादृश्याः शमादिषट्कसंपत्तेः पर्यवसाने निष्प्रतिबन्धं ध्यानं कर्तुं शक्यते सा शमादिषट्कसंपत्तिः पारमार्थिकी प्रत्येतव्या । तथा समाधिप्रधानं हि मुमुक्षुत्वम् । अतो यादृशस्य मुमुक्षुत्वस्य पर्यवसाने निर्विकल्पकः समाधिर्युज्यते तन्मुमुक्षुत्वं पारमार्थिकं प्रत्येतव्यमिति । तदुक्तम्—

नित्यानित्यविवेकस्तु प्रत्येतव्यः स एव हि ।
यस्य पर्यवसाने स्याच्छरीरेऽनात्मभावना ॥
फलभोगविरागश्च तदा पर्याप्ततां व्रजेत् ।
कर्मकाले यदा कर्ता कर्तृत्वं नानुमन्यते ॥

शमादिषट्कसंपत्तिस्तदा कृतपदा भवेत् ।
मनोवृत्तावात्मरूपातिरिक्तो विषयो न चेत् ॥
तदेव हि मुमुक्षुत्वं परिज्ञेयं विचक्षणैः ।
मनोवृत्तौ नृत्यतोऽस्य साश्रयस्य लयो यदि ॥ इति ।

एतदुक्तं भवति । साधनचतुष्टयसंपत्तिरुक्तकार्यक्षमा न चेत्किं तया नाममात्रेण निर्दिष्टया ।

अजातकल्पं वस्तु स्यादविशिष्टं भवेद्यदि ।
तदेव हि विशिष्टं स्याद्यत्कार्यक्षमतामियात् ॥

अविशिष्टं वस्तु तावदजातकल्पमिति हि न्यायः । तथा चेदं नित्यमिदमनित्यमित्येतावन्मात्रज्ञानेन न नित्यानित्यवस्तुविवेकः कृतो भवति । किंतु तत्कार्यभूतस्तादृशज्ञानानुरूपो यो विवेकः सोऽपेक्ष्यते । स च नित्यस्योपादानमनित्यस्य त्याग इत्येषा भावना । तत्राऽऽत्मैको नित्यः । तद्व्यतिरिक्तमखिलं जगदनित्यमिति हि श्रौतः सिद्धान्तः । ननु जगतस्त्यागः समष्टिरूपेण व्यष्टिरूपेण वा । नाऽऽद्यः । देहिनो जगदन्तर्गततया तेन जगतस्त्यागासंभवात् । नापि द्वितीयः । घटपटकुड्यकुसूलादिव्यक्तीनामानन्त्येन प्रतिस्वं सर्वेषां त्यागासंभवात् । अनित्यस्य त्यागो हि न यस्य कस्यचिद्वस्तुनः । तस्यायत्नसिद्धत्वादकिंचित्करत्वाच्च । किंत्वनित्यमात्रस्य । तथा च कथमत्र त्यागः । त्यागासंभवे च तद्भावनाऽपि न फलायावकल्पते । नह्यसंभावि वस्तु भावनामात्रेण सेद्धुमर्हति । किंच जगति भूयांसः पदार्था अज्ञाता भवन्ति । सर्वेषां पदार्थानां सर्वैः प्राणिभिर्ज्ञानस्याशक्यत्वात् । तथा च यादृशपदार्थविषयिका बुद्धिरेव नास्ति कुतस्तत्र त्याज्यत्वबुद्धिरिति चेन्न । त्याज्यत्वबुद्धिरित्यस्य ग्राह्यत्वबुद्ध्यभाव इत्यत्र तात्पर्यात् । शरीरस्यापि जगदन्तर्गतत्वेन तत्र ग्राह्यत्वबुद्धेरभावः । अतः शरीरसंरक्षणार्थं लेशतोऽपि यत्नो यत्र न दृश्यते तदेव जगदनित्यत्वज्ञानानुरूपमाचरणं भवति ।

अथाऽऽत्मनित्यत्वज्ञानानुरूपमाचरणं कीदृशमिति चेदुच्यते । जन्म मरणं च केवलशरीरस्यैव नतु तेन साकमात्मनः । शरीरमेव केवलं जन्मकाल उत्पद्यते मरणकाले च तदेव केवलं विनश्यति । आत्मा तु भूतेषु भाविषु वाऽनेकेषु जन्मस्वनुस्यूत एक एव । एतदात्मनो नित्यत्वम् । तादृशनित्यत्वानुगुण-

माचरणं च यथाऽस्मिञ्जन्मनि भाविसुखार्थं दुःखनिवृत्त्यर्थं वा प्रयतते मनुष्यस्तथा भाविजन्मसु तदर्थं यत्नः कर्तव्यः । ननु चामुकयोनावेव भाविजन्मप्राप्तिरितीदानीं न किमपि ज्ञायते येन तत्र सुखार्थं दुःखनिवृत्त्यर्थं वा तत्साधनीभूतानां संचय इदानीं कर्तुं शक्येत । किंच योनिविशेषज्ञानेऽप्येतद्देहवियोगः कदा स्यात्, तदनन्तरं च पुनर्योनिविशेषे जन्म कदा भवेत्तदानीं प्राप्यमाणे शरीर आरोग्यता च कीदृशी स्यात्कस्मिंश्च देशे कस्मिन्ग्रामे कस्मिंश्च कुले जन्म भवेदित्येतत्सर्वं यावन्न ज्ञायते तावत्तत्रत्यसुखस्य दुःखनिवृत्तेर्वा साधनीभूतानां वस्तूनां नैव संचयः कर्तुं शक्यते । तथा च कीदृशः प्रयत्न इति चेत्—उच्यते । यद्यपि तादृशसाधनसंचयः कर्तुं न शक्यते तथाऽपि रमणीययोनिप्राप्त्यर्थं सुकृतसंचयः कर्तुं शक्यत एव । तथा च श्रुतिः—रमणीयचरणा रमणीयां योनिमापद्येरन्ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा कपूयचरणाः कपूयां योनिमापद्येरन् श्वयोनिं वा शूकरयोनिं वा चाण्डालयोनिं वा (छा० ५।१०।७) इति । रमणीयाचरणेन हि सुकृतसंचयद्वारैव रमणीययोनिप्राप्तिर्जायते ।

ननु रमणीयमरमणीयं वाऽऽचरणं शरीरेन्द्रियसाध्यम् । शरीरं चानित्यमिति तत्र त्याज्यत्वभावनाऽनुपदमेवोक्ता । तथा च शरीरत्यागे सुकृतजनकं रमणीयमाचरणं कथं स्यादिति चेद्भ्रान्तोऽसि । त्याज्यत्वभावनायां हि सद्य एव न शरीरत्यागो भवति । किंतु जन्मान्तरीयसुकृतातिशयेन भावनादार्ढ्ये पूर्णपरिपाकदशायामेव । तथा च ततः पूर्वं त्याज्यत्वभावनायामपि शरीरसत्त्वेन रमणीयमाचरणं संभवत्येव । शरीरत्यागोत्तरं त्वाचरणं न संभवतीति चेन्मा भून्नाम तदानीमाचरणम्, न किंचिच्छिद्यते । एवं मुमुक्षोर्नित्यानित्यवस्तुविवेको यादृशोऽपेक्ष्यते तादृशः प्रदर्शितः ।

अथेहामुत्रार्थफलभोगविरागस्य द्वितीयसाधनस्य स्वरूपं कार्त्स्न्येन प्रदर्श्यते । विरागश्च विषयेषु प्रीत्यभावः । स च विषयत्वावच्छेदेन विषयेष्वावश्यकः, नतु यस्मिन्कस्मिंश्चिद्विषये । तस्य प्राणिमात्रसाधारण्येनाव्यभिचरितत्वात् । तदुक्तम्—

नैव सर्वस्य सर्वं हि प्रियं भवति कर्हिचित् । इति ।

विषयमात्रे प्रीत्यभावश्च न कस्यापि सांसारिकस्य जन्तो र्दृश्यते । तादृशः प्रीत्यभावश्च प्रीतेर्मूलं यावन्नोत्सन्नं तावदशक्यः ।

'सति मूलेऽङ्कुरोत्पत्तिः शपथेन न वार्यते ।

इति न्यायात् । शब्दस्पर्शादिष्वखिलेषु विषयेषु प्रीतिश्च प्राणिनां स्वशरीरप्रियत्वमूलिका । शरीरं हि सर्वस्य प्रियमेव । नारकिणामपि जन्तूनां तादात्विकं शरीरं नैवाप्रियं भवति । तथा च पुनस्तस्य शरीरप्रियत्वस्य निवृत्तये तस्य मूलमुत्सादनीयं भवति । तच्च शरीरात्मभावादन्यन्न विद्यत इत्यतः प्रथमसाधनेन नित्यानित्यवस्तुविवेकेन शरीरात्मभावे विलीने द्वितीयं साधनमिहामुत्रार्थफलभोगविरागरूपमनायाससाध्यं भवति । तथा च श्रुतिः—'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति । अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः (छा०८।१२।१) इति । शरीरान्निष्कृष्टश्च केवल आत्मा नैव किंचिदपि करोतीति कर्मण्यकर्तृत्वं पर्यवसितं भवति ।

अथ तृतीयं साधनं शमादिषट्कसंपत्तिरूपं मुमुक्षोरपेक्षितं निरूप्यते । पूर्वोक्तेन साधनद्वयेन शरीरं नाऽऽत्मा, आत्मनश्च न कर्तृत्वमिति निर्णीतं किल । तादृशनिर्णयानुसारेण तादृशी भावना मनोवृत्तिविशेषरूपा दृढा भवति । नैतावता कृतकृत्यता । यथा सर्पाद्भीतः कश्चित्पुरुषः 'नायं सर्पो रज्जुरेषा मा भैषीः' इत्येवमाप्तेन बोधितोऽपि तं पश्यन् यावद्दृष्टिदोषं सर्पमेव प्रत्यक्षतोऽनुभवतीत्यतश्चक्षुर्दोषनिवृत्तयेऽञ्जनं चक्षुषि प्रक्षेप्तव्यं भवति । तदनन्तरमेव च तस्याऽऽप्तवचोनुगुणोऽनुभवो भवति । तथा प्रकृते पूर्वोक्तायां भावनायां दृढीभूतायामपि गौरोऽहं कृशोऽहमित्येवं शरीरात्मभावमहं करोमीत्येवमात्मनः कर्तृत्वं च नानुभवतीति न दृश्यते । अतश्च तन्मूलभूताज्ञानदोषो निवारणीयः । निवारकमौषधं च तत्त्वदर्शिकृत उपदेशो दशमस्त्वमसीतिवत् । तादृशोपदेशाधिकारसिद्ध्यर्थमेतत्तृतीयं साधनं शमादिषट्कसंपत्तिरूपम् । शमादयो मनोनिग्रहादयश्च तदर्थाः प्रसिद्धा एव । निगृहीतं हि मनो निर्मलं भवति, निर्मले च मनसि सुखं प्रविशन्त्युपदेशगुणाः स्फटिकमणाविव गभस्तिमरीचयः । उपदेशेन चाऽऽत्मयाथार्थ्यावगमे केनाप्यप्रतिहतमविरतमात्मध्यानं कर्तुं शक्यते । अतस्तृतीयसाधनस्याऽऽत्मध्याने पर्यवसानं भवति ।

अथ चतुर्थं साधनं मुमुक्षुत्वं निरूप्यते । मुमुक्षुत्वं च मोक्षेच्छा । इच्छा च कार्यमात्रं प्रति साधारणं कारणमस्त्येव । अत्र च मोक्षः साध्य इति तद्विषयणीच्छा । सा चात्रोत्कटा । सैव चोत्कटेत्याभिधीयते या फलप्राप्तिपर्यन्तं न क्षणमपि विरमति । सा चात्यन्तावश्यकी । यतः

नैव केवलयत्नेन नापि केवलयेच्छया ।
किंतूभाभ्यां समेताभ्यामेव कार्यं प्रसिध्यति ॥

इत्यभियुक्तोक्तेः । अत्र चतुष्टयमध्ये चतुर्थसाधनेनेच्छा प्रदर्शिता । आद्यसाधनत्रयेण कया विधया प्रयत्नः कर्तव्यस्तत्प्रदर्शितमिति बोध्यम् । तृतीयसाधनसाध्यस्याऽऽत्मज्ञानस्य पर्यवसानं निर्विकल्पकसमाधौ यद्भवति तच्चतुर्थसाधनसाध्यम् । निर्विकल्पकसमाधिरेव मोक्षः । सैव च जीवन्मुक्तिः । मरणानन्तरं च विदेहमुक्तिः । सोऽयं साधनचतुष्टयमण्डितः श्रुत्यभिप्रेतो मोक्षमार्गः सूर्यप्रकाशवज्जगति सुप्रसिद्ध एव । किंतु सान्द्रतिमिरावगुण्ठिते भूगृहेऽवस्थितस्य यथा सर्वत्र विद्यमानः सुप्रसिद्धोऽपि च सूर्यप्रकाशो दुर्लभो भवति तथाऽज्ञानतिमिरप्रच्छन्नस्य सांसारिकस्य जन्तोरयं निश्चयेन निर्वाणमङ्गलपदप्रापको मोक्षमार्गो दुर्लभः संदृश्यते । एवं ये मोक्षमार्गं गन्तुमक्षमाश्चिराय भवरोगग्रस्तास्तानालोचयन्त्यपि श्रुतिरुदास्ते । का गतिः । नह्ययं स्थाणोरपराधो यदेनमन्धो न पश्यति । किंत्वेवं भवरोगग्रस्तानां जन्तूनां पीडातिशयमालोचयितुमक्षमा श्रुतिः स्वयमुदासीनाऽपि तेषां दुःखनिवारणं यथा भवेत्तथा मार्गं सूचयत्येव । जगतोऽनित्यत्वं प्रदर्शयन्ती तदन्तर्गतशरीरस्यानित्यत्वेन तत्रानात्मत्वबोधनद्वारा लौकिकवैदिकव्यापारेषु शरीरसाध्येष्वात्मनः कर्तृत्वाभावं सूचयति । अनया च श्रुतिसूचितदिशा जगज्जननी भगवद्गीता जागृतेव पूर्वोक्तेषु नवसूपायेषु द्वितीयेनोपायेनौषधसंयोजने निवारयितुं शक्योऽयं भवरोग इति मन्यमाना कर्मणि फलानभिसंधिं पुनः पुनरुपदिशति । माता ह्यपत्यसंरक्षणाय यावच्छक्यं यावज्जीवं च प्रयतमानैव समालोच्यते लोके । दुराग्रहिणो बालस्य रोगपीडानिवृत्तये कटुरसाक्रान्तमौषधमन्तर्निधाय बहिश्च मधुररससंपुटितं कृत्वेदमौषधमित्येवमनवबोधयन्त्येव गृहाणैतच्छर्कराखण्डमित्येवं शर्कराखण्डच्छन्नमौषधं प्राशयति । तथेयं जगज्जननी श्रीमद्भगवद्गीता सांसारिकस्य जन्तोरनादिकालमारभ्य कर्मण्यासक्तस्य बन्धकेऽपि कर्मणि बन्धकत्वेनाज्ञाते निरतिशयामासक्तिं दृष्ट्वा मा कुरु कर्मेत्येवमुपदेशोऽत्र निष्फलः स्यादित्यतस्तादृशमुपदेशं कर्तुमशक्नुवती कुरु कर्मैवेत्येवमुपदिशति । कर्म च क्रियमाणं बन्धकं स्यादेवेत्यतस्तस्य बन्धकत्वनिरासाय ' त्यक्त्वा कर्मफलासङ्गम् ' इत्येवं कर्मणो बन्धकत्वमपसारयति । बन्धकत्वे चापसारिते कृतं कर्म चित्तशुद्धय एव पर्यवस्यति । शुद्धचित्तश्च श्रुतिप्रतिपादितमोक्षमार्गाधिकारी

संपद्यत इति । एवं चाखिलजनहितकारिणी श्रुतिर्भवरोगग्रस्ताञ्जनानुद्दिधीर्षुरपि स्वयं रोगग्रस्तममन्यमानानत एव चौषधमजिघृक्षूनज्ञानिनोऽनधिकारिणश्च तादृशाञ्जनानुद्धर्तुं स्वयमप्रभुस्तादृशे दुर्घटकर्मणि भगवद्गीतां पुरस्करोति । भगवद्गीता च श्रुतिपुरस्कृता तादृशं दुष्करमपि कर्म येनोपायेन सुकरं स्यात्तथोपायं संयोजन्ती तादृशानपि जनान्सन्मार्गमवबोधयति । एवमनधिकारिणोऽनिच्छोश्च जन्तोर्हितं सिषाधयिषुरियं श्रीमद्भगवद्गीता ग्रन्थान्तरेभ्यो विशिष्यत इत्यतोऽस्याः प्रस्थानत्रयमध्ये स्वातन्त्र्येण गणना संदृश्यते ।

अत्रेदं बोध्यम्—भवरोगग्रस्तस्य वैद्यशास्त्रं हि वेदान्तशास्त्रमेव । वैद्यशास्त्रे च तिस्रोऽवस्थाः संदृश्यन्ते । यथोक्तम्—

औषधस्य प्रवचनं तत्सज्जीकरणं तथा ।
तत्प्रयोगश्चेति विज्ञेयं वैद्यशास्त्रे दशात्रयम् ॥ इति ।

तत्र प्रथमावस्थोपनिषद्भिः संपादिता । द्वितीया चावस्था ब्रह्मसूत्रैः प्रदर्शिता । तृतीया चावस्था श्रीमद्भगवद्गीतया संसाधिता । अतोऽवस्थात्रयप्रदर्शकमेतद्ग्रन्थत्रयं वेदान्तशास्त्रे प्रामुख्येण प्रस्थानत्रयशब्देन गीयते। अवशिष्टाश्च ग्रन्थाः केचिदुक्तग्रन्थत्रयटीकारूपाः केचिदुक्तग्रन्थत्रयप्रतिपादितस्यार्थस्य विस्तरेण प्रतिपादकाः संदृश्यन्ते । तत्राप्यनुपदमेवोक्तप्रकारेण भूयसां जनानां साधारण्येन सन्मार्गप्रापकमार्गप्रदर्शनेन श्रीमद्भगवद्गीतेयं श्रुतिसूत्रेभ्योऽतिरिच्यत इति सुधियो विभावयन्तु ।

अथात्र प्रसङ्गात्प्रस्थानत्रयशब्दार्थः कथ्यते। प्रतिष्ठतेऽनेनेति प्रस्थानम्। प्रकृष्टस्थितिसाधनम्। स्थितिः प्राणिनोऽवस्थाविशेषः। तस्याः प्रकर्षश्च निरतिशया यदपेक्षयाऽधिको विशेषो नास्ति तादृशी परा काष्ठा। सा च मोक्षावस्था । तत्साधनीभूत आत्मज्ञानरूपो मार्गः प्रस्थानशब्देनोच्यते । तत्प्रदर्शकमुपनिषदः, ब्रह्मसूत्राणि गीता चेति त्रयं प्रस्थानशब्देन गृह्यते। नैतावतैतन्मार्गत्रयं मिथो भिन्नमन्योन्यानपेक्षं स्वकार्यसाधने समर्थमिति भ्रमितव्यम् । एक एव हि मार्ग आत्मज्ञानरूपः सोपस्करस्त्रिषु प्रतिपाद्यते । स च कर्तृत्वाभिमानफलाभिसंधिरहितकर्मजन्यचित्तशुद्धिपूर्वको महावाक्यादिश्रुत्यर्थानुसंधानजन्य आत्मस्वरूपानुभवः । तत्रोपनिषत्सु प्राधान्येनाऽऽत्मस्वरूपं चिन्तितमिति मोक्षमार्गः प्रदर्शितः । ब्रह्मसूत्रेषु प्राधान्येन श्रुत्यर्थविचारः कृत इति स मोक्षमार्गो गमनप्रतिबन्धककण्ट-

कपाषाणाद्यपसारणेन गमनयोग्यो विशदीकृतः । गीतायां तु प्राधान्येन कर्तृत्वाभिमानफलाभिसंधिरहितं चित्तशुद्धिफलकं कर्म प्रतिपादितमिति तादृशमोक्षमार्गगमनायाधिकारः संपादित इति ।

नन्वात्मज्ञाने जाते जीवन्मुक्त एव सः, तदानीं न तेन किंचित्कर्म क्रियते किंतु भवतीत्येव । कर्मणैव स परित्यज्यते । निद्रारम्भे न मनुष्यो व्यावहारिकं कर्माऽऽन्तरं बाह्यं वा परित्यक्तुं प्रभवति । किंतु कर्मणैव स तदानीं परित्यज्यते तद्वत् । तथा च गीतायां भगवताऽर्जुनायाऽऽत्मस्वरूप उपदिष्टे तेनार्जुनस्याऽऽत्मज्ञानं जातं न वा । आद्ये युद्धाय प्रवृत्तिः पश्चाज्जायमाना सुतरां न संभवति । कर्मणैव तस्य त्यक्तत्वात् । 'कुरु कर्मैव तस्मात्त्वम्' इत्युपदेशश्च न संगच्छते । अन्त्ये, आत्मस्वरूपोपदेशो व्यर्थ एव स्यादिति निरार्थिकैव भगवतः प्रवृत्तिः स्यात् । किंचात्राऽऽत्मोपदेशानन्तरमर्जुनो व्यावहारिके युद्धकर्मणि प्रवृत्तोऽभूत् । तथा च संनिधानात्तदेवात्र तस्य फलं वक्तुं युज्यते । तच्च सर्वथा विपरीतम् । आत्मोपदेशस्य फलं सांसारिको भोग इति न केनापि क्वापि चोक्तमङ्गीकृतं वा । नापि चोपपद्यते । आत्मोपदेशेन हि 'शरीरादिव्यतिरिक्तोऽसङ्ग आत्मा' इति ज्ञायते । सांसारिका भोगाश्च सर्वे शरीर आत्मबुद्धिमपरित्यज्यैव संभवन्ति । तथा च कथमेतस्य गीताशास्त्रस्य वेदान्तशास्त्रे प्रस्थानत्रयमध्ये प्रवेश इति ।

उच्यते—भगवत्कृतेनोपदेशेनार्जुनस्याऽऽत्मज्ञानं जातं न वेति प्रश्ने जातं च न जातं चेति द्विविधमुत्तरम् । नचात्र विरोधः । आत्मज्ञानस्य प्रत्यक्षपरोक्षभेदेन भावाभावयोः सामानाधिकरण्यसंभवात् । परोक्षज्ञानस्य भावः प्रत्यक्षज्ञानस्याभाव इति । तथा चाऽऽत्मप्रत्यक्षज्ञानाभावान्न कर्मणा तस्य त्यागः । आत्मपरोक्षज्ञानस्य सत्त्वाच्च नोपदेशानर्थक्यम् । यच्च पुनरुक्तं सांसारिकभोगसाधनीभूते व्यावहारिके युद्धकर्मणि भगवत्कृत आत्मोपदेशः कथं कारणमभूदिति । तत्राऽऽत्मोपदेशो युद्धप्रवृत्तेः कारणं नैवाभूत् । कथं तर्हि तदुपदेशानन्तरं सद्य एव युद्धे प्रवृत्तिर्जातेति चेत् । तत्रोपदेशेन केवलं युद्धनिवृत्तिकारणीभूतो मोहो दूरीकृत इत्येव । युद्धे प्रवृत्तिस्तु पूर्वमेव जाता विघ्नापसारणेन पुनरुद्भूतेव दृश्यते । अतस्तत्र भगवत्कृत उपदेश एव युद्धप्रवृत्तेः कारणमित्यभिमानो लोकानाम् ।

नन्वेवमत्र भगवत्कृतादुपदेशादुर्जनस्य नाऽऽत्मज्ञानं प्रत्यक्षमभूत्किंतु परोक्षमेव । तच्च न मोक्षसाधनम् । अस्मादृशानामपि साधारणानां जनानां सांसारि-

णामपि परोक्षज्ञानसत्त्वात् । प्रत्युतार्जुनस्य तादृशं जायमानं ज्ञानं मोहनिवारणद्वारा सांसारिकप्रवृत्तेरेवोपोद्बलकमभूत् । तथा च गीताशास्त्रस्य वेदान्तशास्त्र एव निवेशो न संभवति दूरे प्रस्थानत्रयमध्य इति चेत् । उच्यते । गीतोपदेशादर्जुनस्य जायमानमात्मज्ञानं परोक्षमपि सांसारिकप्रवृत्त्युपोद्बलकमपि च तथा भगवतोपदेशेन संपादितं यथा तन्नियतमात्मप्रत्यक्षज्ञानपर्यवसायि भविष्यति । उपदेशानन्तरं तस्य सांसारिकी युद्धकर्मप्रवृत्तिरपि स्वधर्मकर्तव्यतामूला नतु लोभमूला येन भोगार्था स्यात् । तथा च योग्ये काले सद्योमुक्तिदमात्मप्रत्यक्षमर्जुनस्य नियतं यथा भविष्यत्येव तथाऽर्जुनेऽधिकारसंपत्तिः संपिपादयिषिता भगवतो मनसि । एवञ्च ।

‘ उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ’ ( भ०गी० ४।३४ )

इत्युक्त्या स्पष्टं भवति । तथा चाव्यभिचारेण मोक्षपथपर्यवसायिनी प्राथमिक्यधिकारसंपत्तिर्गीताशास्त्रेण संपाद्यत इति युक्त एव गीताशास्त्रस्य वेदान्तशास्त्रे निवेशः । मुमुक्षोः प्राथमिकी भूमिका च गीताशास्त्रेणैव संपाद्यत इति प्रस्थानत्रयमध्ये निवेशोऽपि युक्तः । यथा माणवके जन्मनोद्भूतं ब्राह्मणत्वमुपनयनसंस्कारेण तत्र संग्रथितं भवति, अतो द्विजन्मा ब्राह्मणो भवति । तथोपनिषद्भ्य उद्भूयमानमात्मप्रत्यक्षं मुमुक्षौ ब्रह्मसूत्रेण संग्रथितं भवति ततो द्विप्रस्थानं वेदान्तशास्त्रम् । तस्य प्राथमिकी भूमिका च गीताशास्त्रेणेति गीतया सह प्रस्थानत्रयमुच्यते ।

ननु भगवानपि तत्त्वदर्श्येव । भगवति तत्त्वदर्शित्वाभावसंभावनायाः शशविषाणायमानत्वात् । तथा च तदानीमेवोपदेशविशेषेणाऽऽत्मप्रत्यक्षज्ञानं संपाद्यार्जुनस्योद्धारः कुतो न कृत इति चेन्न । तदानीमर्जुनस्य तादृगधिकाराभावात् । यस्य हि युद्धारम्भे भीष्मादीनां सांमुख्यमात्रेण रागोदयः स कथं सद्य एवाऽऽत्मप्रत्यक्षाधिकारी स्यात् ।

नन्वात्मपरोक्षज्ञानजनकोपदेशस्यापि तदानीमर्जुनोऽनधिकार्येव । मुमुक्षाऽपि यस्य न दृश्यते स कथं मोक्षप्राप्तये प्रवर्तते । तादृशप्रवृत्त्यभावे चास्थान एव तस्योपदेशः संपद्यत इति चेत्सत्यम् । अयमेव हि वेदान्तशास्त्रीयग्रन्थान्तरेभ्यो भगवद्गीतायां विशेषः । संसारे विरक्तं मुमुक्षुं प्रतीतरे ग्रन्थाः । भगवद्गीता तु संसारेऽनुरक्तमदृष्टमोक्षेच्छं सांसारिकेषु व्यवहारेषु प्रवृत्तमपि च बाह्यतस्तथाविधमेव सन्तमन्ततः शनैः शनैर्मनोवृत्तिविपर्यासद्वारा मोक्षेच्छां समुत्पाद्य

ज्ञानमार्गे प्रवृत्तिं संपादयति । अत एव ह्यस्या भगवद्गीताया उपयोगो भूयसां जनानां जायते ।

तथा हि—मोक्षेच्छा तीव्रमध्यममन्दभेदेन त्रिविधा । तत्र तीव्रेच्छावन्तो मुमुक्षवो दृढवैराग्याः शरीरयात्रामात्रार्थमेव केवलं सांसारिकं कर्मागत्या कुर्वन्तः संसारेऽनासक्ता अहर्निशं ब्रह्मसूत्रप्रतिपादितादिशोपनिषदर्थं शृण्वन्तस्तदर्थमननं निदिध्यासनं च कुर्वन्ति । ते च श्रुतार्थचिन्तनाय सहायतया भगवद्गीतार्थमनुसंधते । एतादृशश्च न शतेऽप्येकः किंतु सहस्रेष्वेकः कदाचित्स्यात् ।

मध्यमेच्छावांस्तु—अविरक्तः संसार आसक्तः शरीरयात्रार्थं तत्संबन्धेनान्यच्च कर्म कुर्वंस्तदतिरिक्ते काले ब्रह्मसूत्रप्रतिपादितदिशोपानिषदर्थं शृण्वंश्चिन्तयति । निदिध्यासनं तु प्रायोऽस्य न भवत्येव । चिन्तने च सहायार्थं गीतार्थानुसंधानं पूर्वापेक्षयाऽप्यधिकमस्य संभवति । एतादृशश्च शतेऽप्येकः कदाचित्स्यात् ।

मन्देच्छावन्तस्तु लेशतोऽपि विरक्तिशून्याः संसारेऽत्यासक्ताः प्रापञ्चिकानि तत्संबद्धानीतराणि सकलानि कर्माणि कुर्वन्तस्तैः कर्मभिः क्लिश्यन्तो मनोविनोदार्थमिव घटिकामात्रं वेदान्तश्रवणं कुर्वन्ति । यथा स्त्रियो गृहकर्मण्यहोरात्रं व्यापृताः सायं क्वचिद्देवालयादौ गत्वा पुराणश्रवणं कुर्वन्ति तद्वत् । एतेषां श्रवणमात्रमेव न तु मननं नतरां निदिध्यासनम् । श्रवणमपि च तदविद्यमानकल्पमेव । मनोवृत्तिविशेषपूर्वकमेव हि श्रवणं मनासि संस्काराधायकं भवति मननाद्युपयोगि च भवति । अत्र तु मन इतरविषयासक्तं न श्रवणैकप्रवणमिति कथं संस्कारं तदादधीत । ईदृशां च श्रोतॄणां गीताश्रवणेन प्ररोचनं कदाचित्स्यात् । गीतास्थवेदान्तस्य व्यावहारिकविषयामिश्रितत्वान्नतूपनिषच्छ्रवणेन । यथा देवताद्युत्साहप्रसङ्गे हरिदासाः कथां कुर्वन्ति तत्र पूर्वरङ्गश्रवणे लौकिका जनाः स्त्रियश्चालसा एव । किंतूत्तररङ्गश्रवणेऽभिलाषुकाः । तत्राऽऽख्यानसत्त्वात् । वक्त्रा च हरिदासेन तेन निदर्शनीभूतेनाऽऽख्यानेन यत्साधितं तत्रानादर एवाज्ञानां श्रोतॄणां स्त्रीणां च । तथा मन्दमुमुक्षावतां यथा गीताश्रवणेऽभिलाषः स्यान्न तथोपनिषच्छ्रवणे । सर्वथा तेषां सति संभवे मोक्षमार्गप्रदर्शिनी गीतैव भवति ।

येषां च मन्दाऽपि मुमुक्षा नास्ति तेष्वपि ये सात्त्विका आस्तिकाः कर्मनिष्ठा मुमुक्षोत्पादनयोग्यास्ते मुमुक्षाया अभावाद्यथाकथंचिद्गीताश्रवणे प्रवृत्ताः

स्युश्चेत्तेषामपि मुमुक्षोत्पादनद्वारा मोक्षमार्गप्रदर्शिनी गीता भवति । ईदृश एव चार्जुनो भगवता श्रोतृत्वेनानुगृहीतो गीतायाम् । प्रथमाध्याये ' दृष्ट्वेमं स्वजनं कृष्ण ' ( १ । २६ ) इत्यादिभिरष्टादशभिः श्लोकैस्तथा द्वितीयाध्याये ' कथं भीष्ममहं संख्ये ' ( २ । ४ ) इत्यादिभिः षड्भिः श्लोकैर्याऽर्जुनोक्तिर्ग्रथिता तस्यां लेशतोऽपि मुमुक्षा न दृश्यते ।

नन्वीदृशेषु वस्तुत आत्मोपदेशानधिकारिषु कृतस्योपदेशस्योषरोप्तबीजवन्नैष्फल्यं स्यादिति चेन्न । उपदेशेन तत्राधिकारसंपत्त्यभ्युपगमात् । यथा ' कृष्यां दहन्नपि खलु क्षितिमिन्धनेद्धो बीजप्ररोहजननीं ज्वलनः करोति ' ( रघु. ९ । ६० ) तद्वत् । सांसारिकस्य हीदृशक्रमेणैव मोक्षयोग्यता न जातुचिदेकपदे । तथा चोक्तम्——

ऐशान्यभिमुखो यद्वत्सौकर्यात्प्राङ्मुखो भवेत् ।
प्रत्यङ्मुखस्तथा नैकपदे भवितुमर्हति ॥ इति ।

एतेन " सांसारिकस्य मोक्षमार्गप्रवृत्तये सांसारिककर्मणः सकाशान्निवृत्तिरुपदेष्ट्रा संपादनीया । गीतायां त्वर्जुनस्य तथा निवृत्तिर्न दृश्यते । प्रत्युत—

' यदि मामप्रतीकारमशस्त्रं शस्त्रपाणयः ।
धार्तराष्ट्रा रणे हन्युस्तन्मे क्षेमतरं भवेत् । १ । ४६ ।
एवमुक्त्वाऽर्जुनः संख्ये रथोपस्थ उपाविशत् ।
विसृज्य सशरं चापं शोकसंविग्नमानसः ॥ ( गी० १।४७ )

इत्येव सांसारिकाद्युद्धकर्मणः सकाशान्निवृत्तस्यार्जुनस्य तत्र युद्धे प्रवृत्तिः संपादितेति विरुद्धम् " इत्यपास्तम् । भगवदाशयानवबोधात् । सांसारिककर्मणः सकाशान्निवृत्तिर्हि मोक्षमार्गीयस्यावश्यमपेक्षितेति सत्यम् । किंतु सा निरपेक्षा निवृत्तिः । इयं त्वर्जुनस्य वात्सल्यरागोदयाज्जायमाना निवृत्तिः सापेक्षा । तादृशनिवृत्त्यपेक्षया प्रवृत्तिरेव वरम् । प्रवृत्तिश्च यद्यपि प्रथमतः सापेक्षैव तथाऽपि फलाभिसंध्यहंकाराभावे सा निरपेक्षा भवन्त्युत्तरोत्तरं निसर्गतः क्षयिष्णुर्निरपेक्षनिवृत्तिरूपेण परिणमते । एवं कर्मणः सकाशान्निरपेक्षा निवृत्तिर्जायते न तु सा तथाविधा केनचित्क्रियते कर्तुं शक्यते वा । तदुक्तं भगवतैव—

' न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते ' ( गी० ३ । ४ ) इति ।

नैष्कर्म्यं च निरपेक्षा निवृत्तिरेव । सैव च मोक्षमार्गद्वारप्रवेशं जनयति। निरपेक्षा कर्मणि प्रवृत्तिस्तु तादृशद्वारप्रापिकेति सा साधनीया। सापेक्षा कर्मणि प्रवृत्तिस्तु तादृशद्वारपिधायिकेति त्याज्यैव। सापेक्षा कर्मनिवृत्तिस्तु द्वारपिधानेऽर्गलास्थानीयेति साऽत्यन्तं गर्हणीया प्रथमतस्त्याज्या भवति। सैव चार्जुनस्योदितेति महत्कष्टं मन्यमानो भगवान् 'कथमियमत्रोदिता' इत्याश्चर्यचकितचेताश्च

'क्लैब्यं मा स्म गमः पार्थ नैतत्त्वय्युपपद्यते' ( गी० २।३ )

इत्येवं वाक्पारुष्यपूर्वकं तदनुपपत्तिं प्रदर्शितवान् । यद्यपि वैराग्यं निःश्रेयसमार्गानुकूलं ननु कर्मणि प्रवृत्तिस्तथाऽपीदृशसापेक्षवैराग्यापेक्षया संसारासक्तिरपि गरीयसी। एतद्धि वैराग्यं श्मशानवैराग्यवदकस्मादेवोद्भूतं सांसारिकोत्कर्षप्राप्तेरपि विघातकं भवति। यतोऽत्रैवार्जुनस्य स्वधर्म इति बुद्ध्या जायमानैहिकपारलौकिकश्रेयःसाधनीभूता युद्धे प्रवृत्तिरागन्तुकेन वैराग्येणैकपदे विहताऽभूत्। तथा चैतादृशमागन्तुकं वैराग्यं सांसारिकोत्कर्षे निःश्रेयसे चेति द्वयेऽपि प्रतिबन्धकं यथा मलः। तदुक्तम्—

मलो हि वाससो हन्ति लाक्षारञ्जनयोग्यताम्।
नापि स्वाभाविकीं तत्र प्रत्याययति शुभ्रताम्॥ इति।

एवं चेदमागन्तुकमुद्भूतं वैराग्यं यत्तस्यापसारणं प्रथमतः कर्तव्यतामापतितं भगवतः। ततस्तस्याधिकारसंपादनम्। ततस्तस्य (अर्जुनस्य) उद्धारः।

ननु गीतास्थोपदेशेनार्जुनस्योद्धारो जातो न वा?। आद्ये ततो युद्धे प्रवृत्तिर्न संभवति। अन्त्ये भगवत्संनिधानेऽप्यर्जुनो नोद्धृत इति भगवतो दोषप्रसङ्ग इति चेन्न। अर्जुनस्योद्धारः कर्तव्य इति भगवतो मतिर्निश्चितैव । किंत्वधिकारं विनोद्धारो न कर्तुं शक्यत इत्यतो गीतास्थोपदेशेन भगवताऽर्जुनस्याधिकारः संपादितः। उद्धारस्तु तस्य पश्चाद्भविष्यति।

'उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः' ( गी. ४ । ३४ )

इत्यनेनेदं सूचितं भवति।

ननु कर्तुमकर्तुमन्यथा वा कर्तुं शक्तेन भगवताऽर्जुनमुद्धर्तुकामेन च सता किमर्थं तदानीमेवार्जुनस्योद्धारो न कृत इति चेन्न। भगवतोऽपि स्वकल्पितनियतिकृतनियमानुसारेणैव वर्तनात्।

ननु स्वकृतनियमस्य स्वेनाप्युनुल्लङ्घनीयत्वाद्यदि तदानीं सद्य एवार्जुनस्योद्धारो न कर्तुं शक्यते तर्ह्यात्मोपदेशेन मोक्षाधिकारसंपादनं यदर्जुनस्य भगवता कृतं

तत्तदानीं किमर्थं कृतम् । युद्धारम्भे विषमे काले केवलमर्जुनस्याऽऽगन्तुकवैराग्यापसारणमेव कर्तुं युक्तम् । मोक्षाधिकारसंपादनार्थमुपदेशस्तु युद्धसमाप्त्यनन्तरं कर्तव्य इति चेन्न । आगन्तुकवैराग्यनिरासाय यः प्रयत्नः कृतस्तदपेक्षयाऽन्यः प्रयत्नो यद्यर्जुनस्य मोक्षाधिकारप्राप्तये भगवता कृतः स्यात्तर्हीयं शङ्का युज्येत । अत्र त्वेकेनैव प्रयत्नेनाऽऽगन्तुकवैराग्यनिरासोऽपि कृतस्तेनेव च तस्याधिकारोऽपि संपादितः ।

ननु मृतबान्धवस्य शोकनिरासाय समागतैराप्तैः सान्त्वनं क्रियते तथा लघुनैवोपायेनार्जुनस्याऽऽगन्तुकवैराग्यनिरासः कुतो न कृतो भगवतेति चेन्न । अर्जुनप्रभृतीनामुदात्तान्तःकरणानां मनसि सहसा क्षुद्रा विकारा नैव प्रादुर्भवन्ति । यदि च प्रादुर्भूतास्तर्हि महतैव कारणेन प्रादुर्भूता इति तन्निरासार्थं प्रयत्नोऽपि महानेवापेक्ष्यते । ईदृशमानसिकवैराग्यनिरासार्थं प्रयत्नश्च लघुर्महान्वा वेदान्तशास्त्रीयसिद्धान्तावलम्बनमेव । लोकेऽपि सान्त्वनार्थं समागता आप्ताः संसारासारत्वादिप्रदर्शनेनैव सान्त्वयन्ति । अत्रापि चार्जुनस्य प्रादुर्भूतं यत्तादृशमागन्तुकं वैराग्यं तन्निरासाय यावदवश्यकथनीयतयोपस्थितं तावदेव वेदान्तशास्त्रीयसिद्धान्तजातं कथितम् । तावतैव चार्जुनोऽधिकारी संपन्न इति ।

सेयं भगवद्गीता ‘ धृतराष्ट्र उवाच—धर्मक्षेत्रे कुरुक्षेत्रे ’ इत्यारभ्याष्टादशाध्यायात्मिका । तत्र सूत्रीभूतो द्वितीयाध्याय इति प्रसिद्धमेव यतस्तत्राशोच्यानन्वशोचस्त्वमित्यादिभागेन वेदान्तशास्त्रीयाः सिद्धान्ताः सूचिताः । ततः प्राक्तनो भागस्तु पूर्वसंदर्भप्रतिपादक इति भगवद्गीतायां संगृहीतः । इतरथा कीदृशोऽशोच्याननुलक्षीकृत्यार्जुनेन शोकः कृतः कीदृशं च प्रज्ञावादभाषणं तस्यावबोधो न स्यात् ।

स्यादेतत् । मा भून्नाम प्राक्तनसंदर्भस्य गीतायामनुप्रवेशः । अशोच्यानन्वशोचस्त्वमित्यारभ्यैव गीतेत्युच्यताम् । भवतु च सा सप्तदशाध्यायात्मिकैव । न च तथा सति ।

अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे ।

इत्येतादृशी या भगवदुक्तिस्तत्रत्यशोकप्रज्ञावादयोः कीदृशं स्वरूपं केन च कारणेन तयोः प्रादुर्भाव इत्येतज्ज्ञानं गीताध्यायिनो न स्यादिति वाच्यम् । तज्ज्ञानस्य प्रकृतेऽनुपयोगात् । ननु यथोपनिषत्स्वाख्यायिका प्ररोचनार्था दृश्यते तथाऽत्र प्राक्तनसंदर्भः प्ररोचनार्थः स्यात् । प्ररोचनेन सम्ये

वक्ष्यमाणवेदान्तशास्त्रीयसिद्धान्तज्ञाने वाचकस्य प्रवृत्तिसौकर्यं भवतीति सत्यम् । यद्यपि प्रवृत्तिसौकर्यार्थं प्ररोचनमावश्यकं तथाऽप्यत्र प्राक्तनसंदर्भस्य तादृशं प्रयोजनं वक्तुं न शक्यते । यतो नैव भगवतोऽत्र प्रवृत्तिः प्राथमिकी वेदान्तशास्त्रीयसिद्धान्तानुपदेष्टुम् । किंतु युद्धाद्विमुखस्यार्जुनस्य पुनः प्रवृत्त्यर्थम् । तथा च तस्य युद्धे प्रवृत्तिर्यथा स्यात्तथोपदेशः कर्तव्यः । अर्जुनस्य पुनः पूर्ववद्युद्धे प्रवृत्तिश्च वेदान्तशास्त्रीयासिद्धान्तप्रदर्शनं विना नैव संभवतीत्यालक्ष्यागत्याऽत्र ते ते तत्तत्प्रसङ्गोचिताः सिद्धान्ता: ग्रथिताः । अतश्च वेदान्तशास्त्रीयसिद्धान्तज्ञाने प्रवृत्तिसौकर्याय प्ररोचनार्थं संदर्भोक्तिर्गीतायां प्रविष्टेति वक्तुमशक्यमिति चेत् ।

उच्यते । शोकस्य प्रज्ञावादस्य च स्वरूपकारणाज्ञानायैव हि प्राक्तनसंदर्भो गीतायां ग्रथितः । न च तज्ज्ञानस्य प्रकृते नोपयोग इत्युक्तम् । यथा च

‘ धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः ’

इत्यत्र कथं समवेताः कथं वा तेषां युयुत्सा समभूत्तज्ज्ञानार्थं ततः प्राक्तनसंदर्भो गीतायां नानुप्रविष्टो भवति । तज्ज्ञानस्य प्रकृतानुपयोगात्तथैवात्रेति वाच्यम् । वैषम्यात् । यस्य ह्यर्थस्य प्राक्तनसंदर्भसहायेनैव वक्ष्यमाणकार्योपयोगस्तत्र पूर्वसंदर्भप्रदर्शनमावश्यकम् । प्रकृते हि वेदान्तशास्त्रीयसिद्धान्तजातं यावता भागेन ग्रथितं तावान्भागो गीताशब्देन व्यवहर्तव्य इति निर्विवादमेव । तत्र प्रथमतो नित्यानित्यवस्तुविवेको न त्वेवाहं० ( २ । १२ ) मात्रास्पर्शा० ( २ । १४ ) इत्यत्र ग्रथितः । स च पूर्वप्रसङ्गविशेषेणावश्यवक्तव्यतया समुपस्थित इति नान्तरीयकतयोक्तः । तमन्तरेणार्जुनशोकनिवारणस्याशक्यत्वात् । अर्जुनो हि पण्डितः । न तस्य शोकः साधारणेन कारणेन पृथग्जनस्येव निवारयितुं शक्यते । ‘ दैवी विचित्रा गतिः, गहना कर्मणो गतिः, न ज्ञायते सहसा केनापि । अवश्यं भोक्तव्यमेव हि प्राक्तनकर्मणः फलम् । अपरिहार्यमेतादिति सह्यमेव भवति’ इत्येष सान्त्वनप्रकारः शोकाविष्टस्य साधारणजनस्य न तु पण्डितस्य । तस्य ह्ययं सान्त्वनप्रकारः सततं बुद्ध्यारूढ एवाऽऽस्ते । न तु कदाऽपि विस्मृतो भवति । यद्यपि सर्वे विषयाः सर्वदा नैव स्मृतिपथमाप्नुवन्ति । अनेकेषां विषयाणां पार्थक्येनैकपदे स्मृतिविषयताया असंभवात् । मुखोद्गतायामपि गीतायां पूर्वश्लोकोच्चारणावसानक्षण एवोत्तरः श्लोकः स्मृति-

विषयो भवति । तथाऽपि यो विषयस्तद्योग्ये समये कदाऽपि स्मृतिपथमनारूढो न भवति स सर्वदा स्मृततुल्य एव न तु कदाऽपि विस्मृत इत्युच्यते । तदुक्तम्—

पूर्वानुभूतो विषयो योग्येऽपि समये यदि ।
नारोहति स्मृतिपथं स वै विस्मृत उच्यते ॥
अप्राप्तोऽपि स्मृतिपथमयोग्ये समये ध्रुवम् ।
न विस्मृतः स मन्तव्यो न सर्वे सर्वदा स्मृताः ॥ इति ।

एवं चोक्तः सान्त्वनप्रकारः सर्वदा स्मृत्यारूढ एव पण्डितानाम् । तथा चोक्ते सान्त्वनप्रकारे पण्डितस्यार्जुनस्य मनोवृत्तौ जागरूके सत्येव यत्तत्र शोकः पदमादधात्तन्नूनं नायं शोकस्तादृशसान्त्वनापनोद्यः । किंत्वन्यः शोक-विशेषः । उत्कटः शोक इति यावत् । अत एव तन्निवारणार्थं नित्यानित्य-वस्तुविवेकोपदेशपर्यन्तमनुधावनं भगवतोऽवश्यकर्तव्यतामापतितम् । शोकस्यो-त्कटत्वादेव च प्रज्ञावादानुमितपाण्डित्यस्य शोकेन सह सामानाधिकरण्यमशो-च्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषस इत्युक्तं संगच्छते । प्रज्ञावादानुमितं पाण्डित्यं चात्र नानुभवपर्यवसायि । किंतु पूर्णदशानापन्नमेव । अन्यथा तूत्कटस्यापि शोकस्यावकाशो न स्यात् । एतच्च प्रज्ञावादांश्च भाषस इत्यत्र-त्यवादशब्देन ध्वनितम् । अन्यथा प्रज्ञया चैव भाषसे, प्रज्ञया संभाषसे, प्राज्ञत्वेनैव भाषसे, इत्युक्ते शब्दस्य भाषणकर्मत्वं प्रसिद्धमेवेति तावन्मात्रेण सिद्धौ वाशब्दो व्यर्थः स्यात् । मेघो जलं वर्षतीत्यत्र जलशब्दवत् । तथा चात्र वाशब्दोक्तिः शब्दप्राधान्यबोधनद्वाराऽर्थस्याप्राधान्यं सूचयति । अर्थस्या-प्राधान्यं चानुभवपर्यवसायित्वाभावः । एवं च शोकस्योत्कटत्वप्रदर्शनाय पाण्डित्यस्य चानुत्कटत्वप्रदर्शनायैव हि दृष्ट्वेमं स्वजनं कृष्ण ( १ । २८ ) इत्यादिरर्जुनोक्तिरत्र गीतायां संनिवेशिता । भीष्माद्यवलोकनक्षणे सद्य एव शरीरे गात्रावसादमुखपरिशोषवेपथ्वाद्युद्गमः शोकाधिक्यं प्रदर्शयति । तथा धर्मसंमूढचेता इत्युक्तिः पाण्डित्यस्यानुत्कटत्वं सूचयति । अथ

दृष्ट्वेमं स्वजनं कृष्ण युयुत्सुं समुपस्थितम् । ( १ । २८ )

इत्यारभ्यैव गीताग्रन्थोऽस्तु । तावतैवोक्तार्थसिद्धेरिति चेन्न । भीष्मादेः स्वजनस्य युयुत्सुत्वेनावलोकः कथमभूत्तज्ज्ञापनाय ततः प्राक्तनग्रन्थस्याऽऽव-श्यकत्वात् । अन्यथा हि सामान्यस्वरूपेण भीष्मादिस्वजनावलोकने गात्रावसा-

दनादिपरिणामासंभवात् । भीष्मादिकृतसिंहनादपूर्वकशङ्खनादेन तेषां सोत्साहं युयुत्सुत्वमवगतमभूदतस्तस्य संजनयन्हर्षमित्यादेः प्राक्तनग्रन्थस्य गीतायां प्रवेश आवश्यकः ।

इदं चात्रावधेयम्—भीष्मद्रोणकर्णपराक्रमेषु दुःशासनबले चातीव विश्वस्तचेतसो दुर्योधनस्य तत एव युद्धे प्रवृत्तस्य युद्धे जयः स्यादेवेति मन्वानस्य च ' कदा युद्धे पाण्डवान्विनाश्य निष्कण्टकं मे राज्यं स्यात् ' इत्येवं युद्धविषयेऽतीव त्वरितं मनोऽभूत् । अस्यां चावस्थितौ तदानीं दुर्योधनेनाप्रेरितस्यापि भीष्माचार्यस्य ' युद्धं प्रारभ्यते ' इत्येवं स्वयमकथयतश्च सहसैव युद्धारम्भसूचकं सिंहनादमाकर्ण्य कथं हर्षो दुर्योधनस्य न स्यात् । किंच पश्यैतां पाण्डुपुत्राणामाचार्य० इत्येवं द्रोणाचार्यं प्रति वक्तुं प्रवृत्तस्य दुर्योधनस्य ' भीष्ममेवाभिरक्षन्तु भवन्तः सर्व एव हि ' इत्येतत्पर्यन्तं भाषणमत्र निर्दिश्यते । तावतैव च तद्भाषणमवसितमथवाऽग्रे किंचिद्वक्तव्यं तन्मनसि स्यादिति न निर्णेतुं शक्यते । यतो न तत्र ' एवमुक्त्वा विरराम ' इति ' ततः ' इति वा वागवसानबोधकं किंचिन्निर्दिष्टं दृश्यते । एवं सति दुर्योधनवाग्विरतिमप्रतीक्ष्यैव वा मध्य एव दुर्योधनवच आक्षिप्य वा भीष्माचार्येण कृतं युद्धप्रारम्भसूचकं सिंहनादमाकर्ण्य दुर्योधनस्य मनसि हर्षातिशयः स्यादिति किं वक्तव्यम् । अत एव च ' दृष्ट्वा तु ' इत्यारभ्य प्रोक्तः संदर्भभागो गीतायां संनिविष्टः । एवं च दुर्योधनहर्षातिशयजनकप्रवृत्तिमद्भीष्मादिस्वजनावलोकनेन तथा विषादोऽर्जुनस्य समभूद्यथा तन्निरासाय नित्यानित्यवस्तुविवेकादयो वेदान्तशास्त्रीयासिद्धान्ता अवश्यं तदानीं प्रदर्शयितव्या अभूवन् । अतस्तादृशपूर्वसंदर्भबोधको भागो गीतायामनुप्रविष्टः । संजयधृतराष्ट्रसंवादोऽयमित्येतद्बोधकमाद्यं श्लोकद्वयमित्यतस्तादृशोऽष्टादशाध्यायात्मकोऽयं गीताग्रन्थः ।



श्रीमद्भगवद्गीतायाः प्रथमोऽध्यायः।

—:०:—

धृतराष्ट्र उवाच—

धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः।
मामकाः पाण्डवाश्चैव किमकुर्वत संजय ॥ १ ॥

अथ भवार्थदीपिकानुसारेण व्याख्यायते। पुत्रस्नेहेन मोहितो धृतराष्ट्रः कुरुक्षेत्रवृत्तान्तं कथयेति संजयमवोचत्। यच्च कुरुक्षेत्रं धर्मालयः,। यत्र च पाण्डवा मदीयाश्च युद्धनिमित्तेन संगताः, तैश्च तत्रैतावत्कालपर्यन्तं परस्परमुद्दिश्य किं कृतं तत्सत्वरं मां कथयेति ॥ १ ॥

संजय उवाच—

दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्योधनस्तदा।
आचार्यमुपसंगम्य राजा वचनमब्रवीत् ॥ २ ॥
पश्यैतां पाण्डुपुत्राणामाचार्य महतीं चमूम्।
व्यूढां द्रुपदपुत्रेण तव शिष्येण धीमता ॥ ३ ॥

ततः संजयोऽवादीत्तदानीं पाण्डवसैन्यं प्रक्षुब्धमभूत्, यथा महाप्रालये कृतान्तमुखं प्रसृतं प्रक्षुब्धं भवति तद्वत्। यथा समुच्छ्वसितं कालकूटं स्तम्भयितुं न कोऽपि प्रभवति तथा तत्पाण्डवसैन्यं घनीभूतं सदेकपदे समुत्थितमभूत्। यथा वडवानलः प्रदीप्तः प्रलयवातेन समेधितः समुद्रं संशोष्याऽऽकाशतलं समुद्गच्छति तथा तद्दुर्धरं पाण्डवसैन्यमनेकविधै रचनाविशेषैर्व्यूढं भयानकमदृश्यत तदानीम्। तथाविधमपि तत्क्षुद्रमिवामन्यत दुर्योधनः। यथैकीभूताननेकानपि गजान् हेलयैव पश्यति सिंहस्तद्वत्। सपद्येव तु दुर्योधनो द्रोणाचार्यसमीपमागत्यावोचत् पाण्डवानामिदं महत्सैन्यं समुत्थितं त्वया दृष्टं किमु। चलन्तो गिरिदुर्गा इवामी अभितो वर्तमाना विविधव्यूहाकारा बुद्धिमता द्रुपदपुत्रेण विरचिताः, अयं च द्रुपदपुत्रस्त्वयैव शिक्षितो विद्यास्पदीकृतस्तेनैवायं सैन्यसागरः (कियन्तं कथं च) विस्तारं प्रापितस्तत्पश्य ॥ २ ॥ ३ ॥

अत्र शूरा महेष्वासा भीमार्जुनसमा युधि।
युयुधानो विराटश्च द्रुपदश्च महारथः॥ ४॥

पश्चात्र शस्त्रास्त्रप्रवीणाः क्षत्रधर्मनिपुणा असाधारणा वीरा दृश्यन्ते ये बलेन महत्त्वेन पराक्रमेण च भीमार्जुनसदृशाः। प्रसङ्गतश्च तान्कौतुकेन कथयामि। एष योद्धा सात्यकिर्विराटश्चात्राऽऽगतो दृश्यते तथा महारथः श्रेष्ठो वीरो द्रुपदोऽपि दृश्यते॥ ४॥

धृष्टकेतुश्चेकितानः काशिराजश्च वीर्यवान्।
पुरुजित्कुन्तिभोजश्च शैब्यश्च नरपुंगवः॥ ५॥
युधामन्युश्च विक्रान्त उत्तमौजाश्च वीर्यवान्।
सौभद्रो द्रौपदेयाश्च सर्व एव महारथाः॥ ६॥

अयं च चेकितानो धृष्टकेतुः पराक्रमी काशिराज उत्तमौजास्तथा शैब्यश्च दृश्यताम्। अयं च कुन्तिभोजोऽयं युधामन्युरेते च पुरुजित्प्रभृतयो राजान एते सर्वे दृश्यन्ताम्। अयं च सुभद्राहृदयानन्दोऽपरोऽर्जुन इवाभिमन्युरेनं पश्य। तथेमे द्रौपदीपुत्राः। सर्वे चैते वीरा महारथा गणयितुं न शक्यन्त इयन्त इति। भूयांसोऽत्र मिलिताः सन्ति॥ ६॥

अस्माकं तु विशिष्टा ये तान्निबोध द्विजोत्तम।
नायका मम सैन्यस्य संज्ञार्थं तान्ब्रवीमि ते॥ ७॥
भवान्भीष्मश्च कर्णश्च कृपश्च समितिंजयः।
अश्वत्थामा विकर्णश्च सौमदत्तिस्तथैव च॥ ८॥

अधुना चास्माकं सैन्ये ये प्रसिद्धा योद्धारो वीरास्तांश्च प्रसङ्गतः कथयामि श्रूयताम्। भवत्प्रभृतयो ये मुख्या वीरास्तेषु कांश्चिद्विशेषतोऽवबोधाय कथयामि। अयं महाप्रतापी गङ्गानन्दनो भीष्माचार्यो यः प्रतापतेजसा साक्षादादित्य इव चकास्ति। तथा महावीरोऽयं कर्णः शत्रुभूतानां गजानां सिंह इव विद्रावयति। अत्र चैकैकोऽपि मनोव्यापारमात्रेणाखिलं विश्वं संहर्तुं प्रभवति। तथाऽयं कृपाचार्योऽप्येकस्तत्र पर्याप्तो भवति। तथाऽयं वीरो विकर्णस्तथाऽयमश्वत्थामा यस्माच्च कृतान्तोऽपि मनसि सदा भीत इवाऽऽस्ते। तथाऽयं संग्रामे जयशीलः सौमदत्तिः। अन्ये चात्र भूयांसो योद्धारः समुपस्थिता येषां बलं परिमातुं धाताऽपि न शक्नोति॥ ७॥ ८॥

अन्ये च बहवः शूरा मदर्थे त्यक्तजीविताः ।
नानाशस्त्रप्रहरणाः सर्वे युद्धविशारदाः ॥ ९ ॥

ये च शस्त्रविद्यापारंगता मूर्तिमन्तो मन्त्रावतारा इव प्रतीयन्ते । सांप्रतं च जगति यदस्त्रजातं दृश्यते तद्यदुपज्ञमेव किमु । एवं भूताश्चेमे जगत्यप्रतिमल्लाः प्रतापेन च सर्वतः परिपूर्णास्तथा मामनुसरन्ति यथेदानीं स्वकीयाः प्राणा अप्येतैस्तृणाय मन्यन्ते । यथा च पतिव्रतानां स्त्रीणां चित्तं पतिमन्तरेणान्यत्र क्वापि नानुरज्यते किंत्वेकत्र पत्यावेव सानुरागं भवति तथा सांप्रतमेतेषां सर्वेषां योद्धॄणां चित्तं मय्येव सानुरागं विद्यते । यतश्च सांप्रतमेते स्वकीयं जीवितमपि मत्कार्यापेक्षया नाधिकं मन्यन्ते । एतादृशी चैतेषां मयि निरवच्छिन्ना निरुपाधिका च प्रीतिः । युद्धकर्मनिपुणाश्चैते कलायां च कीर्तेर्जीवित्वमेव यदधीनं तथा क्षात्रनीतिश्च येभ्य एव प्रावर्तत किमु । एतादृशाश्चैते सर्वाङ्गपरिपूर्णा अस्मत्सैन्ये वर्तन्ते ते च संख्यातीता एवेति कथमिदानीं तान्गणयामि ॥ ९ ॥

अपर्याप्तं तदस्माकं बलं भीष्माभिरक्षितम् ।
पर्याप्तं त्विदमेतेषां बलं भीमाभिरक्षितम् ॥ १० ॥

यश्चायं महायोद्धा क्षत्रियेषु श्रेष्ठो जगज्ज्येष्ठो भीष्माचार्यः स सैनापत्येऽभिषिक्तः । एतत्सामर्थ्यमुपजीव्यैव चेमे सर्वे व्यूहा दुर्गा इव विरचिताः सन्ति । अनेन चेदृशेन सेनासमूहेन तुलितं चेल्लोकत्रयमपि न्यूनमेव स्यात् । पश्य यथाऽऽदौ तावत्समुद्रो निसर्गत एव न कस्य भयप्रदः किं पुनस्तस्य तत्र वडवानलो यदि सहायः स्यात् । तद्वदयं भीष्माचार्यः प्रतिभाति । यथा वा महावातेन प्रक्षोभितः प्रलयाग्निस्तथाऽयं सेनापतिर्गङ्गासुतः प्रतिभाति । एतादृशं च सेनापतिं भीष्माचार्यं योद्धुं कः संनद्धो भवेत् । एतत्पाण्डवसैन्यं चास्मत्सैन्यापेक्षयाऽतीव स्वल्पतरं दृश्यते । यश्चास्य पाण्डवसैन्यस्य सेनापतिर्भीमसेनः स दुर्विनीत इति प्रसिद्धमेव । इत्येतावदुक्त्वा विरराम ॥ १० ॥

अयनेषु च सर्वेषु यथाभागमवस्थिताः ।
भीष्ममेवाभिरक्षन्तु भवन्तः सर्व एव हि ॥ ११ ॥

ततः पुनरपि दुर्योधनः सकलसैनिकानुद्दिश्यावोचत् । सैनिकाः, नियमिते स्वस्वस्थाने स्वकीयं सैन्यं कार्यक्षमं यथा भवेत्तथा प्रस्थापयत । अत्र च कतिं सैन्यसमूहे यस्या अक्षौहिण्या यो महारथो नेता स्यात्सर्वथा तादृशमहारथायत्तयैव सत्या तया तदनुमत्यैव स्वस्वकार्यं विधेयम् । ( अव्यवस्था न

कार्या ) (अक्षौहिणीप्रमाणं च सप्तत्यधिकाष्टशताधिकैकविंशतिसहस्रपरिमिता २१८७० रथाः । तावन्त एव च गजाः । तत्त्रिगुणा अश्वाः । पञ्चगुणाश्च पदातयः । यश्च दशसहस्रयोद्धृभिः साकमेक एवैकपदे योद्धुं प्रभवति स महारथ उच्यते )। महारथेन च तेन सेनापतिभीष्माचार्याज्ञानुसारेण सा स्वायत्ताऽक्षौहिणी नियम्या भवति । पुनश्च द्रोणाचार्यं प्रत्युवाच सर्वमेतद्व्यवस्थितं यथा स्यात्तथाऽवलोकनीयं भवता । सर्वैश्च भवद्भिर्भीष्माचार्यः संरक्षणीयः । यथाऽहं तथैवायमवलोकनीयः । यतो भीष्माचार्यमुपजीव्यैवैतत्सकलमस्मत्सैन्यं कात्स्न्येन कार्यक्षमं भवति ॥ ११ ॥

**तस्य संजनयन्हर्षं कुरुवृद्धः पितामहः ।**
**सिंहनादं विनद्योच्चैः शङ्खं दध्मौ प्रतापवान् ॥ १२ ॥**

अनेन च दुर्योधनभाषणेन सेनापतिर्भीष्माचार्यः संतुष्टोऽभूत्सिंहनादं च कृतवान् । सा च सिंहनादगर्जना तथाऽद्भुततराऽभूद्यथा तत्प्रतिध्वनिरुभयोरपि सैन्ययोरन्ततो न संमाति स्म । ( बहिःप्रदेशोऽपि तेनाऽऽक्रान्तोऽभूत् )। यावदेव च स प्रतिध्वनिः प्रसरति तावदेव वीरवृत्तिमनुसरता भीष्माचार्येण दिव्यः शङ्ख आध्मातोऽभूत् । तेन च मिथोमिलितेन नादद्वयेन त्रैलोक्यं बधिरमभूत् । ईदृशश्चायं महाध्वनिः किं शिथिलावयवस्य पतत आकाशस्याथवा सर्वतः संक्षुब्धस्य महासागरस्येत्येवं लोकाः शशङ्किरे । चराचरमिदं त्रैलोक्यं तदा कम्पायमानमभूत् । तेन च महाघोषेण गिरिगुहा अपि सर्वतो व्याप्ता अभूवंस्तावदेव च तत्र सैन्ये रणवाद्यान्यवाद्यन्त ॥ १२ ॥

**ततः शङ्खाश्च भेर्यश्च पणवानकगोमुखाः ।**
**सहसैवाभ्यहन्यन्त स शब्दस्तुमुलोऽभवत् ॥ १३ ॥**

स च नानाविधवाद्यध्वनिर्भीषणः कर्कशश्च महतामपि महाप्रलयध्वनिवद्राभाति स्म । भेरीनिस्साणशङ्खकाहलमहाघण्टादीनामनेकविधानां वाद्यानां भटानां च तैस्तैः शब्दविशेषैर्मिथः संमिश्रितैरेको भीषणो महान्ध्वनिविशेषः समुदभूत् । तत्र केचिद्युद्धोन्मुखा भटा आवेशेन भुजाघातं जनयामासुः केचिच्चाऽऽवेशयुक्ताः शत्रूनाह्वयन्ति(न्ते) स्म । तदानीं हस्तिनश्च मदोन्मत्ता इतस्ततो धावमाना अङ्कुशाघातमपि नागणयन्त । का कथा तत्र निसर्गतो भयशीलानाम् । ते च कान्दिशीका वात्याप्रविष्टतृणवद्यत्र क्वापि बभ्रमुः । तदानीं च कृतान्तोऽपि भयाविष्टः स्वाङ्गान्यमुञ्चत्किमु । केचिच्च भयार्दिता यथास्थिता एव गतप्राणा-

अभूवन् । धीराणामपि च केषांचिद्दन्ताः स्तम्भिता अभूवन् । प्रसिद्धा अपि केचिद्रणशूराश्चकम्पिरे । तादृशं चात्यद्भुतं तूर्यध्वनिमकस्माच्छ्रुत्वा ब्रह्माऽपि व्याकुलोऽभूत् । देवा अपि तदानीं प्रलयकालोऽयमुपस्थितः किम्वित्यमन्यन्त । एतादृशी च देवलोकेऽपि स्थितिरभूत् । तदानीं च पाण्डवसैन्ये किमपि वृत्तमभूत् ॥ १३ ॥

ततः श्वेतैर्हयैर्युक्ते महति स्यन्दने स्थितौ ।
माधवः पाण्डवश्चैव दिव्यौ शङ्खौ प्रदध्मतुः ॥ १४ ॥
पाञ्चजन्यं हृषीकेशो देवदत्तं धनंजयः ।
पौण्ड्रं दध्मौ महाशङ्खं भीमकर्मा वृकोदरः ॥ १५ ॥
अनन्तविजयं राजा कुन्तीपुत्रो युधिष्ठिरः ।
नकुलः सहदेवश्च सुघोषमणिपुष्पकौ ॥ १६ ॥

तत्र पाण्डवसैन्ये विशिष्ट एको रथ आसीद्यो विजयस्य सारभूतो महतस्तेजसो भाण्डार इव यत्र च गरुडवेगाश्चत्वारोऽश्वाः संयोजिताः । रथश्रेष्ठश्चायं पक्षवान्मेरुरिव दृश्यते स्म यस्य तेजसा दश दिशो व्याप्ता अभूवन् । यत्र च रथश्रेष्ठे साक्षाद्वैकुण्ठनायको भगवान्सारथिस्तस्य गुणाः किमु वर्णनीयाः । तस्य च रथस्य ध्वजस्तम्भोपरि वानरस्तिष्ठति यः साक्षान्मूर्तिमान्शंकरः । सारथिश्च तत्र भगवाञ्श्रीकृष्णो रथी चार्जुनः । चित्रं चेदं दृश्यते यद्भक्तविषये भगवतः किमपि विलक्षणं प्रेम येनार्जुनस्य सारथ्यं स्वयं स्वीकृतवान् । सेवकस्य चार्जुनस्य रक्षणाय तं रथिरूपेण स्वस्य पृष्ठतः कृत्वा स्वयं च सारथिरूपेण तस्य पुरतस्तिष्ठन्हेलयैव पाञ्चजन्यं शङ्खमाध्मातवान् । तादृशशङ्खध्वनिश्चातिमहांस्तथा गर्जति स्म यथा पूर्वं कौरवसेनायां सर्वतः समुदितोऽनेकवाद्यध्वनिः स तदानीमपहृत इव केनापि क्व गतस्तन्न ज्ञायते यथा सूर्योदये नक्षत्राणि लुप्तप्रायाणि भवन्ति तद्वत् । अर्जुनोऽपि तदानीं देवदत्तनामानं शङ्खमाध्मातवान्यस्माच्चातिभीषणो महान्ध्वनिः सद्यः समुदभूत् । शङ्खनादद्वयं च तन्मिलितं सदेकीभूतमतीव विलक्षणं तथा भयप्रदमभूद्यथा ब्रह्माण्डमधुना शतशो विदीर्यते किमिति लोकानां मतिरजायत । सद्य एव च प्रक्षुब्धो महाकाल इव भीमसेनोऽप्यावेशपूर्णः पौण्ड्रनामानं महाशङ्खमाध्मातवान् । तस्माच्च महाप्रलयकालिकमेघगर्जनेवातिगम्भीरः शब्दः समुदभूत् । तदानीमेव चानन्तविज-

यनामानं शङ्खं धर्मराज आध्मातवांस्तथा नकुलः सुघोषनामानं शङ्खं सहदेवश्च मणिपुष्पकनामानं शङ्खमाध्मातवान् । तदानीं च शङ्खनादेनान्तकोऽपि भयभीतोऽभूत् ॥ १४ ॥ १५ ॥ १६ ॥

**काश्यश्च परमेष्वासः शिखण्डी च महारथः ।**
**धृष्टद्युम्नो विराटश्च सात्यकिश्चापराजितः ॥ १७ ॥**
**द्रुपदो द्रौपदेयाश्च सर्वशः पृथिवीपते ।**
**सौभद्रश्च महाबाहुः शङ्खान्दध्मुः पृथक्पृथक् ॥ १८ ॥**
**स घोषो धार्तराष्ट्राणां हृदयानि व्यदारयत् ।**
**नभश्च पृथिवीं चैव तुमुलो व्यनुनादयन् ॥ १९ ॥**

तत्र पाण्डवसैन्ये चानेके भूपतय आसन्—द्रुपदः, द्रौपदीपुत्राः, महाबाहुः काशीपतिः, अर्जुनपुत्रः, अपराजितः सात्यकिः, राजा धृष्टद्युम्नः, शिखण्डी, विराटश्चैते चान्ये च ये नृपश्रेष्ठा वीराः सैनिकाश्च ते सर्वेऽप्येकपद एव नानाविधान् शङ्खान्पृथक्पृथग् दध्मुः । तेन चाकस्माज्जातेन महाघोषनि॰तेन शेषः कूर्मश्च भीतः सन्भूभारं त्यक्तुमुद्यतोऽभूत्किमु । तदानीं च लोकत्रयं प्रकम्पितं मेरुर्मन्दरश्चाऽऽन्दोलितः सागरजलं च कैलासपर्यन्तं समुच्छ्वसितमभूत्किमु । तथा पृथ्वीतलं न्युब्जं भवति किं नभस्तलं च त्रुटितं पतति किमित्येवं शङ्कोदिताऽऽसीत् । नक्षत्राणां च तदा वर्षाव एव किमु समभूत् । निराश्रया पृथ्वी क्वापि लयमगादित्येवं वार्ता सर्वतोमुखी सत्यलोके देवानामाविरभूत् । प्रलयकालः किंन्वयम् । यतोऽद्य दिनारम्भ एव दिनावसानमभूदित्येवं सूर्यादर्शनेन लोकानां मतिरासीत् । त्रिष्वपि लोकेषु सर्वत्र प्रलयकालवद्धाहाकार उदजृम्भत् । तादृशं च तच्छङ्खध्वनिचेष्टितं पश्यता विस्मितेन भगवतैवं ( लोकानां किंकर्तव्यतामूढतया ) युगान्तो भवेदिति पश्यता स महान्संभ्रमः क्षणेनोपसंहृतः । ततो विश्वमखिलं स्थिरतामगात् । इतरथा कृष्णार्जुनप्रभृतिभिराध्मातानां शङ्खानां भीषणेन निनदेन नूनं युगान्तः प्रसज्येत । उपसंहृतेऽपि शङ्खध्वनौ पूर्वोत्पन्नप्रतिध्वन्यनुरणनेन कौरवसैन्यं विध्वस्तमभूदेव । यथा गजसमूहमन्ततःप्रवेशमात्रेण लीलयैव सिंहो विदारयति तथा स प्रतिध्वनिरन्ततः कौरवाणां हृदयान्यभिनत् । यावच्च स प्रतिध्वनिरविद्यत तावत्केचिदन्यान्प्रति सावधानाः स्थेति वदन्त एव स्वयमव्यवस्थितमनसः शरीरमधस्तत्यजुः ॥ १७ ॥ १८ ॥ १९ ॥

अथ व्यवस्थितान्दृष्ट्वा धार्तराष्ट्रान्कपिध्वजः ।
प्रवृत्ते शस्त्रसंपाते धनुरुद्यम्य पाण्डवः ॥ २० ॥

ये च तत्र बलशालिनो महारथा वीरास्ते कान्दिशीकान्समाश्वासयन्तस्तत्सैन्यं पुनः पूर्ववदवस्थापयामासुः । महारथैश्च प्रोत्साहातिशयं प्रापिता वीरास्तदा पूर्वापेक्षयाऽपि द्विगुणेनाऽऽवेशेन संभृताः पुनर्युद्धाय संनद्धा बभूवुः । तेन च लोकत्रयं पुनः क्षुब्धमिवाभूत् । संनद्धाश्च ते धनुर्धरा वीराः सद्य एव बाणान्ववर्षुर्यथा प्रलयकालिका महामेघाः केनाप्यनिवारिताः सान्द्रं वर्षन्ति तद्वत् । तद्दृष्ट्वा च संतुष्टमना अर्जुनः संभ्रमेण सैन्ये दृष्टिं चिक्षेप । दृष्टाश्च युद्धाय सज्जीभूता निखिलाः कौरवाः । सद्य एवार्जुनो लीलयैव धनुरग्रहीत् ॥ २० ॥

अर्जुन उवाच-

हृषीकेशं तदा वाक्यमिदमाह महीपते ।
सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत ॥ २१ ॥

भगवन्तं प्रत्यब्रवीच्च द्वयोः सेनयोर्मध्ये रथोऽयं त्वया शीघ्रं प्रस्थापनीयः ॥ २१ ॥

यावदेतान्निरीक्षेऽहं योद्धुकामानवस्थितान् ।
कैर्मया सह योद्धव्यमस्मिन्रणसमुद्यमे ॥ २२ ॥
योत्स्यमानानवेक्षेऽहं य एतेऽत्र समागताः ।
धार्तराष्ट्रस्य दुर्बुद्धेर्युद्धे प्रियचिकीर्षवः ॥ २३ ॥

यावदहमशेषानेतान्वीरान्सैनिकान्पश्यामि । अत्र च सर्व एव दृश्यन्ते तत्र केन साकं मया योद्धव्यमेतदवश्यमादौ निरीक्षणीयम् । यतश्चैते कौरवाः प्रायो दुःस्वभावाः स्वसामर्थ्यमविचार्यापि च युद्धं प्रत्यातुरा युद्धप्रिया अप्येते नैव धैर्यशालिन इति । एवं धृतराष्ट्रं प्रत्युक्त्वा पुनः संजय उवाच ॥ २२ ॥ २३ ॥

संजय उवाच-

एवमुक्तो हृषीकेशो गुडाकेशेन भारत ।
सेनयोरुभयोर्मध्ये स्थापयित्वा रथोत्तमम् ॥ २४ ॥

शृणु राजन् यावच्चार्जुन इत्थं ब्रवीति तावदेव श्रीकृष्णस्तं रथं नीत्वा सैन्यद्वयमध्ये प्रास्थापयत् ॥ २४ ॥

भीष्मद्रोणप्रमुखतः सर्वेषां च महीक्षिताम् ।
उवाच पार्थ पश्यैत[redacted]नीति ॥ २५ ॥

तत्रापश्यत्स्थितान्पार्थः पितॄनथ पितामहान् ।
आचार्यान्मातुलान्[redacted]खींस्तथा ॥ २६ ॥

श्वशुरान्सुहृदश्चैव सेनयोरुभयोरपि ।
तान्समीक्ष्य स कौन्तेयः सर्वान्बन्धूनवस्थितान् ॥२७॥

यत्र च समीप एव भीष्मद्रोणादयोऽन्ये च बहवो भूपतयः संमुखा आसंस्तत्र च रथं स्थिरं कृत्वा तत्सकलं सैन्यमितस्ततः संभ्रमेण निरीक्षमाणोऽर्जुनोऽवादीत् । भगवन्पश्येमेऽत्र मिलिता अशेषाः कुलगुरवः संदृश्यन्ते । यावच्च स इत्थं वदति तावदेव भगवान् क्षणं विस्मयाक्रान्तमना अभूत् । अकरोच्च मनसि किमिदानीमर्जुनस्य मनोवृत्तिर्विपर्यस्तेव दृश्यते न ज्ञायतेऽत्र किमद्भुतमिति । सर्वान्तर्यामी भगवांश्च तदानीं विपर्यस्तामर्जुनमनोवृत्तिं जानन्नपि न स्वयं किमप्यभ्यधात् ( केवलं किमयं वदतीति शुश्रूषुः प्रतीक्षांचक्रे )। अर्जुनश्च तदानीं सर्वान्गुरून्पितॄन्पितामहान्बधून्मातुलांश्चापश्यत् । तथेष्टमित्रान्कुमारान्श्यालकान्सुहृज्जनान्श्वशुरानन्यांश्च तांस्तान्संबन्धिनस्तथा पौत्रांश्च तत्र समागतानपश्यदर्जुनः । ये च पूर्वमुपकृता आपदि संरक्षिताः स्थानेन ज्येष्ठाः कनिष्ठाश्च तथाविधांश्च तत्रोपस्थितानपश्यत् । एवं सैन्यद्वये स्वगोत्रमेव सर्वं समुदितं युद्धोत्सुकं तेनावलोकितम् ॥ २५ ॥ २६ ॥ २७ ॥

कृपया परयाऽऽविष्टो विषीदन्निदमब्रवीत् ।

सपद्येव चार्जुनस्य मनो व्याकुलमभूत् । व्याकुलीभावमनु कृपा प्राविशत् । वीरवृत्तिश्च तत्र विद्यमाना ( स्वविरोधिन्या ) कृपयाऽऽक्रान्तं तन्मनो ज्ञात्वाऽपमानमसहमानेव तस्मान्मनसो निरगात् । गुणलावण्ययुताः कुलस्त्रियो हि तेजस्वितया नान्यस्याः समुन्नतिं सहन्ते । कामुकश्च यथा नवीनां कांचित्स्त्रियं दृष्ट्वा प्रेमभरेणाऽऽक्रान्तः प्रेमपरवशतया योग्यायोग्यविचारमकुर्वंस्तामनु भ्रमति स्वपत्नीं च विस्मरति । यथा वा कश्चित्तपस्वी तपोबलेन समागतामृद्धिमनुसरंस्तत्परवशो बुद्धिभ्रंशमवाप्नोति पूर्वसंचितामपेक्षितां विरक्ततासिद्धिं चोपेक्षते तथा तदानीमर्जुनस्यावस्थाऽभूत् । विद्यमानं च पुरुषत्वं तस्मान्मनसः सकाशाच्च्युतमभूद्यन्मनः कारुण्याधीनं संजातम् । मान्त्रिकेण कृते मन्त्रोच्चारणे

यदि स्वराक्षरलोपः स्यात्तर्हि स मान्त्रिको भूतबाधाक्रान्तो भवति तथा स धनुर्धरोऽर्जुनो महामोहेनाऽऽक्रान्तोऽभूत् । धैर्यं च तस्य क्वाप्यपह्नुतम् । यथा चन्द्रकिरणैः स्पृष्टश्चन्द्रकान्तो द्रवति तथाऽर्जुनस्य हृदयं तदानीं द्रुतमभूत् । एवमतिस्नेहेन मोहितः खिन्नमानसोऽर्जुनः सद्यो भगवन्तं प्रत्यवोचत् ॥ २८ ॥

अर्जुन उवाच–

दृष्ट्वेमं स्वजनं कृष्ण युयुत्सुं समुपस्थितम् ॥ २८ ॥

सीदन्ति मम गात्राणि मुखं च परिशुष्यति ।
वेपथुश्च शरीरे मे रोमहर्षश्च जायते ॥ २९ ॥

गाण्डीवं स्रंसते हस्तात्त्वक्चैव परिदह्यते ।
न च शक्नोम्यवस्थातुं भ्रमतीव च मे मनः ॥ ३० ॥

भगवन्नवधारय मद्वाचम् । मयाऽत्र दृष्टोऽखिलः स्वगोत्रसमुदायः । एते चाखिला युद्धोन्मुखा अत्रोपस्थिता एतत्सत्यमेव । किं तत्रास्माकं किमुचितं स्यात् । एतैः सह युद्धमिति शब्दमात्रश्रवणेनैव च किं जायते तन्न ज्ञायते । सर्वथाऽहं न भवामि । मनो बुद्धिश्च क्षणमपि न स्वस्थाने स्थिरी भवति । पश्येदानीं मे देहः कम्पते । मुखं च शुष्कमभूत् । सर्वेष्वङ्गेषु व्याकुलीभावः समजनि । रोमाञ्चश्च सर्वत्रोदभूत् । संतप्तमिदं मे शरीरमखिलमिदानीम् । गाण्डीवं गृह्णानो हस्तश्च तथा शिथिलबन्धोऽभूद्यथा तेन ध्रियमाणमपि ततश्च्युतं पतितं च कदा तन्न जाने । मोहेन चेदृशं मे हृदयं व्याप्तमभूत् । एवमुक्तवतोऽर्जुनस्येदृशी काऽप्यवस्था येन स्नेहेन कृता स वज्रादपि कठिनो दुर्धरोऽतिदारुणश्च । चित्रं चेदं वज्रादप्ययं स विशेषोऽत्र भासते । येन चार्जुनेन युद्धे शंकरो जितो दैत्यवीरा निवातकवचाश्च समूलं हताः सोऽर्जुनः क्षणादेव मोहेन कवलीकृतः । यथा भृङ्गोऽतिकठिनं किमपि काष्ठं यत्प्रियमिति भिनत्ति स कोमलया कमलकलिकया प्रतिबध्यते । प्रसङ्गवशाच्च तत्रस्थः प्राणानपि परित्यजेन्न तु कथमपि तत्कलिकादलं भेत्तुं शक्नोति तथा कोमल एवायमतिकठिनः स्नेहपाशो दुरतिक्रमः । इयं चाऽऽदिपुरुषस्य माया ब्रह्मादिभिरपि दुर्निवारा । अतस्तयाऽत्रार्जुनो मोहितोऽभूत् । ततः सोऽर्जुनस्तत्र सकलान्स्वजनान्दृष्ट्वा युद्धविषयकं स्वाभिमानं विसस्मार । कथमियम गले सद्-यता तन्मनस्युदभूत्तन्न ज्ञायते । ततो भगवन्तमवादीदधुना युद्धभूमावत्रावस्थातुं

न शक्यते । इदानीमेते वध्या इति शब्दमात्रेणैव मन्मनोऽतिशयेन व्याकुलं भवति वाक्च प्रस्खलति ॥ २९ ॥ ३० ॥

**निमित्तानि च पश्यामि विपरीतानि केशव ।**
**न च श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे ॥ ३१ ॥**

एते कौरवाश्चेदत्र वध्यास्तर्हि धर्मराजादयोऽप्यत्र कुतो न वध्या भवन्ति । यतः सर्वेऽपि वयमत्र मिलिताः परस्परमेकगोत्रजा एव स्मः । मा भूदयं संग्रामो नैतद्वार्ताऽपीदानीं स्वदते । किमर्थमिदानीं युद्धेन महापातकं संपादनीयमस्माभिः । मम त्वित्थं प्रतीयते सर्वथा युद्धे कृते हानिरेव स्यात् । अकृते तु कोऽप्यंशतो लाभः स्यादिति ॥ ३१ ॥

**न काङ्क्षे विजयं कृष्ण न च राज्यं सुखानि च ।**
**किं नो राज्येन गोविन्द किं भोगैर्जीवितेन वा ॥३२॥**
**येषामर्थे काङ्क्षितं नो राज्यं भोगाः सुखानि च ।**
**त इमेऽवस्थिता युद्धे प्राणांस्त्यक्त्वा धनानि च ॥ ३३ ॥**

भगवन्नत्र प्राप्तेनापि विजयेन किं फलम् । तथा राज्येनापि किं कार्यम् । एतान्सर्वान्हत्वा ये भोगा भोक्तव्यास्ते मा भूवन्नेव ( अभोगा एव ते ) । मास्त्वेव तत्सुखम् । तदन्तरेण यदि किंचिदत्रास्माकं विरुद्धं स्यात्तदपि सोढव्यम् । जीवितमपि गतं चेत्तदपि वरमत्रैतादृशसंग्रामापेक्षया । सर्वथैतान्हत्वा राज्यसुखमुपभोक्तव्यमीदृशी मनोवृत्तिः स्वप्नेऽपि मे न जायते । यदि चैतेषां गुरूणां वधादिकं विरुद्धमस्माभिश्चिन्तनीयं भवेत्तर्ह्येतेषां पश्चादस्माभिः केषां कृते जीवितव्यं स्यात् । जन्मैवास्माकं वृथा स्यात् । यच्च लोकाः पुत्रमिच्छन्ति तस्य किमेतदेव फलं यज्जायमानेन पुत्रेण स्वकुलमेतन्निर्दलितव्यमिति । कथं चैतेषु गुरुप्रभृतिषु वज्रतुल्या मनोवृत्तिरस्माकं भवेत्प्रत्युतैतेषां हितं यथा भवेत्तथैव चिन्तनीयं भवति । यच्चास्माभिरिहोपार्जितव्यं तदेभिः सर्वैरुपभोक्तव्यम् । अस्माकं च प्राणत्यागेनापि कश्चिदेतेषामुपयोगः स्याच्चेत्तदप्याचरितव्यमेव । अस्माभिरितरान्सर्वान्दिगन्तभूपालाञ्जित्वैतेषां स्वकुलजानां संतोष उत्पादनीयः । त एव चैते स्वकुलजाः संप्रत्यस्माभिः सह युद्धार्थमुपस्थिताः । किमेतदपेक्षयाऽन्यद्विपरीतं कर्मास्माकं भवेत् । संप्रति चैतैः स्त्रीपुत्रधनधैश्वर्यपूर्णं स्वस्वगृहं संत्यज्यात्र यच्छस्त्रास्त्रधारायां स्वजीवितमारोपितं

दृश्यते। एतादृशाश्चैते स्वकुलजाः कथं वध्याः कस्मिन्वा शस्त्रप्रहारः कार्यः। स्वयमेव स्वत्हृदयस्य कथं घातः करणीयो भवेत् ॥ ३२ ॥ ३३ ॥

**आचार्याः पितरः पुत्रास्तथैव च पितामहाः।**
**मातुलाः श्वशुराः पौत्राः श्यालाः संबन्धिनस्तथा॥३४॥**

भगवन् संप्रति क इमे युद्धार्थमुपस्थितास्तान्किं न वेत्सि त्वम्। एते भीष्माचार्या एते च द्रोणाचार्या यैश्चास्माकं सविशेषं बहूपकृतम्। एते च श्यालाः श्वशुरा मातुलाः सकला बान्धवाः पुत्राः पौत्राश्चान्ये चेष्टाः, अस्माकं साक्षात्संबन्धिनश्चैते सर्वे समुपस्थिताः। एतैः साकं युद्धमिति वाङ्मात्रेणापि दोषः समुद्भवेत् (किमुत प्रत्यक्षयुद्धेन) ॥ ३४ ॥

**एतान्न हन्तुमिच्छामि घ्नतोऽपि मधुसूदन।**
**अपि त्रैलोक्यराज्यस्य हेतोः किं नु महीकृते ॥ ३५ ॥**

यद्यप्येतेऽनुचितं कुर्वन्ति संप्रत्यस्मान्हन्तुमुद्यताश्च सन्ति तथाऽप्येतेषां घातोऽस्माभिर्मनसाऽपि नैव चिन्तनीयः। एतेषां घातेन निष्कण्टकं त्रैलोक्यराज्यमपि प्राप्तं भवेत्तर्ह्यपि नैवैतदनुचितं कर्माहं करोमि। यद्यनुचितमेतात्क्रियते तर्हि कस्य मनस्यस्मासु सद्भावनाऽवशिष्टा स्यात्। त्वमेव च भगवन्वद कथमनुचितं कर्म कृत्वाऽपि पुनर्निर्लज्जेन मया त्वन्मुखमवलोकनीयमिति ॥ ३५ ॥

**निहत्य धार्तराष्ट्रान्नः का प्रीतिः स्याज्जनार्दन।**
**पापमेवाऽऽश्रयेदस्मान्हत्वैतानाततायिनः ॥ ३६ ॥**

किंचैतेषां वधः कृतश्चेत्तेन कर्मणा दोषाणामाकरो भवामि। तथा सति संपादितां त्वत्प्रियतां स्वहस्तेनैव प्रच्यावयामि। कुलक्षये च कृते तज्जन्यैरशेषैः पातकैरुपलिप्तेन मया कथं क्व च त्वं गवेषणीयो भवसि। यथा प्रबलेनाग्निनाऽऽक्रान्तमुद्यानं चेत्तत्र क्षणमपि कोकिलो नावस्थातुं शक्नोति। यथा च कर्दमेन व्याप्तं सरो दृष्ट्वा तत्रैव सेवते क्षणमपि चकोरः। किंतु तादृशं तत्परित्यज्य सद्य एवान्यत्र निर्गच्छति तथाऽनेन कर्मणा पापाश्रयीभूतं क्षीणपुण्यसंचयं मां हेलयैव संपरित्यक्ष्यासि ॥ ३६ ॥

**तस्मान्नार्हा वयं हन्तुं धार्तराष्ट्रान्स्वबान्धवान्।**
**स्वजनं हि कथं हत्वा सुखिनः स्याम माधव ॥३७॥**

अतो मया नानुचितमिदं कर्म क्रियते। अत्र च युद्धार्थं शस्त्रमेव

न गृह्यते । भूयसांऽशेन निन्द्यमेवैतत्कर्म प्रतिभाति । यदि चैवमनुचितकर्मकारिणामस्माकं त्वया सह वियोगः स्यात्तर्हि किमवशिष्टं स्यात् । त्वद्वियोगदुःखेन सद्य एव भगवन्नस्माकं हृदयं त्रुटितं भविष्यति । अतः कौरवान्हत्वा राज्यसुखोपभोगा भोक्तव्या इत्थं वार्ताऽपि न श्रवणार्हा ॥ ३७ ॥

**यद्यप्येते न पश्यन्ति लोभोपहतचेतसः ।**
**कुलक्षयकृतं दोषं मित्रद्रोहे च पातकम् ॥ ३८ ॥**
**कथं न ज्ञेयमस्माभिः पापादस्मान्निवर्तितुम् ।**
**कुलक्षयकृतं दोषं प्रपश्यद्भिर्जनार्दन ॥ ३९ ॥**

यद्यप्येते कौरवा अभिमानमदग्रस्ता युद्धार्थमुद्यतास्तथाऽप्यस्माभिरत्र स्वहितं कथं न प्रेक्षणीयं भवेत् । अत्र युद्धं कृतं चेत्स्वयमेव स्वस्य घातः कृतो भवेत् । न हीदं कालकूटमिति विजानतोऽपि कालकूटं सेव्यं भवति कस्यचित् । यदि मार्गे गच्छता पथिकेन दूरतः सिंहेऽकस्माद्दृष्टे सद्य एव स मार्गस्त्यज्यते चेत्तस्य कोऽपि लाभ एव भवेन्न हानिः । भगवन्विद्यमानं प्रकाशमार्गं परित्यज्यान्धतमसाक्रान्ते मार्गे गम्यते चेत्तत्र को लाभः स्यादिति त्वमेव विभावय । यथा वा यदि कश्चित्तीक्ष्णाङ्गाराक्रान्तं सकलमार्गमग्रे पश्यन्नपि तमपरिहार्यैव गन्तुं प्रवृत्तश्चेत्क्षणेनैवाखिलो भस्मसाद्भवेत्तथा मूर्तानिव प्रकटतरानेतान्दोषान्स्फुटतरमवगच्छद्भिरप्यस्माभिः कथमत्र प्रवर्तितव्यं ( स्वविघाताय ) । तस्मिंश्च समये भगवन्तं प्रत्येवमुक्त्वाऽर्जुनः पुनरपि कुलक्षयजन्यपातकस्य महत्त्वं कथयामीति ब्रुवन्कथयितुं प्रावर्तत ॥ ३८ ॥ ३९ ॥

**कुलक्षये प्रणश्यन्ति कुलधर्माः सनातनाः ।**
**धर्मे नष्टे कुलं कृत्स्नमधर्मोऽभिभवत्युत ॥ ४० ॥**

यथा काष्ठद्वयमन्थनात्समुद्भूतोऽग्निस्तादृशकाष्ठद्वयस्यापि दाहे समर्थो भवति तथाऽस्माकं धार्तराष्ट्राणां पाण्डवानां मत्सरग्रस्तानामन्योन्यवधे प्रवृत्तिश्चेत्तादृशेन भयंकरेण महादोषेणैतत्कुलं विनश्येत् । तेनैव च पापेन कुलधर्मा अपि प्रलुप्ताः स्युः । ततश्च तत्रानाहूतस्याप्यधर्मस्य प्रवेश सुलभ एव भवेत् ॥ ४० ॥

**अधर्माभिभवात्कृष्ण प्रदुष्यन्ति कुलस्त्रियः ।**
**स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसंकरः ॥ ४१ ॥**

तत्रैवं सति केन किमनुष्ठेयं किं वा नानुष्ठेयमित्येवं विधिनिषेधावलोकने

निसर्गत एवान्धा जनाः सारासारविचारपराङ्मुखा भवेयुः। यथा विद्यमानमपि प्रदीपमन्यत्रापसार्यान्धकारावृतेन मार्गेण गच्छन्मनुष्य ऋजावपि मार्गे स्खलद्गतिर्भवति तथा कुलक्षयदोषेण धर्मेऽप्रसृते सत्यर्थादेव तत्राधर्ममार्गेण गच्छतः पावकमार्गं विना किमन्यत्स्यात् । अधर्ममार्गेण गच्छतश्च यमानियमानपश्यतो यथेष्टमितस्ततो विषयाभिमुखं धावत्स्विन्द्रियेषु सत्सु व्यभिचारः कुलस्त्रीष्वपि पदमाधत्ते। व्यभिचारेण चोत्तमाधमसंसर्गाद्वर्णसंकरे सति जातिधर्माः समूलमुन्मूलिता भवन्ति। यथा चत्वरे प्रस्थापितं बलिमनुसृत्य तदाभिमुख्येनेतस्ततः काकाः प्रधावन्ति तथा तादृशं जातिभ्रष्टं कुलमनुसृत्य तदाभिख्येनेतस्ततो धावमानानि महापापानि तदात्मसात्कुर्वन्ति॥ ४१ ॥

संकरो नरकायैव कुलघ्नानां कुलस्य च।
पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः॥ ४२ ॥

तथा सति तादृशं तदशेषं कुलं कुलघातकाश्च सर्वे नरकं प्राप्नुवन्ति। एवं तादृशकुलोत्पन्नेषु सर्वेषु नरेषु पतितेषु सत्सु तत्पूर्वजाः स्वर्गस्थाः पितरोऽपि स्थानभ्रष्टा भवन्ति। यतो यत्र कुले नित्यमपि कर्म नास्ति नैमित्तिकं तु दूर एव तत्र कः कं पितरमुद्दिश्य तिलोदकं दद्यात्। यत्र च पितॄणां तिलोदकमपि न प्राप्यते तत्र तैः स्वर्गे किं कर्तव्यं कथं च तेषां तत्र वसतिः स्यात्। तथा च ते पितरोऽप्यध आयान्ति। तथा च यथा नखाग्रे जायमानोऽपि सर्पदंशः सकलं शिखापर्यन्तं देहं व्याप्नोति तथा तेन पितॄणामधःपातेन ब्रह्मपर्यन्तं सकलं तत्कुलमधःपतनोन्मुखं भवति॥ ४२॥

दोषैरेतैः कुलघ्नानां वर्णसंकरकारकैः।
उत्साद्यन्ते जातिधर्माः कुलधर्माश्च शाश्वताः॥ ४३॥

उत्सन्नकुलधर्माणां मनुष्याणां जनार्दन।
नरके नियतं वासो भवतीत्यनुशुश्रुम॥ ४४॥

अहो बत महत्पापं कर्तुं व्यवसिता वयम्।
यद्राज्यसुखलोभेन हन्तुं स्वजनमुद्यताः॥ ४५॥

भगवन्नन्यच्चेदं शृणु। एतन्महापातकिकुलसंसर्गदोषात्कुलान्तराण्यप्यधःपातोन्मुखानि भवन्ति। यथा कस्यचिद्गृहेऽग्निना प्रोद्दीप्ते तत्संसर्गाद्गृहान्तरा-

ण्यपि मोद्दीप्तानि भवन्ति तथैकस्मिन्कुले महापातकदुष्टे नरकोन्मुखे जाते तादृशकुलसंसृष्टान्कुलान्तरस्थानपि नरांस्तत्संसर्गदोषो बाधत एव । एवं नानाविधैर्दोषैराक्रान्तं सकलमेव तत्कुलं केवलं महाघोरनरकदुःखेन दुःखितं भवति । एवं कुलक्षयदोषेण तादृशो नरकपातो भवति यत् प्रलयान्तेऽपि न तस्मान्नरकान्निर्गमः । भगवन्नेवमनेकशः शृण्वतोऽद्यापि ते मनोवृत्तिर्यन्न विपर्यस्ता भवति तन्नूनं ते हृदयं वज्रमयं संभावयामि । अथवा भगवन्नेवमनेकशः शृण्वतामपि नो हृदयं यदि वज्रमयमभविष्यत्तर्ह्येवेदानीं विपर्यस्तं नाभविष्यत् । भगवन्यस्य च शरीरस्य कृत इदं राज्यसुखमपेक्षितव्यं तच्छरीरमपि च क्षणिकमेव। एवं विजानानैरप्यस्माभिः कथमिमे पुरोदृश्यमाना दोषा उपेक्षणीयाः स्युः। आदौ तावदिदमेव महत्पापं संभवति यदमी गुरुस्थानापन्नाः सर्वे वध्यत्वेनावलोकनीया भवन्ति ॥ ४५ ॥

यदि मामप्रतिकारमशस्त्रं शस्त्रपाणयः ।
धार्तराष्ट्रा रणे हन्युस्तन्मे क्षेमतरं भवेत् ॥ ४६ ॥

तस्मादीदृशपापाचरणपूर्वकजीविनापेक्षया वरमेतद्यन्न्यस्तशस्त्रैरस्माभिः शराः सोढव्या एव कौरवैः प्रक्षिप्ताश्चेत् । तथा सति यदि निरतिशयं दुःखं स्याद्यदि वा मरणं स्यात्तर्हि तदपि सोढव्यमेव न त्वीदृशकुलक्षयकारकं पापाचरणं कथमपि श्रेयसे भवेत् । एवं पुरोऽवस्थितान्भीष्मप्रभृतीन्स्वकुलजान्सर्वान्दृष्ट्वा सद्यो विपर्यस्तमनोवृत्त्यनुसारेण भगवन्तं प्रत्युक्त्वाऽन्ते चेदं राज्यसुखं केवलं नरकभोग एवेत्युक्त्वा च विरराम ॥ ४६ ॥

संजय उवाच—

एवमुक्त्वाऽर्जुनः संख्ये रथोपस्थ उपाविशत् ।
विसृज्य सशरं चापं शोकसंविग्नमानसः ॥ ४७ ॥

एवमत्यन्तमुद्विग्नमना अन्तर्बाष्पोपलिप्तकण्ठो रथ एवाधस्तादुपाविशत् । यथा पदच्युतः कश्चिद्राजपुत्रः सर्वथोपहतो दृश्यते यथा वा राहुग्रस्त आदित्यो निष्प्रभो दृश्यते यथा वा महासिद्धिलाभे तावन्मात्रेणैव कृतार्थं मन्यमानो भ्रान्तः कश्चित्तपस्वी पश्चात्काममोहितः सन् दीनो भवति तथा तदानीं स धनुर्धरोऽर्जुनो दुःखातिशयेनाऽऽक्रान्तः संत्यक्तरथस्थासनः समदृश्यत । समुद्गतबाष्पलोचनश्च स धनुर्बाणांश्च भूमौ प्राक्षिपत् ।

एवं वृत्तान्तमुक्त्वा धृतराष्ट्रं प्रति संजयः पुनरुवाच । ततस्तदवस्थं सखेदमर्जुनमालक्ष्य तादृशखेदपरिहाराय यादृशं परमार्थं वैकुण्ठनाथः श्रीहरिर्न्यरूपयत्तदग्रे कथ्यत इति ॥ ४७ ॥

॥ इति प्रथमोऽध्यायः ॥

---

श्रीमद्भगवद्गीताया द्वितीयोऽध्यायः ।

—:०००:—

संजय उवाच—

**तं तथा कृपयाऽऽविष्टमश्रुपूर्णाकुलेक्षणम् ।**
**विषीदन्तमिदं वाक्यमुवाच मधुसूदनः ॥ १ ॥**

पूर्वोक्तप्रकारेण शोकाकुलः सोऽर्जुनो रोदिति स्म । स्वकुलस्थान्भीष्मादीन्दृष्ट्वा स्निग्धं तस्य चित्तं द्रुतमभूत् । यथा जलेन लवणम् । यथा च वातेन विशीर्णमभ्रं जलधारणासमर्थं भवति तथा धीरस्यापि तस्य चित्तं शोकेन विशीर्णं युद्धोत्साहधारणासमर्थमभूत् । तेन च स तदानीमतिम्लानः सन्पङ्कमग्नो राजहंस इव प्रक्रान्तकार्यकरणासमर्थश्चाभूत् । तादृशं च तं महामोहेन जर्जरीकृतमर्जुनं मधुसूदन उवाचेत्यर्थः ॥ १ ॥

श्रीभगवानुवाच—

**कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम् ।**
**अनार्यजुष्टमस्वर्ग्यमकीर्तिकरमर्जुन ॥ २ ॥**

हेऽर्जुन तवेदमत्रोचितं किम् । कोऽसि त्वम्, किंचेदानीं करोषि । इदानीमेव च विशेषतः किं जातं किं साधनेषु किंचिन्न्यूनमस्ति । उपसंहृतेष्वपि बहुषु साधनेष्वावश्यकं किंचित्साधनमनुपसंहृतमवशिष्टमभूद्येन त्वमेवं खिन्नोऽभूः। अनुचिते कर्मणि ते मनोवृत्तिर्न कदाऽपि दृष्टा तथा न कदाऽपि त्वया धैर्यं त्यक्तम् । तथा केवलं त्वन्नामसंकीर्तनमात्रेणाप्यपकीर्तिः सुदूरमपसरति ( इदानीं त्वेवंविधं त्वां प्रत्यक्षत एवापकीर्तिः संयुयुक्षतीति चित्रम् ) । त्वं च शौर्यस्याऽकरः क्षत्रियेषु च मूर्धन्योऽसि । शौर्यं च ते लोकत्रये विस्फूर्जते । ( त्रिलोकीस्था अपि शिरआन्दोलनेन त्वां संभावयन्ति )। त्वया च युद्धे शंकरो

जितः । निवातकवचा दैत्याः समूलं हताः । एवंविधत्वच्छौर्यातिशयद्योतकानि पद्यानि विरच्य गन्धर्वैर्गीयन्ते । अतश्च सकलमपि त्रैलोक्यं त्वयैकेनापि तुलितं चेन्न्यूनमेव भवेन्न साम्यमर्हति । ईदृशं च निरुपमं पुरुषत्वं त्वयि दृश्यते । स त्वमद्येदानीं संत्यज्य वीरवृत्तिं कथमधोमुखः सन्रोदिषि । त्वमेव स्वान्ते विचारय कीदृशमेतत्कारुण्यं येनेदानीं दैन्यं प्रापितः । कथय किमन्धकारः कदाऽपि सूर्यं ग्रसते, किंवा पवनो मेघाद्बिभेति किंवाऽमृतमेव स्वयं म्रियते किंवा पश्येन्धनमेव पावकं गिलति, लवणेन जलं द्रुतं भवत्यथवा कालकूटमेवान्यसंसर्गाद्विनश्यति, कथय किंवाऽर्भक एव महान्तं सर्पं कवली करोति किंवा गोमायुः सिंहेन साकं युध्यते, एते सर्वेऽत्यन्तासंभविनः प्रसङ्गा मिथ्याभूता एव । यदि च क्वचित्केनचिदालक्षिता भवेयुस्तर्ह्यज्ञानत एव न वस्तुतः । किंतु तादृश एव प्रसङ्गोऽद्य जातः स च त्वयेदानीमेव सत्यतां प्रापितः । यद्यपि सत्यतां प्रापित इव प्रदर्शितस्तथाऽपि तत्र बीजभूतमज्ञानमेवेत्यतश्च हेऽर्जुनास्मिन्ननुचिते कर्मणि मतिर्न विधेया । अविलम्बितमेव च धैर्यं धृत्वाऽवहितमना भव । त्यजेदं मूर्खवदाचरणम् । उत्तिष्ठ गृह्यतां धनुर्बाणश्च । क्व संग्रामः क्वेदृशं ते कारुण्यम् । त्वं ज्ञाता सन् कुतो विचारं न करोषि । वद त्वमेव समुचिता किं दया संग्राम इति । इदानीं चेदृशी दया प्रादुर्भवति चेद्विद्यमानाया कीर्तेर्विनाशः स्वर्गतेरन्तरायश्चेति ॥ २ ॥

**क्लैब्यं मा स्म गमः पार्थ नैतत्त्वय्युपपद्यते ।**
**क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परंतप ॥ ३ ॥**

तस्मादिदानीं त्वया शोको न कार्यः, धैर्यं च सर्वात्मना धार्यम् । एतेषां भीष्मादीनां शोच्यता च त्वया स्वीयमनोवृत्तेः सकाशाद्दूरतोऽपसारणीया । तस्याः पुरस्कारो नोचितः । पुरस्कारे हि तेनैतावत्कालपर्यन्तं संप्राप्तं महत्त्वं विनश्येत् । अतश्चाद्यापि स्वहितं साधय । दयालुता च संग्रामावसरे न कथमप्युपकरोति । किंचैते भीष्मादय इदानीमेव किं स्वकीया अभूवन् । अथवा स्वकीया अपीतः पूर्वं स्वकीयत्वेन नाभिज्ञातास्त्वया । तथा च कथं न ज्ञेयमस्माभिः ( १ । ३९ ) इत्येवमिदानीं स्वीयपाण्डित्यप्रकाशनं व्यर्थमेव । धार्तराष्ट्रैः सह संघर्षः किमद्यैव समुत्पन्नो येनाद्भुतं किंचित्पश्यत इव ते क्षणेनैवेयान्कल्पनातीतो मतिभेदोऽभूत् । जन्मसिद्ध एवायं संघर्षो युष्माकं मिथ-

स्त्वयाऽप्यनेकशोऽनुभूतचर एव । कश्च तत्राद्यापूर्वो विशेषः समुदितस्तन्न जाने येन मोहं समुत्पाद्य दयां पुरस्कृत्यानुचितं किमपि त्वं कार्यसे । स च मोहोऽवस्थितश्चेद्विद्यमाना प्रतिष्ठा विनश्येत्परलोकगतिश्चान्तरिता भवेदैहिकमपि श्रेयो दुर्लभं भवेत् । मोहोपजीव्यभूतं च हृदयदौर्बल्यं न कदाऽपि कस्यापीष्टं साधयति । विशेषतः क्षत्रियाणाम् । तत्रापि विशेषतः संग्रामे । संग्रामे च प्रत्युत हानिकरमेव स्यात् । अतो हृदयदौर्बल्यं त्यक्त्वा युद्धाय सज्जो भव यतस्त्वं परंतपोऽसि ॥ ३ ॥

एवं भक्तवत्सलेन भगवताऽनेकैः प्रकारैः शिक्षितोऽर्जुन उवाच—

**अर्जुन उवाच—**

**कथं भीष्ममहं संख्ये द्रोणं च मधुसूदन ।**
**इषुभिः प्रतियोत्स्यामि पूजार्हावरिसूदन ॥ ४ ॥**

भगवन्न वक्तव्यमियत्त्वया । किंत्वादौ त्वमेव स्वान्ते विचारय यदयं संग्राम इव दृश्यमानोऽपि वस्तुतः संग्राम एव न भवति । अमार्ग एवायम् । अत्र प्रवृत्तिरस्माकं दोषायैव । यतोऽत्र स्पष्ट एव गुरुजनोच्छेदः कर्तव्यतयाऽस्मासु संसृजते । सन्ति मे धार्तराष्ट्राः पश्य त्वमेवैते मातृसदृशाः पितृसदृशाश्च भीष्मादयः संमाननीयाः स्वकर्मणा सर्वात्मना संतोषणीयाश्च त एवैते तद्वैपरीत्येनेदानीं कथं स्वकर्मणैव वध्यत्वेन समालोचनीया भवेयुः । भगवन्यथा साधुसमूहः सदा नमस्कार्यो नमस्कारमात्रेणापि पूज्यत्वभावनायाः सिद्धत्वात् । शक्या चेत्प्रत्यक्षतः पूजैव कार्या । अतः पूजानमस्कारादिकं किमप्यकृत्वा स्ववाचैव साधुनिन्दा क्रियते चेदमार्ग एव सः । तथैते नः कुलगुरवो भीष्मद्रोणादयो नियमेन सदा पूजनीया एवेति मे शाश्वतिकी मतिः । येषु च वैरभावना मनसा स्वप्नेऽपि कर्तुं न शक्यते तेषां प्रत्यक्षतो घातः कथं कार्यः स्यात् । तदपेक्षया जीवितमेवेदं व्यर्थं विनश्यतु । न केवलमहमेक एव । चित्रमिदं यत्सर्व एव वयं यैरेव धनुर्विद्यायां शिक्षितास्तानेवाभिलक्ष्यीकृत्य तयैव विद्यया धनुषि बाणं संदधानाः कर्तव्यं चेदं मन्वानाः संप्रति भवामः । अहं च पार्थो द्रोणाचार्यस्य प्रियशिष्यस्तेन चाऽऽचार्येण वात्सल्येन धनुर्वेदमध्यापितः । तद्दृशेन च मया सांप्रतं यस्तादृशद्रोणाचार्यवधायोद्योग आरब्धः स किं तस्य

प्रत्युपकारः स्यात् । येषां च कृपया लब्धवर इवाहं संप्राप्तसामर्थ्यो भवामि तेष्वेव च विपर्यस्तां मनोवृत्तिं धारयन्नहं किं भस्मासुरोऽस्मीति ॥ ४ ॥

**गुरूनहत्वा हि महानुभावाञ्छ्रेयो भोक्तुं भैक्ष्यमपीह लोके ।**
**हत्वाऽर्थकामांस्तु गुरूनिहैव भुञ्जीय भोगान्रुधिरप्रदिग्धान् ॥५॥**

भगवन् समुद्रो गम्भीर इति श्रूयते किंतु तद्गाम्भीर्यमन्तः स्याद्बहिस्तु क्षुब्ध एव दृश्यते। द्रोणाचार्यस्य मनस्तु न कदाऽपि क्षुब्धं संदृश्यते। आकाशं चेदमपरिमितं संदृश्यते। किंतु तदपि कदाचित्परिमितं भवेन्नतु द्रोणाचार्यस्य मनः कदाऽप्यगाधतायां परिमितं भवेत्। अमृतमपि कदाचिद्विकृतमम्ली भवेत्तथा कदाचित्कालवशाद्वज्रमपि स्फुटितं भवेन्नतु कदाचिदपि प्रयत्नेनापि लेशतोऽपि च द्रोणाचार्यस्य मनोधर्मः प्रकृतिं जह्यात् । वात्सल्ये च प्रथमा मातेति कथ्यते तत्सत्यमेव। किंत्वाचार्यस्तु तदपेक्षयाऽप्यधिको वात्सल्यस्य मूर्तिरेव स्यात्। अयं चाऽऽचार्यः कारुण्यस्य मूलस्थानं सकलगुणानामाकरो निरतिशयो विद्यासिन्धुः। एवमयं महात्माऽस्मासु च दयार्द्रभावस्तत्त्वमेव वदास्य वधः कथमस्माभिश्चिन्तनीय इति। ईदृशाश्चेमे द्रोणादयो घात्यास्ततो राज्यं सुखेनोपभोक्तव्यमित्येतत्सर्वं मे मनोवृत्तौ नैव सर्वथा प्रविशति। एतच्च मनसा चिन्तयितुमपि न शक्यं यतोऽस्मादधिका अपि ये स्वर्गभोगास्तेऽप्यनेन कर्मणा भवेयुश्चेत्तेऽपि मा सन्त्वेव। भिक्षावृत्तिरपि ततो वरम् । अथवा देशत्यागो भवतु गिरिकन्दरे वा निवासो भवतु नतु कदाचिदप्येतानाचार्यादीनभिलक्ष्य युद्धे शस्त्रं गृह्णामि। भगवन्नस्माभिरेतेषां कण्ठे तीक्ष्णैर्बाणैः प्रहृत्य रुधिरप्रदिग्धा भोगा भोक्तव्याः किम्। रुधिरप्रदिग्धाश्च भोगा व्यर्था एव। यतः कथं तादृशा भोगा भोक्तुं शक्या भवेयुस्तन्न जाने ॥ ५ ॥

तथा च त्वमेतत्सर्वमवधारयेत्यर्जुनेन भगवन्तं प्रत्युक्ते सति तत्सर्वं श्रुतवतेऽपि भगवते सा तदुक्तिर्नास्वदत (भगवन्मुखे प्रसादाचिह्नाभावेन)। तज्ज्ञात्वा मनसि भीतोऽर्जुनः पुनरपि प्रत्युवाच भगवन्मदुक्तौ कुतो न चित्तं दीयते त्वया—

**न चैतद्विद्मः कतरन्नो गरीयो यद्वा जयेम यदि वा नो जयेयुः ।**
**यानेव हत्वा न जिजीविषामस्तेऽवस्थिताः प्रमुखे धार्तराष्ट्राः ॥६॥**

भगवन्यादृशी मे मनोवृत्तिरभूत्तथा स्पष्टीकृतं मया। किंतु तदपेक्षयाऽन्यदेव

किंचित्सत्यं चेत्तत्त्वं भवन्त एव जानन्ति । यैश्च धार्तराष्ट्रैः सहास्माकं वैरामिति कश्चिद्ब्रवीतीति चेत्तादृशकर्णकटूक्तिश्रवणमात्रेणैव चास्माकं प्राणास्त्याज्या भवन्ति त इमे धार्तराष्ट्राः संमुखेऽवस्थिताः । अतश्च किमत्रैते धार्तराष्ट्रा वध्या अथवैतानुपेक्ष्यास्माभिरन्यत्र क्वापि गन्तव्यमित्यत्र किमुचितं तदस्माभिर्न ज्ञायते ॥६॥

**कार्पण्यदोषोपहतस्वभावः पृच्छामि त्वां धर्मसंमूढचेताः ।**
**यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे**
**शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम् ॥ ७ ॥**

अत्र किमुचितमिति विचारं कर्तुं मतिरेव न प्रसरति यतो मोहाकुलं मे मनः । यथा तिमिरावरुद्धे नष्टतेजसि चक्षुषि समीपस्थमपि वस्तु द्रष्टुं न चक्षुर्व्यापृतं भवति तथेदानीं मे भ्रान्तस्य मनसोऽवस्थितिः केनेदानीं हितं स्यात्तन्न जाने । अतो भगवन्नेतद्विचार्य यत्सत्यं तदस्माकं कथनीयम् । त्वमेव सखा यच्चास्माकमखिलं सर्वस्वं तत्त्वमेव । त्वमेव गुरुस्त्वमेव बन्धुस्त्वमेव पिता त्वमेवास्माकमिष्टदेवता, आपदि च पालयिता त्वमेव । यथा गुरुः शिष्यं न कदाऽप्युपेक्षते यथा वा सागरः प्रविशन्तीं नदीं न कदाऽपि निषेधति यथा च समीपमागच्छदपत्यं मात्रा त्यज्यते चेद्वद त्वमेव तत्कथं जीवेत् । अस्माकं च मात्राद्यखिलस्थानीयस्त्वमेवैकोऽसि । अतो मया यत्कर्तव्यं तद्वद । यदि च मया स्वबुद्ध्यनुसारेण पूर्वमुक्तं न ते स्वदेत तर्हि यदस्माभिरिदानीं कर्तव्यमुचितं यच्च धर्माविरोधि तत्सत्वरं कथय ॥ ७ ॥

**नहि प्रपश्यामि ममापनुद्याद्यच्छोकमुच्छोषणमिन्द्रियाणाम् ।**
**अवाप्य भूमावसपत्नमृद्धं राज्यं सुराणामपि चाधिपत्यम् ॥ ८ ॥**

इमांश्च स्वकुलजान्युद्धार्थमवस्थितान्पश्यतो मे मनसि समुत्पन्नः शोकस्त्वद्वचोऽन्तरेण नापयास्यति । यद्यखिलं पृथ्वीतलमात्मसाज्जायेत यदि वा महेन्द्रपदमपि प्राप्तं भवेत्तथाऽप्ययं मोहो मे मनसो न दूरी भवेत् । यथा बीजं भर्जितं चेत्तत्सुक्षेत्रे समुप्तमपि यथोचितं जलेन सिक्तमपि च नैवाङ्कुरोत्पादनसमर्थं भवति (तथा सद्यो मे मतिरभूत्) । यथा चाऽऽयुर्नावशिष्टं चेदौषधमकिंचित्करमेव किंतु तत्र केवलमेक एवोपायः परममृतं दृश्यते । तथा राज्यभोगाः समृद्धयश्च मन्मतिं प्रकृतिमापादयितुमसमर्था एव । केवलमिदानीं कृपानिधेस्तव कारुण्यमेव मन्मतेर्जीवनम् । एवमर्जुनेन भ्रान्तिरहितचित्तेनोक्तं किल । किंतु क्षणेनैव स पुनरपि माययाऽऽक्रान्तो भ्रान्तचित्तोऽभूत् ।

अत्र भ्रान्तिराहितचित्तेनेति यदुक्तं तत्र भ्रान्तिपदेन सा भ्रान्तिर्नैव ग्रहीतव्या या ' अशोच्यानन्वशोचस्त्वम् ' इत्यादिना महता प्रबन्धेन भगवता दूरीकृता किंत्वन्यैव । यथा तिमिरादिना नेत्ररोगेणोपहतनेत्रः कश्चिच्छुक्तिमज्ञात्वा भ्रान्त्या रजतं पश्यति । इयं च शुक्त्यज्ञानमूलिका प्रथमा भ्रान्तिः । तत्र च शुक्त्यज्ञानस्य यदज्ञानमिदमिदानीं मे दोषेण शुकेरज्ञानं जातमित्येव यज्ज्ञानं तस्याभावः—तादृशाज्ञानमूलिका द्वितीया भ्रान्तिः । अनया च द्वितीयया भ्रान्त्या रजतग्रहणे प्रवृत्तिर्भवति । यदि च तदानीं केनाप्याप्तेन ' नेदं रजतं शुक्तिरेषा तवाज्ञानमभूत् ' इत्येवं स्वकीयाज्ञानं बोधितः स यावन्नेत्रदोषं रजतं पश्यन्नपि न रजतग्रहणाय प्रवृत्तो भवति । आप्तवचसा द्वितीयभ्रान्तेर्विनष्टत्वेन तत्कार्यभूताया रजतग्रहणप्रवृत्तेरसंभवात् । अज्ञानस्य चाज्ञातस्यैव कार्यकारित्वात् । प्रकृते चाशोच्यानां भीष्मादीनामशोच्यत्वेन ज्ञानाभाव एतद्रूपं यदज्ञानं तन्मूलकं तेषां शोच्यत्वेन ज्ञानं प्रथमा भ्रान्तिस्तत्कार्यभूतः शोकः । उक्तस्याज्ञानस्य च यदज्ञानं तन्मूलिका स्वस्मिन्प्राज्ञत्वधीर्द्वितीया भ्रान्तिः । तत्कार्यभूतश्च युद्धाकर्तव्यत्वनिश्चयः । तत्र च कुतस्त्वा कश्मलमिदमित्येवं भगवद्वचसा ' ममेदमज्ञानम् ' इत्येवं जानानोऽर्जुनो द्वितीयभ्रान्तिरहितो भीष्मादीनशोच्यत्वेन पश्यन्नपि क्षणं प्राज्ञंमन्यतां जहाति स्म युद्धाकर्तव्यत्वनिश्चयाच्च च्युतोऽभूत्तदनुरूपैव च तदानीं तदुक्तिः ' न चैतद्विद्मः ' ' कार्पण्यदोषोपहतस्वभावः ' ' धर्मसंमूढचेताः ' ' निश्चितं ब्रूहि ' ' शिष्यस्तेऽहम् ' इत्यादिः । किंत्वियं भ्रान्तिराहितावस्था क्षणादेवापसृता । कुतस्त्वा कश्मलमित्येतावन्मात्रं वचनं तस्य तादृशभ्रान्तिविनाशाय न पर्याप्तमभूत् । यक्षानुरूपो हि बलिरावश्यकः । नहि क्षुद्रेणौषधेन महान्रोगो निवृत्तो भवति । यदि च कश्मलस्य विस्तृतं स्वरूपं तस्य हेतुं चाभ्यधास्यद्भगवांस्तदा तत्कश्मलं व्यनङ्क्ष्यत् । प्रत्युत कश्मलस्य कारणं तमेव पृच्छति भगवान्कुतस्त्वेति । ननु कश्मलनिवारणे भगवति सामर्थ्यमस्ति न वेति चेदस्त्येव सामर्थ्यम् । तर्हि किं कश्मलमात्रोक्त्या सर्वाङ्गपूर्णया वोक्त्या दृष्टिक्षेपमात्रेणैव कश्मलनिराकरणसंभवादिति चेत्—अत्र भगवतो मनसि युक्तिवादेनैव कश्मलस्य निराकरणीयत्वात् । दिव्यसामर्थ्येन कश्मलनिराकरणे भगवत इच्छा चेत्कुतस्त्वा कश्मलमित्येतावन्मात्रा स्वल्पाऽप्युक्तिर्व्यर्थैव स्यात् । दृष्टिक्षेपमात्रेणैव कश्मलनिराकरणसंभवात् । किं बहुना ' यक्षा-

लनाद्धि पङ्कस्य दूरादस्पर्शनं वरम् ' इति न्यायेन कश्मलस्यानुत्पत्तिरेव भगवता कृता स्यात् । तथा च यथा तिमिरोपहतनेत्रः समीपावस्थितान्यपि वस्तूनि धूसराणीव पश्यति तत्र किंचिदञ्जनप्रक्षेपेण क्षणं स्पष्टतया पश्यन्नपि पुनः पूर्ववदेव धूसराणि पश्यति तद्वदर्जुनस्यावस्थितिरभूदिति ज्ञानेश्वरोक्तेः ' क्षण एक भ्रान्ति ताण्डिला ' ( गीता ओवी २ । ६९ ) इत्यस्यास्तात्पर्यमवसेयम् ।

इदं चात्र ज्ञानदेवः प्रकल्पयति " नायमीदृशो मायाक्रान्तस्य परिणामः, अन्यदेवास्य किंचिद्विकारकारणं भवेत्, नूनमयं महामोहरूपेण कालसर्पेण ग्रस्तः। आदावेव हृदयकमलं मर्मस्थानम् । तत्रापि च तदानीं कारुण्यभरेणाऽऽक्रान्तत्वात्त्यक्तकाठिन्यम् । अतस्तत्र जायमाने दंशे विषस्य वेगोऽनावरोऽभूत् । अमुं च कठिनं प्रसङ्गं जानानो दृष्टिमात्रेणापि विषबाधां विनाशयितुं समर्थः श्रीभगवांस्तदानीं जाङ्गलिकोऽभूत् । तादृशं चात्यन्तव्याकुलमप्यर्जुनं समीपस्थो दयालुर्भगवाँल्लीलयैवाभिरक्षेत् । एतदेव च मनसिकृत्य मया ( ज्ञानेश्वरेण ) तदानीं महामोहेन कालसर्पेण ग्रस्तोऽर्जुन इत्युक्तम् " इति । तदानीं च सोऽर्जुनस्तथा भ्रान्त्याऽऽविष्टो भूद्यथा मेघपटलेन भानुर्न दृश्यते । दुःखेन च व्याप्तोऽभूद्यथा ग्रीष्मे दावाग्निना पर्वतः । तथाभूतं च पर्वतं यथा सजलो महामेघः शमयति तथा नीलवपुः कृपाजलेन संभृतो भगवान्वचसाऽर्जुनं शमयति स्म । ब्रुवतश्च भगवतो दशनद्युतिर्विद्युदिव प्रकाशते । तत्र तस्य गम्भीरा वाक्च गर्जितं दृश्यते । एवंविधे चावसरे वागमृतपूर्णो भगवान्कृष्णमेघः कथमासारं संपादयेत्कथं च तेन शोकाग्निदग्धोऽर्जुनपर्वतः शान्तो भवेत्पश्चाच्च तत्र विज्ञानपल्लवः कथमुत्पद्येत तत्सर्वं शृणुत मनसः समाधानाय ।

संजय उवाच—

**एवमुक्त्वा हृषीकेशं गुडाकेशः परंतप ।**
**न योत्स्य इति गोविन्दमुक्त्वा तूष्णीं बभूव ह ॥ ९ ॥**

एवं क्षणं भ्रान्तिरहितः सन्नुक्त्वा पुनरपि भ्रान्त्या शोकाकुलोऽर्जुनः ' सर्वथेदानीं न योत्स्य इति मे निश्चयः । अत इदानीं त्वया न किंचित्प्रतिविधेयम् ' इत्येवं सखेदं श्रीकृष्णं वेगेनोक्त्वा मौनमधारयत् । तथाविधं च तं दृष्ट्वा भगवानाश्चर्यचकितोऽभूत् ॥ ९ ॥

**तमुवाच हृषीकेशः प्रहसन्निव भारत ।**
**सेनयोरुभयोर्मध्ये विषीदन्तमिदं वचः ॥ १० ॥**

अकरोच्च मनसि किमारब्धमिदानीमनेनार्जुनेन । अधुना किमपि न वेत्त्ययं किं कर्तव्यम् । कथमयं प्रकृतिमापद्येतेति । यथा मान्त्रिको ग्रहान्निरीक्षते यथा वाऽसाध्यं रोगं दृष्ट्वा तत्रामृततुल्यां निश्चयेन कार्यसाधिकां दिव्यामौषधीं शीघ्रमेव प्रकल्पयति राजवैद्यस्तथा तदानीं भगवान्केनोपायेनायमर्जुनो भ्रान्तिरहितः स्यादिति विचिन्तयन्सेनयोरुभयोर्मध्ये क्षणं व्यतिष्ठत । भ्रान्त्यपसरणे कारणं च मनसि निश्चित्यान्तः सकोपोऽपि बहिरादरेणेव वक्तुं प्रावर्तत । यथा बालस्य दुर्वर्तनेन सरोषाऽपि माताऽन्तः स्निग्धैव भवति तद्वत् । यथा च कटूवौषधे विद्यमानोऽमृतनिर्झरो बहिरदृश्यमानोऽपि गुणेन प्रकाशितो भवति तथा बहिर्गुणवत्त्वेनादृश्यमानामप्यन्तरतिस्निग्धां गिरमभ्यधाद्भगवान् ॥ १० ॥

अत्र पूर्वसंदर्भबोधके द्वितीयाध्यायाद्यश्लोकदशकसहिते प्रथमाध्याये कैर्मया सह योद्धव्यम् ( १ । २२ ) इत्येवं योऽर्जुनस्य प्रश्नो दृश्यते तत्र बीजमिदानीं विचार्यते—अत्र कौरवसेनायां योद्धुमर्हा योद्धुकामाश्च के । दुर्योधनादयस्तु भीमे क्रुद्धेषातिशया अतो भीम एव तैः सह योद्धुमर्हति । भीष्मद्रोणादयस्त्वस्मासु ( पाण्डवेषु ) कौरवेषु च संबन्धसाम्यात्प्रायो युद्धार्थं नैवाऽऽगच्छेयुः । यदि वाऽर्थस्य दासा भूत्वाऽऽगच्छेयुस्तर्ह्यन्यायपथप्रवृत्ता इति शौर्यातिशयशालिनोऽपि न युद्धयोग्याः किंतु वन्दनीया एव । अतो योद्धुं योग्यो योद्धुकामश्चैकः कर्ण एवावशिष्यते । स च वासव्या शक्त्या युत इति तेन सह योद्धुं शङ्कते मनः । वस्तुतो वासवी शक्तिरिन्द्रेण कवचकुण्डलप्रदानसंतुष्टेन संतोषायत्तान्तःकरणेन कर्णाय दत्ता, इत्येव ननु कर्णेन याचिता । अतोऽप्रार्थितप्रतिग्रहस्तस्याः । प्रार्थितप्रतिग्रहस्थले किंचित्कार्यं समुद्दिश्य तत्साधानार्थं वस्तु प्रार्थ्यते। लब्धे च वस्तुनि तेन तत्कार्यं साधयितुं प्रयत्यते । दाताऽपि यदि तत्कार्यद्वेषी तर्हि तद्वस्तु न ददाति । यदि तत्कार्येच्छुरुदासीनो वा स्यात्तर्हि ददाति । तेन च दत्तेन वस्तुना तत्कार्यं साध्यते ।

दत्तेन वस्तुना दातुर्द्विष्टं नैव प्रसाध्यते ।
ग्रहीत्रा, किंतु तस्येष्टमद्विष्टं वा प्रसाध्यते ।
दातुः सकाशाल्लब्धेन वस्तुना दातुरप्रियम् ।
प्रतिग्रहीता नैवार्थं ननु साधयितुं प्रभुः ॥

वासवी शक्तिश्च कर्णेन नैव प्रार्थिता । केवलमिन्द्रेण प्रदत्ता । इन्द्रस्य

चार्जुनवधोऽप्रिय एवेति कथं तद्वृत्तया तदप्रियं साधयितुं कर्णः प्रभवेत् । ननु कीदृश्यत्रोपपत्तिरिति चेत्—अदृष्टं किमपि प्रतिबन्धकमीशशक्त्या जायते। प्रकृते च कर्णस्य मनोवृत्तिरेव प्रतिबन्धिका। स हि स्वात्मानं शूरं मन्यमानो वासवशक्तिसहायेनार्जुनवधसंपादने शौर्यहानिं मन्यते। यद्यपीदृशी वस्तुस्थितिस्तथाऽप्यर्जुनस्य मनस्तद्विषये साशङ्कं भवत्येवेत्यतः 'कैर्मया सह योद्धव्यम्' इति प्रश्नः।

धार्तराष्ट्रस्य दुर्बुद्धेर्युद्धे प्रियचिकीर्षवः।

अन्यायपथप्रवृत्तस्य दुर्योधनस्यात्र नामनिर्देशो न कृतः, एतद्दुर्बुद्धेरित्यनेन दर्शितम् । धृतराष्ट्रस्तु न स्वभावतो दुर्योधनवदन्यायपथप्रवृत्तः किंतु पुत्रमोहात्। अतस्तस्यान्यायपथप्रवृत्तिरागन्तुकीति तस्य नामनिर्देशोऽस्तु नामेति तत्पुत्रत्वेन 'धार्तराष्ट्रस्य' इति निर्देशः। तथा च दुर्बुद्ध्यनुसारेण के के दुर्बुद्धयो जातास्तानवेक्ष इत्यर्जुनाभिप्रायः।

एतान्न हन्तुमिच्छामि घ्नतोऽपि मधुसूदन (गी. १ । ३४) अत्र कौरवहननेच्छाया निषेधः प्रतिपाद्यते। स इच्छायाः साधकस्याभावाद्बाधकस्योदयाच्चेति द्विविधादपि । तथा हि—इच्छोत्पादकानि साधकानि चत्वारि, दुःखनिवृत्तिः (१) ऐहिकोत्कर्षः (२) पारलौकिकोत्कर्षः (३) स्वधर्मबुद्धिः (४) श्चेति। बाधकं च द्विविधम्—ऐहिकदुःखसंभावना पारलौकिकदुःखसंभावना चेति। तत्र दुःखनिवृत्त्यर्थं युद्धेच्छा चेत्तद्दुःखं भूतं वर्तमानं वा। तत्र भूतकालिकं वनवासादिजं(१)दुःखं न निवर्तयितुमर्हति। तस्यानुभूतत्वात्। यच्च सांप्रतिकं राज्याद्यपहारजं तदैहिकोत्कर्षमन्तरेण न निवर्तयितुं शक्यमित्यैहिकोत्कर्षाय (२) युद्धेच्छेति पर्यवस्यति। उत्कर्षश्च स एव यः स्वकीयत्वेनाभिमतैर्जनैः शिरआन्दोलनपूर्वकमवलोकितः। यथा द्यूतात्पूर्वभावी धर्मराजकृतयज्ञादिकालिकः पाण्डवोत्कर्षः। इदानीं युद्धेन जायमनोऽपि राज्यप्राप्त्यादिरूपः पाण्डवोत्कर्षो न स्वकीयत्वेनाभिमतैर्भीष्मद्रोणादिभिरवलोक्यते । युद्धे भीष्मद्रोणादीनां विनाशमन्तरेण तदसंभवात्। तदेतत्

'येषामर्थे काङ्क्षितं नो राज्यं भोगाः सुखानि च' इत्यनेन सूचितम्। पारलौकिकोत्कर्षश्च (३) युद्धेन नैव संभवति। 'यजेत स्वर्गकामः' इत्यादिवत् 'युद्धेन स्वर्गकामः' इत्यादिवचनान्तराभावात्। चतुर्थं कारणं च युद्धे-

च्छाया युद्धे स्वधर्मधीः । सा चार्जुनस्य विद्यत एव । तथाऽपि तस्यास्तदानीं फलाभावादकिंचित्करत्वम् । मोहेनाऽऽवृतत्वात् । अतो न सा कौरवहननेच्छां समुत्पादयति । तथा चानुपदमेवोक्तेन प्रकारेणैहिकपारलौकिकान्यतरस्यैकस्यापि फलस्यादर्शनात्कथं तस्य प्रवृत्तिः स्यात् ।

' प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते '

किमुत प्रेक्षावानर्जुनः ।

ननु यदि स्वधर्मधीरपि फलं पुरस्कृत्यैव कर्मणीच्छां जनयेत्तर्हि—

दुःखनाशः( १ )सुखप्राप्तिरैहिकी( २ )पारलौकिकी( ३ ) ।
स्वधर्मधीश्च( ४ )चत्वारः कर्मेच्छा हेतवो मताः ॥

इत्यत्र यत्स्वधर्मधियः कर्मेच्छां प्रति स्वातन्त्र्येण कारणत्वमुक्तं तन्न संगच्छते । फलस्य द्वितीये तृतीये च कारणेऽन्तर्भावादिति चेत् । उच्यते—

संध्यादिः प्रधनादिश्च स्वधर्मो द्विविधो मतः ।
आद्यः सदैवानुष्ठेयो द्वितीयः कारणे सति ॥

अत्र प्रत्यहमावश्यकत्वेन विहितं संध्यादिकं फलपुरस्काराभावेऽपि केवलं स्वधर्म इत्येवेच्छां जनयतीति दृश्यते । अतस्तदर्थं चतुर्थहेतोरुपन्यासः । तथा च युद्धस्य स्वधर्मत्वेऽपि तत्र क्षत्रियाणामवश्यानुष्ठेयत्वाभावः सिद्धः । नहि निःसपत्नो राजा क्षत्रियो युद्धं स्वधर्म इति तदर्थं कथंचिदपि शत्रूनुत्पाद्य तैः साकं योद्धुं प्रवर्तते । एवं चेच्छोत्पादकानां चतुर्णां हेतूनां मध्य एकस्याप्यत्राभावः प्रदर्शितः । तथा युद्धेच्छोत्पत्तौ प्रतिबन्धकद्वयमप्यत्र दृश्यते । युद्धे हि शस्त्रप्रहारजदुःखदुःखितस्वकीयभीष्माद्यवलोकनजमैहिकं दुःखमनिवार्यमेव । यत्र तादृशकल्पनामात्रेण गात्रावसादनवेपथुगाण्डीवस्रंसनत्वग्दाहादिकमर्जुनेनानुभूतं तत्र तादृशस्थितिप्रत्यक्षे दुःखं स्यादेवेति किं वक्तव्यम् । इदमेकं युद्धेच्छोत्पत्तिप्रतिबन्धकम् । तथा स्वजनविघातजन्यपातकोद्भवं पारलौकिकं दुःखमप्यनिवार्यमेव । तच्च ' पापमेवाऽऽश्रयेदस्मान् ' इत्यनेन प्रदर्शितम् । एवं च साधकस्यैकस्याप्यभावाद्बाधकद्वयसत्त्वाच्च युद्धेच्छाया अभावः ' न हन्तुमिच्छामि ' इत्यनेन प्रतिपादित उपपन्नः ।

नन्वत्र भीष्मद्रोणादीनां प्रत्यक्षावलोकनात्पूर्वं युद्धेच्छा समुत्पन्नैव सा केवलमिदानीं प्रतिबद्धा । तथा चात्रेच्छोत्पत्तिकारणानां चतुर्णामभावः किमर्थं प्रति-

पादितः । यच्चेच्छोत्पत्तौ बाधकद्वयमुक्तं तदिच्छाया विनाशे कारणं संभवतीति तदस्त्विति चेत् । उच्यते—

नैयायिकनय आत्मगुणानामिच्छादीनां क्षणिकत्वात्प्रतिक्षणमुत्पन्नानामिच्छानां धारा प्रचलति । सा चोत्पत्तिकारणानामभावे नवीना नोत्पद्यते । पूर्वक्षणोत्पन्ना तु स्वभावादेव विनश्यतीत्यभिप्रायात् ।

येषां तु मत इच्छादीनां न क्षणिकत्वं तेषामपि मते कारणानुसारेणेच्छाऽवतिष्ठते। कारणानां बलीयस्त्व इच्छा दृढी भवति। कारणानां तदवस्थत्व इच्छाऽपि तदवस्थैवावतिष्ठते। कारणानां क्षयिष्णुत्व इच्छाऽपि क्षीणा भवति। कारणानामभावे त्विच्छा स्वतः क्षयिष्णुत्वात्कियता कालेन विनश्यति । तदेवमिच्छायाः क्षणिकत्वपक्षे भीष्मादिप्रत्यक्षदर्शनक्षणमारभ्योत्पत्तिकारणचतुष्टयान्यतमस्यैकस्याप्यभावाद्बाधकसत्त्वाच्च नार्जुनस्य मनसि हननेच्छोत्पत्तिः । इच्छाया अक्षणिकत्वपक्षे तूक्तचतुष्टयान्यतमस्यैकस्याप्यभावान्न पूर्वोत्पन्नेच्छाया दृढीकरणं नापि तादवस्थ्यम् । किंतु पूर्वोत्पन्ना सा क्षयिष्णुस्वभावत्वाद्विनश्यन्ती बाधकद्वयसत्त्वाद्भीष्मादिप्रत्यक्षावलोकनसमकालं सद्य एव विनष्टाऽभूत् । तदेतत् 'न हन्तुमिच्छामि' इत्युक्तम् ।

नन्वर्जुनस्य युद्धेच्छानाशे कारणीभूतमिच्छाबाधकद्वयमुक्तम् । तत्रैकं (१) युद्धे शस्त्रास्त्रप्रहारदुःखितान्भीष्मादीन्स्वकीयत्वेन पश्यतोऽर्जुनस्य मनसि वात्सल्याज्जायमानमैहिकं दुःखम् । द्वितीयं च(२)स्वजनवधजन्यपातकजन्यं पारलौकिकं दुःखम् । एतदस्तु नाम । किंत्वर्जुनेन शस्त्रन्यासपूर्वकं युद्धाकरणेऽपि प्रतिपक्षीया अर्जुनस्य शरीरे प्रहारं कुर्युरिति तादृशदुःखनिवारणार्थं युद्धेच्छा कुतो न जायत इति चेन्न । न्यस्तशस्त्रस्यार्जुनस्य शरीरे भीष्मादयो धर्मयुद्धे प्रवृत्ता नैव प्रहारं कुर्युः । यद्यपि न्यस्तशस्त्रस्यार्जुनस्य शरीरे दुर्योधनादीनामप्रवृत्तिर्न संभवति प्रत्युत तदवस्थेऽर्जुनेऽवश्यं ते प्रहरेयुरेव तथाऽपि युद्धे कृतेऽपि तादृशदुःखसंभवोऽस्त्येवं । नहि युद्धे प्रवृत्ते महारथस्यापि शरीरे लेशतोऽपि प्रहारो न जायत इति नियमः । एतदभिप्रायेण 'घ्नतोऽपि' इत्युक्तम् । मधुदैत्यं हतवतः श्रीकृष्णस्यापि शरीरे मधुकृतः स्वल्पतरोऽपि च प्रहारः संभवत्येव । एतच्च 'मधुसूदन' इति संबोधनेन सूचितम् ।

ननु न्यस्तशस्त्रस्यार्जुनस्य शरीरे न केवलं स्वल्पः प्रहारः किंतु मरणपर्यवसाय्येव । न्यस्तशस्त्रं हन्तुं हि कोऽपि समर्थो भवति। तथा च मरणनिवृत्त्यर्थं

युद्धेच्छाऽर्जुनस्य कुतो न जायत इति चेत् । उच्यते—महदपि मरणदुःखमुक्तात-चेतसाऽर्जुनेन शस्त्रास्त्रप्रहारजर्जरितशरीर--स्वकीयत्वाभिमत--भीष्मादिकर्मकाव-लोकनजदुःखापेक्षया न्यूनमेवेति कल्पितत्वात् । वरं मरणं न तु जर्जरितशरीरा एते स्वकीया भीष्मादयो द्रष्टव्या इति ।

सुखं च दुःखं च जगत्प्रसिद्धं न सर्वसाधारणमेकरूपम् ।
किंतु प्रतिव्यक्ति विशेषरूपं तत्तन्मनोवृत्तिविशेषभेदात् ॥ इति ।

किंच मरणदुःखं यदा कदाऽपि सोढव्यमेव । यदुक्तम्—' अथ मरणमवश्य-मेव जन्तोः ' इति ।

ईदृशमनोवृत्तियुतः कृपापरवशश्च संस्तदनुसारेणैव भगवन्तं प्रतिवक्तुं प्रवृ-त्तोऽभूत् । तदुक्तम्—

तान्समीक्ष्य स कौन्तेयः सर्वान्बन्धूनवस्थितान् ।
कृपया परयाऽऽविष्टो विषीदन्निदमब्रवीत् ॥ (गी० १।२७) इति ।

इदं ' दृष्ट्वेमं स्वजनं कृष्ण ' ( १।२८ ) इत्यादि वक्ष्यमाणम् । अयमा-शयः—कृपा हि दयापरपर्याया परदुःखप्रहाणेच्छारूपा । तादृशेच्छाया आधिक्ये च तादृशेच्छाजन्यः परदुःखप्रहाणानुकूलो व्यापारो जायते । व्यापारस्याशक्यत्वेऽयोग्यत्वे चेच्छामात्रं वन्ध्यमेव । शक्यत्वे तु योग्यत्वे व्यापारः स्यादेव । अयोग्यत्वे त्विच्छातिरेके स्यादेव । सामान्ये-च्छायां तु न स्यादित्यन्यत् । इच्छाविषयीभूतप्रहाणप्रतियोगिभूतं परदुःखं च क्वचित्तात्कालिकं क्वचिद्भावि क्वचिदुभयमपि । तत्परदुःखं तदपेक्षया स्वल्प-दुःखान्तरसमानाधिकरणं तदसमानाधिकरणं चेति द्विविधम् । परदुःखप्रहाणा-नुकूलो दयालुनिष्ठो व्यापारोऽपि दुःखान्तरसमानाधिकरणस्तदसमानाधिकरणश्चेति द्विविधः । यत्र दयालुः परदुःखप्रहाणानुकूलव्यापारकाले जायमानं स्वस्य दुःखं सोढ्वैव व्यापारं करोति तत्राऽऽद्यम् । तच्च तेन सह्यमानं दुःखं परदुःखा-पेक्षया न्यूनमेवेति न नियमः । क्वचित्तत्समं क्वचित्तदपेक्षयाऽधिकमपि । तदेवमुक्तेषु प्रकारेषु कीदृशी कृपाऽर्जुनस्य मनसि भीष्मादीन्दृष्ट्वा समुद्भूतेति विविच्यते—

आदौ तावदर्जुनस्य मनसि [कृपा] पूर्वमेवाऽऽसीदुतेदानीमेव समुत्पन्ना । यदि पूर्वमेवाऽऽसीत्तर्हि दिग्विजयादिप्रसङ्गेन युद्धे पूर्वमनेकशः शत्रवो हतास्तदानीं कुत इयं प्रतिबद्धा । तच्च प्रतिबन्धकारणमिदानीं कथं निवृत्तम् । अथ पूर्वं नाऽऽसीदिति कल्पस्तर्हीदानीं तदुत्पत्तौ किं कारणम् । उच्यते—

अर्जुनस्य कुलं शीलं च समालोच्य तदनुसारेण स दयालुरस्त्येवेति वक्तव्यमेव। किंतु पूर्वं येऽनेकशः शत्रवो हतास्तदानीं सा स्वधर्मेण प्रतिबद्धा। युद्धं हि क्षत्रियस्य स्वधर्मः। किंच युद्धे मृतानां चिराय स्वर्गतिर्मोक्षो वा किमपि भवतु। तदानीं यज्जन्ममरणदुःखस्य महतो भाविनः प्रहाणं तदर्थं तादृशभाविदुःखापेक्षया स्वल्पं युद्धकालीनप्राणवियोगदुःखं ददद्प्यर्जुनो दयालुरेवेति न तदानीं दयायाः प्रतिबन्धावश्यकता। यथा बालस्य कण्टकवेधजस्य भाविनो महादुःखस्य प्रहाणाय कण्टकदूरीकरणफलकसूचीवेधजं स्वल्पं दुःखं ददत्यपि माता दयालुरेव गीयते तद्वत्। यथा च यज्ञियपशुहननेन यजमानस्य दयालुत्वं न हीयते प्रत्युत परिपोष्यत एवेति तद्वत्। नन्वेवं प्रकृतेऽपि 'युद्धं स्वधर्मः' इति बुद्ध्या कृपा प्रतिबद्धा कुतो न भवति। भाविनो महतो दुःखस्य निवारणार्थं प्राणवियोगजन्यस्वल्पदुःखदाने दययैव प्रवृत्तिर्वा पूर्ववत्कुतो न भवतीति चेत्सत्यम्। वैषम्यात्पूर्ववत्प्रवृत्तिर्न भवति। इदानीं या कृपा 'कृपया परयाऽऽविष्टः' इत्यत्र निर्दिष्टा सा पूर्वस्याः परिणामभूता पूर्वापेक्षयाऽन्यादृश्येव। एतच्चात्र 'परया' इति विशेषणेनावगम्यते। पूर्वया कृपया हि विवेकबुद्धिर्नाऽऽवृताऽभूत्। अत एव तदानीं विवेकमूलिकया स्वधर्मबुद्ध्या कृपा प्रतिबद्धाऽभूत्। तथा भाविनो महतः परदुःखस्य प्रहाणाय सद्यः स्वल्पदुःखदानेऽपि प्रवृत्तिर्विवेकमूलिकैवाभूत्। इदानीं तु विषादेन विवेकबुद्धिरावृतेति न स्वधर्म इति प्रवृत्तिर्नापि महतो दुःखस्य प्रहाणाय स्वल्पदुःखदाने प्रवृत्तिः। विषादश्च स्वाभीष्टार्थासिद्धिजन्यो गुर्वाद्यपराधजन्यो वाऽनुतापाख्यश्चित्तवृत्तिविशेषः। भीष्मद्रोणादीनामस्त्रप्रहारे कृते महानपराधः स्यादिति भावनया सद्यो विषादः समुत्पन्नः। पूर्वं ये दिग्विजयादिप्रसङ्गेनानेके रिपवो हतास्तत्रेदृशापराधसंभावनाया अभावेन विषादाभावाद्विवेकबुद्धिर्यथावस्थिताऽभूदिति।

ननु युद्धविचारोत्तरं सद्य एव विषादः कुतो नाभूत्। भीष्मद्रोणादयो दुर्योधनपक्षीया भूत्वा युद्धे संमुखीना भविष्यन्तीति संभावनायाः सत्त्वात्। तथा च युद्धनिश्चय एव न स्यादिति चेन्न। धर्मराजेनायं विचारः सर्वः कृतः स्यादिति मत्वाऽर्जुन एतावत्कालपर्यन्तमेतत्संबन्धेनोदासीन एवाभूत्। धर्मराजस्य तु न विषादः। तस्य हीत्थं मतिः—'भीष्मद्रोणादयः प्रज्ञावन्तः प्रायोऽस्मिन्युद्धे नैवाऽऽगमिष्यन्ति। यतो वयं (पाण्डवाः) कौरवाश्च तेषां तुल्या एव। यदि च

समागताः स्युस्तर्हि 'अर्थस्य पुरुषो दासः' इति नयानुसारेण प्रज्ञां तिरोभावयताऽऽर्थिकेनाऽऽवरणेनाऽऽवृता एव समागमिष्यन्त्यतो न ते पूर्ववद्भावनीयाः स्युः' इति । दूरदर्शिना धर्मराजेनेत्थं संभावितम् । अर्जुनस्तु केवलं तदनुसारी । तस्याप्येवं मतिः—पूर्वं यद्यपि स्यात्तथाऽपि प्रत्यक्षपरोक्षयोर्महदन्तरमिति प्रत्यक्षं भीष्मादीन्स्वकीयान्दृष्ट्वा तस्य मतिश्चलिता स्यात् । नतु कदाऽपि धर्मराजस्य मतिचलनम् । यस्य मतिर्महत्यामपि विपत्तौ महति वा समुत्कर्षे नेषदपि विचलति स प्राज्ञतरस्तादृशो धर्मराजः । अत एव गीतोपदेशप्रसङ्गो न धर्मराजं प्रति संजातः । यक्षप्रश्नस्योत्तराणि भ्रातॄन्मृतान्दृष्ट्वाऽपि समीचीनान्येव दत्तानि । स एव सत्यं दूरदर्शी प्रज्ञाचक्षुः ।

परोक्षार्थज्ञानजन्या मतिः प्रत्यक्षदर्शनात् ।
न विपर्यासमायाति प्रज्ञाचक्षुः स उच्यते ॥ इति ।

न त्वर्जुनः । यतोऽर्जुनेन भीष्मादिशरीरेषु सूक्ष्ममार्थिकमावरणं प्रज्ञाचक्षुर्विषयीभूतं न दृष्टं किंतु तेषां केवलं स्थूलशरीरं चर्मचक्षुर्विषयीभूतं दृष्टम् । अतस्तत्र विषादोत्पत्तिर्युज्यत एव । स्थूलस्य संनिकृष्टस्य चार्थस्य ज्ञानसाधनं चर्मचक्षुः । सूक्ष्मस्य देशतः कालतो वा विप्रकृष्टस्य चार्थस्य ज्ञानसाधनं ज्ञानचक्षुः । तत्र चर्मचक्षुषो रोगाः काचकामलादयः । ज्ञानचक्षुषोऽधिष्ठानं मन एवेति मनोवृत्तिविशेषादयो ज्ञानचक्षुषो रोगाः । रोगैर्हि दृष्टिः प्रतिबध्यत इत्यर्जुनस्य विषादेन ज्ञानदृष्टिप्रतिबन्धे दूरदर्शित्वमपगतं भवति । अतस्तस्येत्थं मतिस्तदानीमजायत 'को जानाति परलोकगतं वृत्तम्, ऐहिकं तु भीष्मादीनां शस्त्रप्रहारैर्जायमानं दुःखमवलोकयितुं न क्षमोऽस्मि' इति । विषादेन ज्ञानदृष्टिप्रतिबन्धे चर्मचक्षुषा यद्भीष्मादिविषयकमीक्षणं तत्र यत्सम्यक्त्वं ( समित्युपसर्गेण सूचितं ) तत्स्वीयपितामहत्वेन स्वीयगुरुत्वेनेत्यादि तत्तत्संबन्धविशेषपूर्वकत्वरूपम् । तत्तत्संबन्धस्य पुरः स्फुरणादेव विषादोत्पत्तिः । कौन्तेयशब्देन तत्र दृष्टान्तः सूचितः । यथा कुन्त्याः स्वीयमातृत्वेनावलोकने तादृशसंबन्धसंरक्षणार्थं प्रवृत्तिर्नियता तथा पितामहत्वगुरुत्वादिसंबन्धसंरक्षणायात्रापि प्रवृत्तिर्नियता । स च संबन्धः स्थूलदेहनिमित्तक एवेति भीष्मादीनां स्थूले देहे शस्त्रप्रहारकरणमशक्यमनुचितं च भवति । प्रज्ञाचक्षुष्ट्वं सर्वेषां प्राणिनां दृश्यते । सर्वो हि

जन्तुर्भूतकालिकानुभवानुसारेण भाविनमर्थं बुद्धया प्रकल्प्य प्रवर्तते। किंत्वीदृशं प्रज्ञाचक्षुष्ट्वं सर्वेषां सामान्यत एव। किंतु—

परोक्षार्थज्ञानजन्या मतिः प्रत्यक्षदर्शनात्।
न विपर्यासमायाति प्रज्ञाचक्षुः स कथ्यते॥

अत्र निदर्शनं धर्मराजः। अर्जुनस्यापि युद्धारम्भे भीष्मद्रोणादीन्प्रत्यक्षतो दृष्ट्वा वात्सल्यातिशयेन मतिभ्रंशोऽभूत्। भीमसेनस्य तु मनसि विद्यमानमपि भीष्मादिविषयकं वात्सल्यं कौरवकृतापराधातिरेकेणाऽऽवृतं सद्युद्धारम्भे भीष्मादीन्प्रत्यक्षतो दृष्ट्वाऽपि नोद्भूतमभूत्।

पञ्चधा प्रवहन्तीनां पवनात्मज एव सः।
कौरवक्रोधसिन्धूनां क्रमात्संगमभूरभूत्॥ ( भारतचम्पूः १ )॥

कौरवाणां पाण्डवानां च मिथो बन्धुत्वाद्वात्सल्येन युद्धमनुचितं तथाऽपि कौरवाणां लोभोपहतचेतस्त्वाज्ज्ञानचक्षुषोऽधिष्ठानभूते मनसि लोभरूपेण रोगेण ग्रस्ते ज्ञानचक्षुषोऽन्धत्वात्पाण्डवविषयकं वात्सल्यमनुपयुक्तमभूत्।

पाण्डवानां च मनसि कौरवविषयकं वात्सल्यं वसदपि युद्धं विनाऽन्यगतेरभावाद्युद्धस्य स्वधर्मत्वाच्चानुपयुक्तमभूत्। इयान्विशेषः—कौरवाणां मनसि वात्सल्यमधिष्ठान( मनो )दोषाद्विनष्टप्रायम्। पाण्डवानां मनसि वात्सल्यं स्वधर्मबुद्धया तत्काले केवलं तिरोहितम्। अत एव युद्धारम्भे भीष्मद्रोणादीनां प्रत्यक्षदर्शनेन तादृशप्रत्यक्षदर्शनचर्मचक्षुर्जन्यलौकिकसहायेन बलवत्संजातं वात्सल्यं तथा सद्य एव समुदभूद्यथाऽर्जुनस्य स्वधर्मबुद्धिमप्यपसार्य स्वप्राणदानपर्यवसाय्यभूत्।

इदं चात्र बोध्यम्—अत्रार्जुनेन स्वभाषणे युद्धात्परावृत्तेः कारणद्वयं प्रदर्शितम्—एकमशक्यता द्वितीयमयोग्यता। तत्र प्रथमं 'सीदन्ति मम गात्राणि' (१।२९) इत्यारभ्य 'भ्रमतीव च मे मनः' (१।३०) इत्येतत्पर्यन्तेन श्लोकद्वयेनाशक्यता प्रदर्शिता। ततः 'निमित्तानि च पश्यामि' (१।३१) इत्यारभ्य हत्वैतानाततायिनः' (१।३६) इत्येतत्पर्यन्तेन श्लोकषट्केनायोग्यता प्रदर्शिता। तत्राशक्यताहेतुभूता गात्रावसादन—मुखपरिशोषण—वेपथुरोमहर्ष—गाण्डीवस्रंसन—त्वग्दाहावस्थानाशक्ति मनोभ्रमास्तदानीं सपद्यनुभूताः प्रत्यक्षा इति ते प्रथमं प्रदर्शिताः। ततः शाब्दप्र-

माणगम्यान्ययोग्यताकारणानि स्वजनवधनिमित्तपातकोद्भवादीनि पश्चात्प्रदर्शितानि । किंचायोग्यतापेक्षया बलीयस्येवाशक्यता कार्यप्रतिबन्धजनने । यतः—

शक्ये त्वयोग्येऽपि कार्ये प्रवृत्तेरस्ति संभवः ।
अपि योग्यमशक्यं चेन्नैव कार्यं प्रसिध्यति ॥

यदेतदर्जुनेन युद्धात्परावृत्तेः कारणद्वयमशक्यतारूपमयोग्यतारूपं च प्रदर्शितं तद्द्विविधमपि दूरीकृत्यार्जुनस्य युद्धे प्रवृत्तिः संपादनीया भगवतो मनसि । तत्रार्जुनेन प्रथमतः प्रदर्शिताऽशक्यता प्रथमतो दूरी करणीया । सा चाशक्यता न यावदपसृता तावदयोग्यतादूरीकरणे प्रयत्नो निष्फलः । यतः—

युक्तायुक्तविचारस्य नृपते तत्र का कथा ।
यदशक्यक्रियं नूनमाकाशहननादिवत् ॥

यद्यप्येवं तथाऽप्यत्राशक्यतानिरासाय तस्या मूलकारणविचारेऽयोग्यतामूलभूतो विषादपदवाच्यो मनोवृत्तिविशेष एवाशक्यतामूलकारणत्वेनानुसंधीयते । अतोऽत्र यावद्विषादस्तावदशक्यताया अयोग्यतायाश्च निराकरणमशक्यम् ।

अन्धकारे वृथा यत्नः पदार्थान्वेषणे भवेत् ।
अपि च—सति दीपे वृथा यत्नः प्रकाशस्यापनोदने ।
दीपाभावे वृथा यत्नोऽन्धकारस्यापनोदने ॥ इति ।

सर्वथा विषादो दूरी करणीयः । तदर्थं च तत्कारणालोचनायां भीष्मादिविषयकप्रत्यक्षज्ञानादन्यन्न किंचिद्दृश्यते । भीष्मादिविषयकं प्रत्यक्षं चेतः पूर्वमनेकश आसीन्नतु तदानीं विषादोत्पत्तिरित्यतस्तेभ्यो विलक्षणमेवैतत्प्रत्यक्षम् । ज्ञाने वैलक्षण्यं च विषयभेदेनैव वक्तव्यम् । प्रकृते विषादोत्पादके प्रत्यक्षे च पाण्डवैः सह युद्धार्थं भीष्मादयो बहवो युगपदुपस्थिता विषयाः । द्यूतसभायां बहव उपस्थिता नतु युद्धार्थम् । उत्तरगोग्रहणे युद्धार्थं बहव उपस्थिता नतु तद्युद्धं पाण्डवैः सह तदानीमुद्दिष्टम् । इदानीं तु पाण्डवैः सह युद्धार्थं भीष्मादयो बहवो युगपदुपस्थिता दृष्टा इति तद्विषयकं प्रत्यक्षं पूर्वेभ्यो विलक्षणमिति तेन रूपेण तद्विषादजनकम् । तच्च विषादजनकं भीष्मादिविषयकं प्रत्यक्षज्ञानं भ्रमात्मकं प्रमा वेति संशयः । भ्रमश्चेत्तदपनोदः सुकरो नान्यथा ।

तच्च नैव प्रमेति सिद्धान्तः। यदि प्रमा स्याचर्हि तादृशं ज्ञानं धर्मराजस्य कुतो नाभूत्। सत्यं ज्ञानं चार्जुनापेक्षया धर्मराजस्यावश्यं भावि। न च तदानीं न ते तथाविधा धर्मराजस्य प्रत्यक्षा जाता इति वाच्यम्। धर्मराजस्य तथाविधभीष्मादिपरोक्षज्ञाने बाधकाभावात्। प्रत्यक्षपरोक्षयोर्विशेषस्य सुविचारशीले प्रज्ञाचक्षुषि धर्मराजेऽभावात्। तथा चार्जुनस्य तदानीं जायमानं भीष्मादिप्रत्यक्षं भ्रम एवेत्यगत्या कल्पनीयं भवति। युक्तश्च धर्मराजापेक्षयाऽर्जुनस्य भ्रमसंभवः। धर्मराजो हि यथा प्रज्ञाचक्षुरिति प्रसिद्धो न तथाऽर्जुनः।

ननु तदानीमर्जुनस्य जायमानं भीष्मादिविषयकं प्रत्यक्षं यदि भ्रमश्चेत्कथं तस्य भ्रमत्वं किं च भ्रमस्य कारणं तद्वक्तव्यम्। उच्यते। यद्यप्यर्जुनस्य जायमाने तादृशप्रत्यक्षे विषयभूता भीष्मादय इन्द्रियसंबद्धाः सत्याश्च तथाऽपि तदानीं ते येन रूपेणावस्थितास्तेन रूपेण न ज्ञानविषया इति भ्रमत्वं निर्बाधम्। यथा—

शङ्खः पाण्डुर इत्येषा ख्याता सत्यतया मतिः।
यत्र लाक्षारसासिक्तः शङ्खस्तत्र कथं प्रमा॥

तथा चार्थस्य पुरुषो दास इत्येवमार्थिकावरणावगुण्ठितशरीरास्तदानीं भीष्मादय इति धर्मराजेन यदि ते तदानीं दृष्टाः स्युस्तह्यार्थिकावरणान्तर्हिता एव दृष्टाः स्युरिति न तस्य मनसि विषादोत्पत्तिसंभवः। आर्थिकावरणस्य दयाविषयत्वाभावात्तत्संबन्धेन पाञ्चभौतिकशरीरस्यापि दयाविषयत्वाभावात्। सेन्द्रं तक्षकं यजेतिवत्। तथा च कृष्णवर्णोपनेत्रान्तर्हितचक्षुषा पश्यन् पदार्थं कृष्णवर्णं पश्यति तथा ज्ञानचक्षुरन्तर्हितचक्षुषा पश्यन् धर्मराजो भीष्मादीनार्थिकावरणावृतान्पश्यति। यथा च धर्मराजस्य ज्ञानचक्षुर्निर्मलं न तथाऽर्जुनस्येति स केवलेन चर्मचक्षुषा भीष्मादीन्पश्यन्ननावृतानेव पश्यति। अतो विषादोत्पत्तिः। तथा च ज्ञानचक्षुर्दोषमूलकोऽयमर्जुनस्य भ्रम इति सिद्धम्।

स चायमर्जुनस्य भ्रमो निरसनीयो भगवता। भ्रमश्चाधिष्ठानयाथात्म्यज्ञानेन निवर्तत इति प्रसिद्धम्। रज्जुज्ञानेनेव सर्पभ्रमः। किंत्वयमुपायः सर्वसाधारणः। यदि तु भ्रान्तः पुरुषः स्वयं विचारी प्रेक्षावान्स्यात्तर्हि भ्रममपाकर्तुकामेन स केवलं 'तवायं भ्रमः' इत्येतावदेव बोध्यते चेत्तावन्मात्रेणैव स स्वयमेव स्वस्य भ्रमं भ्रमत्वेन जानानस्तं भ्रममपाकर्तुं प्रयतते। तदुक्तम्—

विचक्षणस्य विदुषो भ्रमोऽयमिति जानतः ।

अधिष्ठानाप्रकाशेऽपि भ्रमः सद्यो निवर्तते । (भ्रमो नश्येद्विचारतः) ॥ इति ।

'ममायं भ्रमः' इति निश्चये हि भ्रान्तेन स्वकीयभ्रमनिरासाय भ्रमकारणमन्विष्यते । तथा सति भ्रमकारणनिरासपूर्वको भ्रमनिरासः संभवतीत्यतोऽयं भ्रमनिरासोपायः केवलमधिष्ठानज्ञानरूपभ्रमनिरासोपायापेक्षया बलीयान् । किंतु भ्रान्तस्य प्रेक्षावतोऽयमेवोपायो योज्यो भवति । अर्जुनस्तु विचारी प्रेक्षावत्तर इति तस्य भ्रममनेनैवोपायेन निरसिष्यञ्श्रीभगवान् 'ईदृशी वस्तुस्थितिः, तत्रामुकवस्तुन्यमुकवस्तुन आरोपः' इत्येवं किंचिदप्यप्रदर्श्य केवलं 'तवायं भ्रमः' इत्येतावन्मात्रज्ञापनाय—

'' कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम् ।
अनार्यजुष्टमस्वर्ग्यमकीर्तिकरमर्जुन ॥
क्लैब्यं मा स्म गमः पार्थ नैतत्त्वय्युपपद्यते ।
क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परंतप ॥ ( २ । २–३ )

इति प्रोक्तवान् । अत्र वस्तुतो विचारे क्रियमाणेऽर्जुनस्य ज्ञानचक्षुर्दुष्टम्—येन ज्ञानचक्षुर्गतेन दोषेण भीष्मादिशरीरगतमार्थिकावरणं ज्ञानचक्षुर्दर्शनयोग्यमपि न दृष्टमर्जुनेन । एतद्दोषमूलक एव मनोमोहः कश्मलपदवाच्यः । तथा च युद्धस्याशक्यतापादकं गात्रावसादमुखपरिशोषादिकं, युद्धस्यायोग्यतापादकं च स्वजनवधनिमित्तपातककल्पनमिदं कश्मलं मनोमोहः कुतः समुपस्थितमित्यर्थः ।

ज्ञानचक्षुर्गतं दोषं कश्मलमूलभूतं जानताऽप्यजानतेव भगवताऽर्जुनं प्रति प्रश्नः कृतः 'कुतस्त्वा कश्मलमिदम्' इति केचित् । वस्तुतस्तु नायं प्रश्नार्थकः किंशब्दः । उत्तरादर्शनात् । उत्तरमप्रतीक्ष्य प्रश्नाव्यवहितोत्तरक्षण एव 'क्लैब्यं मा स्म गमः पार्थ' इति भगवता भाषितत्वाच्च । किंत्वत्र किंशब्दोऽसंभावानायाम् । त्वद्विधे विचक्षण उदात्ताशय ईदृशो मोहो लेशतोऽपि न संभवतीत्येवमाशयो भगवतः । वात्सल्यातिशयेन समुत्पद्यमानोऽप्ययं भीष्मादिविषयको मोहः कदाचिद्युद्धचर्चारम्भक्षण एव संभवेन्नतु युद्धारम्भकाले । एतच्च विषमशब्देनोच्यते । अयोग्यवाची विषमशब्दः । एतादृशमोहोत्पादनं स्याच्चेत्तद्योग्यः समयः कीदृश इति चेत् । दुर्योधनकृतयुद्धनिश्चयश्रवणक्षणः । तस्मिन्क्षणे यदीदृशो

मोहः स्याच्चेत्तस्यानार्यजुष्टत्वं न केनापि भण्येत । तथा तदानीं मोहोऽभवि-
ष्यच्चेत्स स्वर्ग्योऽ[illegible]विष्यत् । तदुक्तम्—

वैरिणो[illegible] सुखार्थं यो दुःखाब्धौ मज्जति स्वयम् ।
तपसाऽन्येन किं तस्य तदेव स्वर्गदायकम् ॥ इति ।

न च ' क्षत्रियाणां युद्धं स्वधर्मः ' इति तस्य त्यागात्कथमस्य स्वर्ग्यत्व-
मिति वाच्यम् । आवश्यकस्वधर्मविषये हि संध्यावन्दनाग्न्युपासनादौ तथा
स्वर्गतिप्रतिबन्धो भवेत् । अकरणे प्रत्यवायश्रवणात् । युद्धं तु क्षत्रियाणां
धर्मोऽपि नाऽऽवश्यकः । नहि सर्वे क्षत्रिया युध्यमाना एव दृश्यन्ते । नापि
युद्धाकरणेन ते प्रत्यवायिनो भवन्ति । तथा दुर्योधनकृतयुद्धनिश्चयश्रवणक्षण
एव यद्यर्जुनो मोहाविष्टो भूत्वा युद्धाय प्रवृत्तो न स्यात्तर्हि तस्य महती कीर्तिः
स्यात् । धन्यवादं ददाना एव सर्वे लो[illegible] स्युर्यदयमर्जुनो महावीरोऽति-
रथः कालखञ्जादिहन्ता लब्धपाशुपतास्त्रो यदि कौरवैः सह युद्धं कृतवान्स्या-
त्तर्हि कौरवाणामसंशयं नाशः स्यादेव । एवं वस्तुस्थितावपि राज्यं तृणाय
मत्वा युद्धाय प्रवृत्तो नाऽभूत्सर्वथा धन्योऽयमिति । तथा च दुर्योधनकृतयुद्ध-
निश्चयश्रवणक्षणे यद्यर्जुनस्य मोहः स्याच्चेत्स उचितो भवेत् । नतु शस्त्रसंपा-
तप्रवृत्त्युत्तरक्षणे जायमानः । अयं तु सर्वथाऽनुचितः कश्मलपदवाच्य एव ।
यतोऽयमनार्यजुष्टोऽस्वर्ग्योऽकीर्तिकरश्च ।

आर्या नैव प्रवर्तन्तेऽनुचिते कर्मणि क्वचित् ।
उचिते तु प्रवृत्ताश्चेन्न कदाऽपि पराङ्मुखाः ॥

अतोऽर्जुनस्येदानीं पराङ्मुखत्वमनार्यजुष्टम् । तथैतत्पराङ्मुखत्वं स्वर्ग्यमपि
न भवति । न च—

वैरिणोऽपि सुखार्थं यो दुःखाब्धौ मज्जति स्वयम् ।
तपसाऽन्येन किं तस्य तदेव स्वर्गदायकम् ॥

इत्युक्तरीत्या स्वर्ग्यत्वं कुतो नेति वाच्यम् । युद्धं हि क्षत्रियाणां स्वधर्म
इति स्वधर्मत्यागजन्यप्रत्यवायेन स्वर्गप्रतिबन्धात् । ननु युद्धं हि क्षत्रियाणां
स्वधर्मोऽप्यनावश्यक इति तत्त्यागेऽपि न प्रत्यवायः । अत एव दुर्योधनकृ-
तयुद्धनिश्चयश्रवणसमकालमेवार्जुनस्य यदीदृशो मोहः स्यात्तर्हि युद्धाकरणेऽपि
स्वधर्मत्यागाभावेन प्रत्यवायाभावात्तस्य स्वर्ग्यत्वमनुपदमेवोक्तमिति चेन्न । वैष-

न्स्यात्। यदा कदाऽपि स्वधर्मत्यागे प्रत्यवायोऽस्त्येव। त्यागो ह्यङ्गीकारपूर्वक एव। दुर्योधनकृतयुद्धनिश्चयश्रवणसमकालमेवार्जुनस्य मोहे स्वधर्मत्यागो न भवति। ततः पूर्वं पाण्डवैर्युद्धस्यानङ्गीकारात्। तदानीं युद्धाङ्गीकारोत्तरं सज्जीभूतायां सकलसामग्र्यां सेनयोर्मिथः शस्त्रसंपाते प्रवृत्तेऽर्जुनस्य मोहेन परावर्तने तु स्वीकृतस्य युद्धस्य त्यागो भवत्येव। इयान्विशेषः—युद्धाकरणमुभयत्र सममेव। आद्ये युद्धकर्मण्यप्रवृत्तिः। द्वितीये युद्धकर्मणः सकाशात्परावृत्तिरिति। तथैतत्पराङ्मुखत्वं कीर्तिकरमपि न भवति। किंमूलिका ह्यत्रार्जुनस्य कीर्तिः स्यात्पराक्रममूलिका वात्सल्यमूलिका वा। नाऽऽद्यः पक्षोऽवकल्पते। युद्धाकरणेन पराक्रमाभावात्। नापि द्वितीयः पक्षः—'कथं भीष्ममहं संख्ये पूजार्हावरिसूदन' इत्यत्र युद्धाकरणनिमित्तत्वेन पूजार्हत्वोक्तेः।

अत्र केचित्। अयोग्यवाचिना विषमशब्देनायोग्यकाल इवायोग्यदेशोऽपि ग्रहीतुं शक्यः। मोहयोग्यो देशश्च हस्तिनापुरादिर्ग्रामः, युद्धार्थं निर्मितं शिबिरमयोग्यो देशः। युद्धभूमिः कुरुक्षेत्रं त्वयोग्यतरो देश इत्याहुः। तत्र दुर्योधनकृतयुद्धनिश्चयश्रवणं यदृच्छया युद्धभूमिमागतस्यार्जुनस्य स्याच्चेत्स युद्धदेशोऽपि मोहयोग्य एव भवेत्। तथा युद्धनिश्चयोत्तरं युद्धारम्भदिने भ्रातर्यदृच्छया हस्तिनापुरादिग्राममागतस्यार्जुनस्य मोहः स्याच्चेत्स ग्रामोऽप्ययोग्य एव भवेत्। ततश्च मोहोत्पत्तौ देशस्य योग्यायोग्यता कालतन्त्रैव वाच्या। कालो मोहयोग्यश्चेत्तदानीं यः कोऽपि देशो योग्य एव। कालो मोहायोग्यश्चेत्तदानीं यः कोऽपि देशोऽयोग्य एवेति।

अत्रेदमवधेयम्—अनार्यजुष्टमित्यत्राऽऽर्यैर्जुष्टमार्यजुष्टं तद्भिन्नमनार्यजुष्टमित्येवं तृतीयातत्पुरुषगर्भो नञ्तत्पुरुषः। अथवा न आर्या अनार्यास्तैर्जुष्टमित्येवं नञ्तत्पुरुषगर्भस्तृतीयातत्पुरुषो ग्राह्यः। आद्येऽर्जुनाचरणे युद्धत्यागरूप आर्यजुष्टत्वरूपो गुणोऽर्जुनाभिमतो भगवता निषिद्धो भवति। अन्त्ये तु तादृशेऽर्जुनाचरणे मूर्खजुष्टत्वरूपो दोषो भगवताऽऽविष्कृतो भवति। अत्र कः पक्षः श्रेयान्? पूर्वः। यद्यर्जुनेन युद्धात्परावृत्तिरूपे स्वाचरणे स्वोक्त्या गुणाः प्रदर्शिताः स्युस्तर्हि ते भगवताऽर्जुनस्य युद्धे प्रवृत्तिं चिकीर्षता निषेध्या भवन्ति। यद्यर्जुनेन स्वाचरणे दोषाभावः प्रदर्शितः स्यात्तर्हि भगवता तत्र दोषा आविष्करणीयाः स्युः। प्रकृते चार्जुनेन—

यद्यप्येते न पश्यन्ति लोभोपहतचेतसः ।
कथं न ज्ञेयमस्माभिः पापादस्मान्निवर्तितुम् ॥

इत्येवमार्यत्वेनाभिमतानां स्वेषामस्माभिरित्यनेन परामर्शात्स्वाचरण आर्यजुष्टत्वरूपो गुणः प्रतिपादित इति सोऽत्र निषेध्यो भवति । तथा चानार्यजुष्टमित्यत्र नञ्तत्पुरुषगर्भतृतीयातत्पुरुषेण मूर्खजुष्टत्वरूपो दोषोऽत्र न भगवताऽऽविष्कार्यो भवति । यद्यपि 'लोभोपहतचेतसः' इत्यनेन कौरवेषु दोषं प्रदर्श्यार्जुनेन 'कथं न ज्ञेयमस्माभिः' इत्यनेन स्वस्मिंस्तादृशदोषाभावः प्रतिपादितः। अतोऽत्र दोषोऽपि भगवताऽऽविष्कार्यो भवति तथाऽपि स एव दोषो विशेषत आविष्कार्यो भवति न तु सामान्यतो मूर्खजुष्टत्वरूपः । किंचार्जुने लोभोपहतचेतस्त्वरूपदोषो लेशतोऽपि भगवता न संभावयितुं शक्यते । अतोऽत्र 'स दोषः सामान्यरूपेण भगवता प्रतिपादितः' इत्यपि वक्तुं न शक्यते । किंचार्जुनाचरणे युद्धात्परावृत्तिरूपे सामान्यरूपेणापि मूर्खजुष्टत्वदोषदुष्टमेतदिति संभावयितुं न शक्यते भगवता। एतद्धयर्जुनस्याऽऽचरणं स्वरूपतः समीचीनमेव । केवलं कालकृतमेव तस्यासमीचीनत्वं, तच्च 'विषमे समुपस्थितम्' इति विषमपदेन सूचितम् । तदुक्तम्—

अनवद्यानि साधूनां चरितानि स्वभावतः ।
देशकालादिसंबन्धात्स्यात्कदाचिदवद्यता ॥ इति ।

स्वरूपतो दुष्टमेवं हि मूर्खजुष्टमिति भण्यते लोके । तदप्युक्तम्—

चरित्राणि हि मूर्खाणां गर्ह्याण्येव स्वरूपतः ।
स्यात्कदाचिदगर्ह्यत्वं तत्रोपाधिकृतं बहिः ॥ इति ।

किंचात्र मूर्खजुष्टत्वरूपो दोषः प्रकाशयितव्यश्चेत्तत्र मूर्खाणां मूर्खशब्देन प्रतिपादनमकृत्वाऽनार्यशब्देन प्रतिपादने कश्चिद्धेतुरवश्यं वाच्यः । अन्यथा भगवदुक्तौ निष्कारणं गौरवं स्यात् । स चात्र हेतुर्न कश्चित्संभवति । तथा 'अस्वर्ग्यम्' इत्यत्र स्वर्गशब्दात्तत्र साधुरिति यत्प्रत्यये पश्चान्नञ्तत्पुरुषे स्वर्गसाधनत्वरूपस्य गुणस्याभावोऽत्र प्रतिपिपादयिषितः । अथवाऽसुराधर्मादिशब्देष्विव विरोधार्थकनञा तत्पुरुषे स्वर्गविरोधिनरकवाचकादस्वर्गशब्दात्तत्र साधुरिति यत्प्रत्यये नरकसाधनत्वरूपो दोषोऽत्र भगवता प्रतिपादयिषित इति संशयः । तत्र युद्धात्परावृत्तिरूपेऽर्जुनाचरणे गुणो दोषाभावश्चेति द्वयमप्यर्जुनाभिमतं प्रतीयते ।

यदि मामप्रतीकारमशस्त्रं शस्त्रपाणयः ।
धार्तराष्ट्रा रणे हन्युस्तन्मे क्षेमतरं भवेत् ॥

इत्यत्र मरणोत्तरं क्षेमं स्वर्गप्राप्तिरूपमर्जुनाभिमतम् । तच्च निषेद्धुं शक्यते । नह्युदासीनावस्थानमात्रेण स्वर्गः प्राप्यते । तथा कुलक्षये कुलधर्मनाशः, ततोऽधर्मोद्भवस्ततः स्त्रीषु दोषस्ततो वर्णसंकरः, संकरो नरकायैवेत्येवं युद्धात्परावर्तनेन नरकसाधनत्वरूपदोषस्याभावोऽर्जुनाभिमतः । सोऽप्यत्र प्रतिषेद्धुं शक्यते । यतः—

स्वधर्मत्यागिनो जन्तोर्विहिताचरणं न चेत् ।
किमन्यैः पातकैस्तस्य तदेव नरकप्रदम् ॥

इत्युक्तत्वात् । भगवता चार्जुनस्य मतौ विपर्यासं चिकीर्षताऽर्जुनाभिमतं द्वयमप्येतन्निरसनीयम् । उपस्थितत्वात् । तथा च तयोर्मध्ये किमभिप्रेतमस्वर्ग्यपदेन भगवतेति चेत् । उच्यते—भगवताऽत्रास्वर्ग्यपदेन स्वर्गसाधनत्वरूपगुणस्यार्जुनाभितस्याभावोऽत्र प्रतिपिपादयिषितः । न तु नरकसाधनत्वरूपो दोषः प्रतिपिपादयिषितः । अस्वर्गशब्दस्य नरके रूढ्यभावेन तत्र विरोधार्थकस्य नञो ग्रहणे प्रमाणाभावात् । तथा च 'तवेदमाचरणं न स्वर्गसाधनम्' इत्येतावन्मात्रमेव भगवतो मनस्यभिप्रेतमस्वर्ग्यपदोक्त्येति सिद्धम् । तथा 'अकीर्तिकरम्' इत्यत्रापि नञः कीर्तिकरशब्देन समासः । तथा च 'तवेदमाचरणं सत्कीर्तिकरं न भवति' इत्यर्थः । कीर्तिर्हि शौर्याद्वात्सल्याद्वा । नाऽऽद्यः । युद्धात्तस्य परावर्तनात् । नान्त्यः ।

'न च श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे'

इत्युक्तेरसंगतेः । स्वजनहननं संभवति किंतु तेन श्रेयो न संभवतीति तदर्थः । वात्सल्ये हि स्वजनहननमेव न संभवतीति वक्तव्यं स्यात् । यदि तत्र नञः कीर्तिशब्देन समासो गृह्येत तदा 'तवेदमाचरणं दुष्कीर्तेः साधनम्' इत्यर्थः स्यात् । उपपद्यते च सोऽर्थः । 'महावीरोऽप्यर्जुनो वस्तुतो भीतः सन् प्रौढिवादबलेन भयमपलपति' इत्येवं मन्यमाना लोका अर्जुनस्यापकीर्तिं प्रसारयेयुः । तथाऽपि नात्र 'अकीर्तिकरम्' इत्यनेन सोऽर्थो ग्राह्यः ।

अकीर्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययाम्'

इत्यनेन पौनरुक्त्यापत्तेः । स्पष्टार्थं पुनरुक्तिश्चेदस्तु ।

अत्र यद्यप्यर्जुनस्य मोहं दूरीकर्तुमिच्छता भगवता मोहापसारणे सर्प-भ्रमविनाशाय दीपानयनवत् किमप्यञ्जनमानेयम् । तत्तु नैवाऽऽनीतम् । अर्जुनेन स्वयमेवायं मोहो विनाशनीय इति मनसि कृत्वा तत्किंचिदपि नाऽऽनीतम् । अर्जुनेन स्वयं मोहापसारणं तदा कर्तुं शक्यते यदा मोहस्वरूपं तत्कारणं च ज्ञातं भवेत् । किंतु तदपि भगवता न प्रदर्शितम् । तदपि स्वयमेवार्जुनेनान्वेषयितुं शक्यम्—इत्याशयेन भगवता 'तवायं मोहः' इत्येतावन्मात्रमेवोक्तम् । अना-र्यजुष्टत्वादिभिश्च मोहस्यातीव क्षुद्रत्वम्, अर्जुने चात्यन्तासंभवित्वं सूच्यते। गर्हेण क्लैब्यशब्देन दौर्बल्यशब्देन चार्जुनं वाचा दूषयन् भगवान् 'झटित्यना-यासेन चायं मोहस्त्वयैवापसारयितुं शक्यः' इत्याशयेन 'त्यक्त्वोत्तिष्ठ परंतप' इत्येवं मोहविनाशोत्तरकृत्यं मोहावस्थायामेव बोधितवान् ।

इदं चापरमत्र बोध्यम्—कौरवाः कुटिलमतिदुर्योधनानुसारिणः स्वजनैरपि पाण्डवैः सह युद्धार्थं प्रवृत्ता भवेयुः किंतु सरलमतयः पाण्डवाः स्वजनैः कौरवैः सह कथं युद्धार्थं प्रवृत्ता इति। अत्रोत्तरम्—यथोपनेत्रवर्णानुरक्तो विषयो दृश्यते तथोपनेत्रावृतचक्षुर्भिः पाण्डवैः कौरवा भिन्नभिन्नरूपा दृष्टाः । अतो युद्धार्थं प्रवृत्तिस्तेषाम् । तत्रार्थदासा भीष्मादयोऽभूवन्नित्यार्थिकोपनेत्रयुतेन चक्षुषा धर्मराजो भीष्मादीन्प्रपश्यन्युद्धार्थं प्रवृत्तोऽभूत् । तच्च तस्य ज्ञानचक्षुष्ट्वमूल-कम् । भीमसेनस्तु कौरवकृतापराधातिशयजन्यसंस्काररूपेणोपनेत्रेण युतः कौरवांस्तदनुसारेण भीष्मादींश्च पश्यन् युद्धार्थं प्रवृत्तोऽभूत् । नकुलः सहदेवश्च धर्मराजाज्ञानुसरणरूपेणोपनेत्रेण युतः प्रवृत्तोऽभूत् । अर्जुनस्य तु न धर्मराजवत् ज्ञानचक्षुरुपनेत्रम् । तत्र तादृशज्ञानातिशयाभावात् । नापि भीमसेनवत् कौरवकृ-तापराधातिशयजन्यसंस्काररूपमुपनेत्रम् । तस्य धीरोद्धतत्वाभावात् । नापि नकुलसहदेववत् । धीरोदात्तत्वेन स्वयं विचारशीलत्वात् । धर्मराजाज्ञानुसरणं विचारपूर्वकं कर्तव्यमिति बुद्ध्या युद्धभूमावेव रथोपस्थ उपाविशन्नतु विषादो-त्पत्तिक्षणे सद्य एवैकपदे युद्धभूमिं त्यक्त्वा शिबिरं गतः । मोहितमर्जुनं दृष्ट्वा भगवतो मोहं दूरीकर्तुमिच्छत इत्थं मतिरासीत्—अयमर्जुनो धर्मराजवद्युद्धे प्रव-र्तयितुं न शक्यः । धर्मराजवज्ज्ञानचक्षुष्ट्वाभावात् । अन्यथा मोह एव न स्यात् । नापि भीमसेनवत् । धीरोद्धतत्वाभावात् । नापि नकुलसहदेववत् ।

स्वयं विचारशीलत्वात् । अतोऽस्य 'तव मोहो जातः' इत्येतावन्मात्रमेव बोधनीयम् । पश्चादयं विचारशीलः, धर्मराजवद्भीमसेनवद्वा नकुलसहदेववद्वा केनापि प्रकारेण स्वयं प्रवर्ततेति । मोहकारणमप्यर्जुनेन स्वयमन्वेषणीयम् । न केवलमेतावदेव प्रत्युत 'कुतस्त्वा कश्मलमिदम्' इत्येवं मोहकारणं भगवताऽर्जुनं प्रति पृष्टम् । अर्जुनस्य मोहं दूरीकर्तुमिच्छता भगवता मोहविनाशकारणं, मोहस्वरूपं, मोहोत्पत्तिहेतुं चानुक्त्वा केवलं कुतस्त्वा कश्मलमित्याद्युक्तवता 'तव मोहो जातः, तं त्यक्त्वोत्तिष्ठ' इत्येवोक्तम् । भगवद्भाषणात्पूर्वं 'मदीयाचरणमनवद्यमेव' इत्येवं मन्यमानस्याप्यर्जुनस्य भगवत्कृतभाषणसमकालमेव तत्र विश्वासातिशयान्मनोवृत्तिरन्यथाऽभूत् 'मदीयाचरणं मोहमूलकमवद्यम्' इति । पर्वकालिकमनोवृत्तिविनाशेन तादृशमनोवृत्तिमूलका गात्रावसादनमुखशोषवेपथुप्रभृतयो विनष्टाः । स विनाशस्तेन स्वयं प्रत्यक्षमनुभूतः । तेन च युद्धकर्मण्यशक्यतामतिर्विनष्टा । युद्धकर्मण्ययोग्यतामतिरपि पूर्वजाता भगवद्भाषणे विश्वासातिशयेन विनष्टा । तथाऽपि स विनाशः परोक्षः शाब्दज्ञानजन्यः । अयोग्यताविनाशस्य 'युद्धकर्म योग्यम्' इत्येवंरूपस्य यदा प्रत्यक्षानुभवः स्यात्तदैव तस्य कात्स्न्र्येन कार्यकारित्वम्, इति मन्वानोऽर्जुनो भगवन्तं विना प्रकारान्तरेण प्रत्यक्षानुभवमसंभावयन् 'युद्धकर्म योग्यम्' इत्यस्य प्रत्यक्षानुभवाय युद्धकर्मण्ययोग्यतां प्रदर्शयति—कथं भीष्ममिति । अशक्यता तु न प्रदर्शिता । तद्विनाशस्य स्वयमनुभूतत्वात् । अत्र 'पूजार्हौ' इत्यनेनायोग्यता प्रदर्शिता । ननु

'अयोग्यमपि कर्तव्यमत्यन्तावश्यकं यदि । इति ।
तथा—अनन्यगतिकं कुर्याद्योग्यतां न विचारयेत् ॥'

इत्युक्तत्वेन स्वजीवनार्थं युद्धं कर्तव्यमिति चेत्तत्राऽऽह—गुरूनहत्वेति । सामान्यतः कार्यस्यायोग्यत्वे तथाऽस्तु नाम । अत्र तु युद्धरूपं कार्यमत्यन्तायोग्यम् । यत एते भीष्मादयो महानुभावाः । किंचात्र युद्धं विना जीवनं भैक्ष्येणापि संभवतीत्यतोऽत्र कार्यमनन्यगतिकमपि न भवति । तदाह—श्रेयो भोक्तुं भैक्ष्यमपीति । ननु नैतद्युद्धरूपं कर्मायोग्यम् । नतरामत्यन्तायोग्यम् । इतरथा तत्र कर्मणि कथं भगवान् प्रवर्तयेत्—'त्यक्त्वोत्तिष्ठ परंतप' इति । भगवद्वचासि विश्वासातिशयेन चार्जुनस्यापि युद्धरूपं कर्म योग्यमिति स्यान्मतिः । अतस्ता-

मनुसृत्य पक्षान्तरमाह–हत्वाऽर्थकामानिति । किंतु युद्धे प्रवृत्तौ जयेऽपि राज्य-सुखोपभोगा रुधिरप्रदिग्धा इति दोषः । किंच युद्धे प्रवृत्तावप्यस्माकं ( पाण्डवानां ) जयः स्यादेवेति नियमो नास्त्येव । मा भून्नियमः, यद्भावि तद्भवतु । किंत्वस्माकं जयः स्याच्चेद्वरम् । अथवा कौरवाणां जयः स्याच्चे-द्वरम् । एतदपीदानीं न विद्म इत्याह–न चैतद्विद्म इति । अस्माकं जये राज्य-सुखोपभोगो गुणः, भोगेषु रुधिरप्रदिग्धतेति दोषश्च । तथा चैतद्वरम् । अथवा कौरवाणां जये पूर्वोक्तो गुणो नास्ति किंतु दोषोऽपि नास्ति । अपदोषतैव विगुणस्य गुणः । ( माघ ) इति न्यायात् ।

' उपवासः परं श्रेयो न दुष्टान्नं कथंचन '

इति न्यायाच्च तद्वरम्–एष न निश्चयः । एतदुक्तं भवति–दोषसत्त्वेऽपि गुणदृष्ट्या प्रथमः पक्षः श्रेयान् । अथवा गुणाभावेऽपि दोषाभावदृष्ट्या द्वितीयः पक्षः श्रेयानिति न विद्म इति । अत्रार्जुनस्य द्वितीयः पक्षोऽभिमेत इति गम्यते।

ननु दोषोऽपि क्षुद्रश्चेत्स सह्यो भवति । यथा पर्युषितं पिपीलिकायुतं वाऽन्नं संस्कृत्य सेव्यत इति लोके दृश्यते। तथा प्रथमः पक्षोऽत्र कुतो न ग्राह्यो भवत्य-र्जुनस्येति चेन्न । रुधिरप्रदिग्धत्वदोषस्य मरणप्रापकस्य विषतुल्यत्वेन क्षुद्रत्वाभा-वात् । तदाह–यानेव हत्वा न जिजीविषाम इति । अत्र न जिजीविषाम इत्य-नेन राज्यसुखोपभोगे रुधिरप्रदिग्धत्वदोषो मरणहेतुरिति सूच्यते । ननु यद्ये-वमर्जुनस्य मतिस्तर्हि तस्य स्वपराजय एव गरीयानिति निश्चयः स्यादेवेति कथमुक्तं ' न चैतद्विद्म इति । उच्यते–यद्यप्यर्जुनस्यान्तःकरणवृत्तिरीदृशी तथाऽपि सा तेन स्वयमपि प्रमाणत्वेन ग्रहीतुं न शक्यते । मोहावस्थायां जाय-मानाया वृत्तेः प्रमाणत्वेन ग्रहीतुमशक्यात् । 'मोहश्च कीदृशः कथं वा जातः' इत्येतज्ज्ञानमर्जुनस्य नास्ति। तथाऽपि 'मम मोहो जातः' इत्येतावान्निश्चयस्तस्य जात एव। ' कुतस्त्वा कश्मलम् ' इति भगवद्वाक्यात्। तथा चार्जुनस्यापि संदेह एवेति युक्तमुक्तम् 'न चैतद्विद्मः' इति । किंचार्जुन एवं मनसि संभावयति–'धर्म-राजस्य युद्धे प्रवृत्तिर्भगवतस्तत्रानुमतिश्च जयोद्देशेनैव जाता । अतः पराजया-पेक्षया जय एव गरीयान्स्यात् । तेन च रुधिरप्रदिग्धत्वरूपो दोषोऽपि क्षुद्र एव स्यात् ' इति । एतच्च ' यानेव हत्वा न जिजीविषामः ' इत्यत्रत्यसन्-प्रत्ययेन सूच्यते । अन्यथा ' यानेव हत्वा न जीवामः ' इत्येव वदेत् । सन्-प्रत्ययोच्चारणेन ह्ययमर्थोऽवगम्यते–धार्तराष्ट्रान् हत्वाऽपि जीवाम एव । किंतु

मे तादृशीच्छा नास्तीति । तथा च रुधिरप्रदिग्धत्वरूपो दोषो न विषतुल्यो मरणहेतुरिति । अतश्च जयो गरीयान्स्यादिति । नन्वेवं जयस्यैव गरीयस्त्वमित्यर्जुनस्य मतिः स्यान्नतु तद्विपरीतेति किमर्थं तन्निर्णयार्थमर्जुनेन भगवतः प्रश्नः कृत इति चेत्स आह—कार्पण्यदोषोपहतस्वभाव इति । कार्पण्यं दैन्यम् । धैर्यविरोधी विचारप्रतिबन्धको मनोविकार इति यावत् । स एव दोषस्तेनोपहतो विनाशितः स्वभावो विचारशीलता यस्य । अत एव धर्मसंमूढचेताः संस्त्वां पृच्छामीत्यर्थः । यच्छ्रेयः स्यान्निश्चितं ब्रूहीति । अत्र निश्चितमिति ब्रूहीति क्रियाविशेषणम् । ननु न भगवतः प्रवृत्तिरनिश्चितोक्तौ कदाचिदपि । नापि भगवाननिश्चितं वक्ष्यतीत्यर्जुनस्य मतिः । अतः किमर्थं निश्चितमित्यर्जुनेनोक्तमिति चेत्—उच्यते । 'भगवतो भाषणं निसर्गतो निश्चितमेव' इत्थमर्जुनस्य मतौ विद्यमानायामपि यदर्जुनः 'निश्चितं ब्रूहि' इति वदति तत्र निश्चितग्रहणं यन्निश्चितमेव न तु कदाऽपि विपर्यस्यति' इत्यर्थकम्। श्रवणोत्तरं श्रोतृबुद्ध्याऽपि यन्निश्चितरूपेणैव कार्यकारि भवतीति यावत् । 'त्वं निश्चितमेव ब्रूषे किंतु मम तादृशनिश्चयः सद्य एव यथा स्यात्तथा ब्रूहि' इत्यर्जुनस्याऽऽशयः । एतदुक्तं भवति—

सिद्धान्तमात्रश्रवणे मतिः श्रोतुर्न निश्चिता ।
उपपत्तौ श्रुतायां तु श्रोतुः स्यान्निश्चिता मतिः ॥

तथा—अर्थे प्रत्यक्षतो दृष्टे न विकल्पः कथंचन ।
परोक्षे तूद्भूयमान उपपत्त्या निवर्तते ॥

तथा च 'क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परंतप'

इति भगवतोक्तेऽपि 'कथं भीष्ममहं' इत्यादिर्विकल्पोऽर्जुनस्य मतावुद्भूतः । अतो भगवता यदर्जुनेन कर्तव्यं तत्सोपपत्तिकं वक्तव्यं येन श्रवणोत्तरं सद्योऽर्जुनस्य तादृशी प्रवृत्तिरेव भवेत् । न तु लेशतोऽप्यर्जुनस्य मतौ विकल्पस्यावसरः स्यात् । एवं च भगवता पूर्वं यत्

'क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परंतप ।

इत्येतावन्मात्रमुक्तं तदेव पुनः सोपपत्तिकं वक्तव्यमिति फलितम् ।

अत्रेदं बोध्यम्—श्रोत्रा पृष्टेऽर्थे वक्त्रा यद्वक्तव्यं तदुत्तरमात्रं वक्तव्यमुत

तत्सोपपत्तिकं वक्तव्यमित्यत्र वक्तुर्यदृच्छैव नियामिका । प्रकृते श्रोतुरर्जुनस्य कल्याणार्थं प्रवृत्तस्य भगवतो मतिरित्थं स्यादेव ' यदस्यार्जुनस्य युद्धे प्रवृत्तिर्न केवलं ' त्यक्त्वोत्तिष्ठ परंतप ' इत्युक्तिमात्राद्भवति । अतस्तदर्थं सोपपत्तिकमेतत्तथा मया वक्तव्यं यदयं श्रवणमात्रेण सद्य एव युद्धाय सज्जो भवेत् ' इति । एतादृशमत्यनुसारेणोपपत्तिपूर्वकभाषणे प्रवृत्तिः स्यादेव । तस्यां प्रवृत्तौ सोत्साहतामापादयितुमर्जुन आह–शिष्यस्तेऽहमिति । ' केवलमुत्तरमात्रं वक्तव्यमुत सोपपत्तिकं वक्तव्यमित्यत्र वक्तुर्यदृच्छैव नियामिका ' इति यदुक्तं तद्वक्तृश्रोत्रोर्गुरुशिष्यभावादन्यत्र । वक्तृश्रोत्रोर्गुरुशिष्यभावे तु शिष्यस्योपयुक्तोऽर्थः शिष्येणापृष्टोऽपि गुरुणा वक्तव्यो भवति किमुत शिष्येण तथाविधेच्छायां प्रदर्शितायाम् । एवमपि सदा शिष्यहितैकतत्परोऽपि गुरुर्यच्छिष्यस्य हितं प्रकारान्तरेण साध्यं भवेत्तत्रोदासीनो भवति । तत्रौदासीन्यं त्वां प्रपन्नमित्यनेन निवर्त्यते । प्रपन्नः शरणागतः । अनेनानन्यगतिकत्वं सूचितं भवति । वस्तुतोऽर्जुनोऽनन्यगतिक इति भगवता ज्ञायत एव । किमर्थं तत्सूचनाय ' त्वां प्रपन्नम् ' इत्यर्जुनेनोक्तमिति चेत्–नैतद्विचारपूर्वकमर्जुनेनोक्तम् । किंतु शोकातिरेकवशाद्वस्तुस्थित्यनुसारिण्युक्तिरर्जुनस्य मुखान्निर्गता । तदुक्तम्–

सुखस्य दुःखस्य दशातिरेको विचारशक्तिं शिथिली करोति ' इति ।

नहि प्रपश्यामीति । तथा चायमर्जुनस्य शोकातिरेको न लोभेनापनेतुं शक्य इति भावः । ननु

' एतान्न हन्तुमिच्छामि घ्नतोऽपि मधुसूदन ।
अपि त्रैलोक्यराज्यस्य हेतोः किं नु महीकृते ॥

इत्यनेन याऽर्जुनस्यावस्था ' ममायं मोहः ' इति ज्ञानात्पूर्वं वर्णिता तादृश्येव ' कुतस्त्वा कश्मलमिदम् ' इत्यादिभगवद्वाक्यात् ' ममायं मोहः ' इत्यर्जुनस्य ज्ञाने जातेऽपि ' सुराणामपि चाधिपत्यम् ' इत्यनेन वर्णिता दृश्यते । तत्र मोहज्ञानेन विशेषः कुतो नाभूदिति चेन्न । मोहज्ञानेऽपि मोहविनाशाभावात् । उक्तं च–

रज्जौ सर्पभ्रमो मेऽयमित्थं सत्यं विदन्नपि ।
विद्यमाने नेत्रदोषे सर्पत्वेनैव पश्यति ॥ इति ।

नहि भ्रमो भ्रमत्वेन ज्ञातः सद्यो निवर्तते ।
भ्रमहेतोर्विनाशे तु भ्रमः सद्यो विनश्यति ॥ इति च ।

तथा च ' मम मोहो जातः ' इत्येवमर्जुनस्य यज्ज्ञानं ' कुतस्त्वा कश्मलम् ' इति भगवद्वाक्याज्जातं ततः प्रागूर्ध्वं चार्जुनस्य मानसी वृत्तिस्तुल्यप्रायैव । मोहकारणस्याविनाशात् ।

ननु कस्मिंश्चित्कर्मणि मनुष्यस्य प्रवृत्तिर्हि तादृशकर्मविषयकयोग्यतानुसंधानपूर्विकैव जायते । तथा कस्मिंश्चित्कर्मणि प्रवर्तमानस्य निवृत्तिर्हि तादृशकर्मविषयकायोग्यतानुसंधानपूर्विकैव जायते । अत्र च युद्धकर्मण्ययोग्यतामनुसंधायार्जुनस्य ततो निवृत्तिर्जाता । परंतु यतोऽत्र भगवान् ' हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ ' इति वदति ततो युद्धकर्मणि योग्यता मयाऽज्ञाताऽपि स्यादेवेति भगवद्दृष्ट्या योग्यतामनुसंधायार्जुनस्य प्रवृत्तिः कुतो नेति चेत्—उच्यते । युद्धान्निवृत्य रथोपस्थ उपवेशनकर्मण्ययोग्यता या भगवता ' कुतस्त्वा कश्मलम् ' इत्यादिना प्रदर्शिता सा न स्वरूपकृता किंतु युद्धारम्भकालकृता । एतच्च ' विषमे समुपस्थितम् ' इत्यत्र विषमशब्देन सूचितम् । तथा च

' स्वरूपतोऽनवद्यं सद्देशकालाद्युपाधितः ।
गर्ह्यं चेत्तत्र हानं स्यादुपाधेरेव केवलम् ॥

इत्युक्तदिशाऽर्जुनस्य युद्धान्निवृत्यावस्थानं स्वरूपतो नायोग्यमतस्तस्य न हानमित्येवं विषमपदं प्रयुञ्जानस्य भगवतो गूढाभिप्रायं प्रकल्प्य युद्धे प्रवृत्तिरर्जुनस्य तदानीं न जातेति ।

नन्वेतदनुपपन्नम् । यद्यपि 'ईदृशोऽयं मोहः, इदं च तस्य कारणम्' इत्येवमर्जुनस्य ज्ञानं न जातं तथाऽपि ' कुतस्त्वा कश्मलम् ' ' त्यक्त्वोत्तिष्ठ परंतप ' इति भगवद्वाक्यात् ' तव मोहोऽयं तं त्यक्त्वा युद्धायोत्तिष्ठ ' इत्यर्थकात्स्वस्य मोहं निश्चितवतोऽर्जुनस्य भगवदाज्ञानुसारेण युद्धे प्रवृत्तिर्भाव्या सा तु न जाता। प्रत्युत भगवद्वाक्यात्पूर्वं शस्त्रन्यासपूर्वकं रथोपस्थ उपवेशनेन सूचितो युद्धप्रवृत्त्यभावो भगवद्वाक्यश्रवणोत्तरं ' न योत्स्ये ' इति स्पष्टमुक्तः । भगवद्वचस्यविश्वासस्त्वर्जुनस्य मनसि लेशतोऽपि न संभवति । तथा च कथमेतदिति चेत् ।

उच्यते—क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परंतपेत्येवं भगवतोच्यते

तथाऽपि तदशक्यत्वाद्दुर्जनो नानुष्ठातुं प्रभवति । 'अयं मे मोहः' इति भगवद्वाक्याज्ज्ञानतोऽर्जुनस्य गात्रावसादनमुखपरिशोषवेपथुप्रभृतिः शरीरगतो बाह्यो विकारो यद्यपि क्षीणस्तथाऽपि मानसो विकारस्तदवस्थ एव । अत्र तु तादृशविकारविरुद्धं हृदयदौर्बल्यत्यागमादिशति भगवान् । हृदयदौर्बल्यं मानस्याः शक्तेरपचयः । तथा च भगवताऽऽज्ञप्तमप्यशक्यत्वान्नाङ्गीकृतमर्जुनेन । शक्यं चेदनुष्ठितं स्यादेव । यतः–

अयोग्यस्यापि शक्यस्यानुष्ठानं देशिकाज्ञया ।
वने वसन् दशरथस्याऽऽत्मजोऽत्र निदर्शनम् ॥

अत्रायोग्यत्वमनुष्ठातृत्वदृष्ट्या साधारणजनदृष्ट्या वा न तु देशिकदृष्ट्या । यतः—

सद्यः शुभं शुभोदर्कं वा ज्ञापयति देशिकः ।
अन्यथा ज्ञापयन्नैव भवेद्देशिकशब्दभाक् ॥ इति ।

एवं च 'हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ' इति भगवदाज्ञानुसारेणानुष्ठानस्याशक्यत्वाद्युद्धे प्रवृत्तिर्न जातेति सिद्धम् ।

अत्र कश्चिदाह—"मा भूद्युद्धे प्रवृत्तिः । किंतु 'न योत्स्ये' इति स्पष्टशब्देनोपसंहारो न युज्यते। तथा हि—उपदेष्टाऽत्र भगवाञ्श्रीकृष्णः । उपदेश्यश्च विनयशीलोऽर्जुनः । विनयशीलता च 'शिष्यस्तेऽहम्' इति स्वोक्त्याऽनैवार्जुनेन प्रकाशिता । तथा च यद्यपि 'त्यक्त्वोत्तिष्ठ' इति भगवदुक्तमर्जुनस्यानभिमतं तथाऽपि साऽत्रासंमतिः पर्यायेणार्जुनेन विज्ञापनीया भवति । तादृशी 'कथं भीष्ममहं संख्ये० पूजार्हौ' इत्यनेन विज्ञापिता च । तावतैवालं नत्वग्रे 'न योत्स्ये' इति स्पष्ट उपसंहारो योग्यः । अनया स्पष्टनिषेधोक्त्याऽऽज्ञाभङ्ग इव प्रतीयते । औद्धत्यदोषश्चार्जुने प्रतीयते" इति ।

सोऽयं शब्दार्थतत्त्वानभिज्ञस्यानर्गलः प्रलापः । तथा हि—न योत्स्य इति स्पष्टो निषेधो युद्धस्य । नतु युद्धस्य विधिः पूर्वं भगवता कृतः । 'हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ' इत्यत्र 'हृदयदौर्बल्यं त्यक्त्वा युध्यस्व' इत्येवं यदि भगवानवक्ष्यत्तर्ह्याज्ञाभङ्गोऽभविष्यत् । युध्यस्वेति विधिर्हि—

'अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः ।
अनाशिनोऽप्रमेयस्य तस्माद्युध्यस्व भारत' ( २ । २८ ) ॥

इत्येवमग्रे कृतः । मोहस्य क्षयिष्णुत्वदशायां हि तादृशविधिः कर्तुं शक्यः । देहात्मैक्यभ्रमो ह्यत्र मोहहेतुः । देहात्मनोः पार्थक्येन ज्ञाने तयोर्विनाशित्वाविनाशित्वज्ञाने च सति मोहोऽपचयशीलो भवति । 'क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ ' इति विधेः पूर्वं ' तवेदं कश्मलम् ' इत्येतावन्मात्रमेव भगवतोक्तम् । तेन ' मम मोहः ' इत्येतावन्मात्रे ज्ञातेऽपि युद्धविरोधिनी मनोवृत्तिस्तदवस्थैवेति न तदानीं ' युध्यस्व ' इति विधिः कर्तुं शक्यः । नैव कृतश्च । मोहे क्षयगामिनि सत्येव ' युध्यस्व ' इति विधिः कृतः । तदुत्तरं च कदाऽपि ' न योत्स्ये ' इति शब्दो नैवार्जुनस्य मुखान्निर्गतः । तथा च ' न योत्स्ये ' इत्यर्जुनोक्तेः पूर्वं ' युध्यस्व ' इत्येवं भगवत्कृतविध्यभावान्नाऽऽज्ञाभङ्गः । तथोत्तिष्ठेति विध्यनन्तरं नोत्थास्यामीति निषेधोऽर्जुनेन कृतः स्याच्चेत्स्यादाज्ञाभङ्गः । न तु तथा निषेधो दृश्यते । तत्रापि ' हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ ' इत्यत्रोत्थानस्य न विधिः । उत्थानं चात्र युद्धभावनया पूर्ववदवस्थानम् । भीष्माद्यवलोकनात्पूर्वं यथाऽवस्थानं तथाऽवस्थानम् । तच्च मध्ये समागतेन कश्मलरूपेण विघ्नेन प्रतिहतमिति प्रतिबन्धकनिवृत्त्या रक्षणीयं नत्वपूर्वं साधनीयम् । विधिस्तु हृदयदौर्बल्यत्यागस्य । तथा च 'हृदयदौर्बल्यं न त्यजामि' इत्यर्जुनेनोक्तं स्याच्चेत्स्यादाज्ञाभङ्गः । एवं च भगवता कृतो विधिर्हृदयदौर्बल्यत्यागस्य, अर्जुनेन कृतो निषेधश्च युद्धस्येति विषयभेदान्नैवाऽऽज्ञाभङ्गः पदमादधाति । नचोत्तिष्ठेति विधिर्युद्धफलक एवेति फलितो युद्धविधिरस्तीति वाच्यम् । उत्थानस्य युद्धफलकत्वेऽप्यर्जुनेन युद्धं कर्तव्यमिति भगवत इच्छासत्त्वेऽपि चात्र तादृशविधेर्विवक्षाया अभावात् । अन्यथा ' युध्यस्व ' इत्येव भगवतोक्तं स्यात् । किंच यथौद्धत्यदोषेणार्जुनस्त्वया दूषितस्तथाऽस्थान आज्ञां कुर्वन् भगवान् असमयज्ञदोषेण किमिति न दूषितः । अथैतद्दोषपरिजिहीर्षयैव भगवता ' युध्यस्व ' इति नोक्तम् । अन्यथा कश्मलज्ञानमात्रेणार्जुनस्य युद्धे प्रवृत्तिमसंभावयताऽपि ' युध्यस्व ' इति स्पष्टप्रतिपत्त्यर्थमुक्तं स्यादिति चेत्—किमित्यर्जुन औद्धत्यदोषमापादयसीति विभावय ।

श्रीभगवानुवाच—

अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे ।
गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः ॥ ११ ॥

अथ भावार्थदीपिकानुसारेण व्याख्यायते। अद्याऽऽश्चर्यमस्माभिर्दृष्टं यत्त्वयेदानीमकस्मात्किमपीदमारब्धम्। त्वमात्मानं प्राज्ञं च मन्यसे परमज्ञानं न जहासि। अस्माभिरत्रोपदेष्टव्यं चेत्त्वमनेकशो नीतिवादान्ब्रवीषि। यथाऽऽद्रावेव कश्चिज्जनुषाऽन्धत्वादमार्गगामी पश्चात्स उन्मत्तश्चेद्यथेच्छमितस्ततो धावति तथेदानीं तव प्राज्ञत्वस्यावस्था प्रतिभाति। त्वं चाऽऽदौ स्वमात्मानमेव न जानासि किमुत परान्; तथाऽपि कौरवानेतानुद्दिश्य शोचस्येतदेवास्माकं पुनः पुनर्हुबविस्मयकारकं भवति। धार्तराष्ट्राः कथं वध्या इति यत्प्राज्ञंमन्येन त्वयोच्यते तद्वद किं त्रिभुवनस्यावस्थितिस्त्वदायत्ता? अनादिरियं विश्वरचनेति यच्छ्रूयते तत्किं मृषा? एकस्मात्परमात्मनः सकाशादाकाशादीनि भूतान्युत्पद्यन्त इति यच्छ्रुतयः कथयन्ति तदपि किं मृषा? तथा किं जन्ममृत्यू त्वया सृष्टौ? तथा विनश्यदर्थस्त्वया विनाशित एव किं विनश्यति? (वस्तुतो न किंचिदपि त्वदधीनमतः केवलं भ्रान्तिमूलोऽहंकार एव तव दृश्यते)। किंचैतेऽवध्या इति त्वया मनसि कृतेऽपि किमेते चिरंजीवा भविष्यन्ति? किमखिलानामेतेषां घातकस्त्वमेक एवासि? अखिलाश्चैते त्वयैव वध्याः किम्? भ्रान्तिश्चेयं तव चित्ते कथमुदिता? तथा चाखिलमिदं प्राणिजातमनादिसिद्धं स्वभावत एव जायते विनश्यति च। अतः किमर्थं शोचासि तद्वद। किंच 'प्राणिजातस्योत्पत्तिविनाशौ न त्वदधीनौ' इत्येव केवलं न। तौ तु पराधीनावेव। किंतु त्वया तयोः स्वरूपमपि न ज्ञायते, एतन्मौर्ख्यान्न ज्ञायते त्वया। आचिन्तनीयं च किमपि चिन्त्यते परमस्माकं नीतिवादान् कथयसि। चित्रमिदम्। त्वमेव पश्य, ये विवेकिनस्ते 'इमे जाता इमे मृता इति केवलं माययैव भासते' इति मत्वा न कथमपि शोचन्ति ॥११॥

न त्वेवाहं जातु नाऽऽसं न त्वं नेमे जनाधिपाः।
न चैव न भविष्यामः सर्वे वयमतः परम् ॥ १२ ॥

हेऽर्जुन मयेदानीं यत्कथ्यते तच्छृणु। वयं यूयमिमे भूपतिप्रभृतयश्च सर्वे यादृशा इदानीं दृश्यन्ते तथैव पूर्वमप्यासन्नग्रे च तथैव स्युरिति नित्या एवाथवैते सर्वथा विनष्टाः स्युरिति च कल्पनाद्वयमपि भ्रान्तिमूलकमेव। उत्पत्तिर्विनाशश्च यः प्रतिभासते स माययैव। तात्त्विकं च यद्वस्तु तदविनाश्येव। यथा वायुना प्रचलितं जलं तरङ्गाकारं भवति तदा जलव्यतिरिक्तस्य कस्य जन्म भवति तथा मन्दीभूतायां वायुगतौ शान्तं स्थिरं जलं भवति तदा जलव्यतिरिक्तस्य कस्य विनाशो भवति तत्त्वमेव स्वमनसि विचारय ॥ १२ ॥

**देहिनोऽस्मिन्यथा देहे कौमारं यौवनं जरा ।
तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति ॥ १३ ॥**

एक एव च देहो वयोभेदेनानेकवद्दृश्यते तत्प्रत्यक्षमेव त्वमलोकय, आदौ बाल्यं दृश्यते तच्च तारुण्यप्राप्तावपगच्छति ( तदपि च वार्धक्यप्राप्तावपगच्छति )। नतु तेनैकेन सह देहोऽपगच्छति तथैवैकस्मिंश्चैतन्येऽनेके देहा आयान्त्यपगच्छन्ति चेति । यश्चैवं जानीते तस्य न व्यामोहदुःखं कदाऽपि ॥१३॥

**मात्रास्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदाः ।
आगमापायिनो नित्यास्तांस्तितिक्षस्व भारत ॥ १४ ॥**

बहवस्तु नैवं जानते तत्र हेतुः स्वस्येन्द्रियाधीनत्वम् । इन्द्रियैश्चान्तःकरणमाकृष्यतेऽतोऽयं भ्रमः । इन्द्रियाणि हि विषयानभिधावन्ति तेन च यथायथं हर्षः शोकश्च समुत्पद्यते । तत्संबन्धाच्च तादृशहर्षशोकान्वितमन्तःकरणं तत्र निमज्जति । ( निमज्जनेनान्तःकरणस्य ततो बहिर्निर्गमः कष्टसाध्य इति सूच्यते । अथ हर्षान्वितस्य तथाऽस्तु नाम । शोकान्वितस्य त्वयत्नसाध्य एव बहिर्निर्गम इति चेन्न । शोकसाधनेऽपि विषये भाविहर्षसाधनत्वस्य संभवेन तस्यायत्नसाध्यत्वाभावात् )। विषयाणां च नैवैकरूपतया सदाऽवस्थितिः । यत्र च दुःखं दृश्यते तत्रैव किंचित्सुखमपि हि दृश्यते । ( तच्च देशभेदेन कालभेदेन स्वरूपभेदेनांशभेदेन वेत्यन्यदेतत् )। यथा शब्दस्य सामान्यस्वरूपं ( वर्णात्मकत्वं ) सममेव सर्वत्र । स च श्रोतुः श्रवणेन्द्रियद्वाराऽन्तः प्रविश्यान्तःकरणं संबध्नातीत्यपि सर्वत्र सममेव । किंतु क्वचिन्निन्दाद्वारा द्वेषं जनयति क्वचिच्च स्तुतिद्वारा प्रीतिं जनयति । तथा स्पर्शः सामान्यरूपेण सर्वत्र सम एव । तस्य त्वचा संबन्धश्च सर्वत्र सम एव । किंतु क्वचित्काठिन्यद्वारा द्वेषं जनयति क्वचिच्च मार्दवद्वारा संतोषं जनयति । तथा रूपमाकारात्मकं सर्वत्र सममेव । तस्य नेत्रेन्द्रियद्वारा संबन्धश्च सर्वत्र सम एव । किंतु क्वचिद्भीषणं दुःखं जनयति क्वचिच्च मोहकं सुखं जनयति । तथा गन्धः सामान्यरूपेण सर्वत्र समस्तस्य घ्राणेन्द्रियद्वारा संबन्धश्च सम एव । किंतु क्वचिद्दुर्गन्धो दुःखं जनयति क्वचिच्च सुगन्धः सुखं जनयति । तथा रसोऽपि च सामान्यरूपेण सर्वत्र सम एव । तस्य रसनेन्द्रियद्वारा संबन्धश्च सम एव । किंतु क्वचित्कटुकषायादिस्त्रासं जनयति मधुरश्च सुखं जनयति । ( तस्मादेक

एव विषयः सुखदायको दुःखदायकश्चेति सिद्धम् । तत्र यथा दुःखकालेऽपि दुःखदायकादेव विषयात्सुखसंभावनया न परावृत्तिस्तथा सुखकालेऽपि सुखदायकादेव विषयाद्दुःखसंभावनया कुतो न परावृत्तिः । प्रत्युत सुखापेक्षया दुःखस्य बाहुल्यात्परावृत्तिरेव भाव्या )। अतः प्राणिनां या विषयासक्तिर्भवत्यपमविचार एव । विषयासक्तिरेव च भ्रान्तिकरी । पश्य य इन्द्रियाधीना जनास्त एवेदमुष्णमिदं शीतमिति प्रतियन्ति । तदनुसारेण च यथायथं सुखिनं दुःखिनं चाऽऽत्मानं मन्वते । यच्चैतद्विषयमन्तरेणान्यत्किंचिदपि रम्यमिन्द्रियाणां न दृश्यतेऽयं हि स्वभाव एवेन्द्रियाणाम् । ( कदाचिदीदृशः स्वभावोऽनवद्यः स्याद्यदि विषया नित्याः स्युः ) । ते तु रौहिणे नवमे मुहूर्ते सूर्यप्रकाशेन भासमानं जलमिव स्वप्ने भासमाना हस्त्यादय इव वा केवलं प्रातिभासिकाः क्षणिकाः । पश्य च त्वमेव पार्थ एवमेतेष्वनित्येषु विषयेष्वासक्तिं मा कुरु । आसक्तिश्च परिणामे भ्रान्त्युपादिकेत्यतः सर्वथा विषयसङ्गं परित्यज ॥ १४ ॥

यं हि न व्यथयन्त्येते पुरुषं पुरुषर्षभ ।
समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते ॥ १५ ॥

एते च विषया यं पुरुषं नाऽऽत्मसात्कुर्वन्ति तस्य न कदाऽपि सुखं नापि दुःखम् । गर्भवास एव हि तस्य न भवति । पुनर्जन्मकारणाभावात् । यश्चैवं विषयानधीनः स एव नित्यात्मसाक्षात्कारीति त्वया विज्ञेयः ॥ १५ ॥

नासतो विद्यते भावो नाभावो विद्यते सतः ।
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥ १६ ॥

इदानीमर्जुन शृणु तादृशं किंचित्कथयामि यद्विचारिभिर्लोकैः सत्वरमभिज्ञायते । अस्मिंश्च जगद्रूपोपाधौ सर्वव्यापि चैतन्यं गुप्तमस्ति । यच्च तत्त्वदर्शिनां संमतमेव । तत्र च यथोदके मिश्रितं पय उदकेनैकीभूतमपि राजहंसः पृथक्करोति यथा वाऽग्नौ संतापिते सुवर्णे तत्रत्यादपकृष्टभागादुत्कृष्टभागो निष्कृष्यते दोषज्ञैर्बुद्धिशालिभिः, यथा वा बुद्धिवैभवेन दधिमन्थने कृते तत्रावसाने नवनीतं दृश्यते, यथा वा बुसयुते धान्ये शूर्पव्यापारेण संचालिते बुसं निःसृतं भवति धान्यं केवलमवशिष्यत इति दृश्यते, तथोपाधिभूतेऽस्मिन्प्रपञ्चे विचारेण सहसा निःसृते चैतन्यरूपं परं तत्त्वं केवलं तत्त्वदर्शिदृष्ट्याऽवशिष्यते । अत एव चानि-

त्येऽस्मिन्प्रपञ्चे नैव तेषां तत्त्वदर्शिनामास्तिक्यबुद्धिः कदाऽपि । उभयमपि चैत-त्तैस्तत्त्वदर्शिभिर्निश्चितमेवाऽऽलोच्यते ॥ १६ ॥

अविनाशि तु तद्विद्धि येन सर्वमिदं ततम् ।
विनाशमव्ययस्यास्य न कश्चित्कर्तुमर्हति ॥ १७ ॥

पश्य त्वमेवात्र यत्सारासारविचारे क्रियमाणे यद्भ्रान्त्या दृश्यते तदसारं यच्च सारभूतं चैतन्यं तत्स्वभावतो नित्यमेव । यस्य च चैतन्यस्यायं लोकत्रय-रूपो महानाकारस्तत्र चैतन्ये नैवास्ति नामरूपाकारादिकं चिह्नं किमपि । यच्च चैतन्यं सर्वदा सर्वगतमुत्पत्तिविनाशरहितं तस्य हठाच्चिकीर्ष्यमाणोऽपि विनाशः कथं भवेत् ॥ १७ ॥

अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः ।
अनाशिनोऽप्रमेयस्य तस्माद्युध्यस्व भारत ॥ १८ ॥

यच्चेदमखिलं शरीरजातं तत्स्वभावत एव ध्रुवं विनाश्यतस्त्वयाऽत्रार्जुन युद्धं कर्तव्यमेव भवति ॥ १८ ॥

य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम् ।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥ १९ ॥

अत्र च केवलं त्वया देहाभिमानेन देहमात्रे दृष्टिं प्रक्षिप्य तथोच्यते यथैतेषां शरीरं घातितं चेदेते मरिष्यन्तीति । अतस्त्वयाऽत्र तत्त्वं न विज्ञायते । तत्त्व-तस्तु विचारे क्रियमाणे नैव त्वमेतेषां हन्ता नापि चैते त्वया वध्याः ॥ १९ ॥

न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः ।
अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ॥ २० ॥
वेदाविनाशिनं नित्यं य एनमजमव्ययम् ।
कथं स पुरुषः पार्थ कं घातयति हन्ति कम् ॥ २१ ॥

यथा स्वप्ने यद्दृश्यते तत्स्वप्ने यद्यपि सत्यतया भासते तथाऽपि जागृतौ निरीक्षमाणेन नैव किंचिद्दृश्यते। तथेदं जगदखिलं मायिकमेव । व्यर्थ एव तव भ्रम इदं सत्यमिति । तथा च यथा शरीरस्य च्छायायां शस्त्रेण हतायामपि न शरीरं लेशतोऽपि क्षतं भवति । यथा वा पूर्णे कुम्भे न्युब्जे तेन तत्रत्यसूर्य-प्रतिबिम्बे चादृश्यतां गतेऽपि न सूर्यो लेशतोऽप्यदृश्यो भवति । यथा वा मठे

प्रविष्टमाकाशं मठाकारं दृश्यते तच्च भग्ने मठे पूर्ववत्स्वरूपेणावतिष्ठत एव। तथा शरीरे विनष्टेऽपि नैव तद्गत आत्मा तत्त्वतो विनश्यति। अत एषां विनाशः स्यादिति कल्पना भ्रान्तिमूलिकैव। सा च त्वया त्याज्यैव ॥ २० ॥ २१ ॥

**वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि।**
**तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही ॥२२॥**

यथा च जीर्णं वस्त्रं परित्यज्य नूतनं परिधत्ते मनुष्यस्तथा चेतन आत्मा नूतनं शरीरान्तरं स्वी करोति ॥ २२ ॥

**नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः।**
**न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ॥ २३ ॥**
**अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च।**
**नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ॥ २४ ॥**

आत्मा चायमनादिर्नित्यसिद्धो निरुपाधिकः शुद्ध एव। अतोऽस्य शस्त्रादिभिश्छेदो न संभवति। अयं च प्रलयोदकेनापि न क्लिन्नो भवति। अग्निना च न दग्धो भवति। वायुजन्यो महाशोषश्चात्र विकृतिमुत्पादयितुं न प्रभवति। अर्जुनायमात्मा नित्योऽचलः शाश्वतः परिपूर्णः सर्वत्र सदोदित एवाऽऽस्ते ॥२४॥

**अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते।**
**तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि ॥ २५ ॥**

अर्जुनायमात्मा तर्कदृष्टेर्न गोचरः। ध्यानमेव हि ‘ अयमात्मा मद्विषयो भूयात् ’ इत्येवमुत्कण्ठां वहति। अतश्चायं मनसा भावयितुमशक्य एव। अपरिमितश्चायं पुरुषोत्तमः साधनैरप्राप्य एव। (साधनानां परिमितत्वेन तत्र शक्त्यभावात्)। तथाऽयमात्मा गुणत्रयातीतत्वाद्व्यक्तो न भवति। अनादिरविकृतश्चायं सर्वरूपश्च विद्यते। ( सर्वान्तर्यामित्वात् )। ईदृशोऽयं सर्वात्मा भावनीयस्त्वयाऽर्जुन। तेन चानायासेनैवाखिलैस्तवेदानीं जायमानः शोको विलयं गच्छेत् ॥ २५ ॥

**अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम्।**
**तथाऽपि त्वं महाबाहो नैनं शोचितुमर्हसि ॥ २६ ॥**

अथ यदीदृशमात्मानं न वेत्सि किंतु विनाशिनं वेत्सि। तर्ह्यपि शोको न युक्तः।

यतः सृष्टेरनन्तरं स्थितिः स्थितेरनन्तरं लयः, लयस्यानन्तरं पुनः सृष्टिरित्येवं सृष्टिस्थितिलयानां मिथः संबन्धेनानुस्यूतो जायमानः प्रवाहो गङ्गाजलस्येव सततं विद्यत एव । उद्गमे हि गङ्गाजलमखण्डितं दृश्यते समुद्रे प्रविशच्च तथैव दृश्यते मध्ये प्रवहदपि च तथैव दृश्यते । एतास्तिस्रोऽवस्थाः सततं प्रचलिता दृश्यन्ते (कदाचिदेता अपि खण्डिताः स्युः)। सृष्टिस्थितिलयावस्थास्तु तदपेक्षयाऽप्यधिका इत्यवधारय । तास्तु केनापि प्राणिना कस्मिन्नप्यवसरे स्तम्भयितुमशक्या एव। अत एतत्सर्वमशोच्यमेव यदेतेषां प्राणिनां सृष्टिस्थितिलयरूपेणावस्थानमयमेतेषामीदृशोऽनादिसिद्धः स्वभाव एव ॥ २६ ॥

अथवा यद्येतन्मयोक्तं न ते रोचते तर्हि त्वं स्वयमेव पश्यैताञ्जनाञ्जन्ममरणाधीनान् । तथा पश्यतो जन्ममृत्यूनामपरिहार्यत्वं च निश्चिन्वतस्तेऽत्र न किंचिदपि शोककारणं दृश्यते । तदाह—

**जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ।**
**तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ॥ २७ ॥**

यदुत्पन्नं तद्विनश्यति यच्च विनष्टं तत्पुनरपि दृश्यत इत्येवमेतज्जन्ममृत्युचक्रं घटिकायन्त्रमिवानिशं भ्रमति । अथवा ( सूर्यस्य ) उदयास्तमयावखण्डितौ स्वभावत एव यथा भवतस्तथा जन्ममृत्यू अपि । अतस्तौ जगत्यनिवार्यावेव । किंच महाप्रलयकाले त्रैलोक्यस्यापि विनाशोऽवश्यं भाव्येव । तस्मादपि जन्मनाशावपरिहार्यौ ।अथवा महाप्रलयेन सर्वं संहृतं नतु जन्ममृत्यू संहृतौ। अतस्तावपरिहार्यावेव। एवं विजानानश्च त्वं किमर्थं खेदं करोषि । कुतश्चार्जुन विजानन्नप्यविजानान इव भवसि ॥ २७ ॥

किंचान्यदत्रानेकधा विचार्यमाणेऽप्यर्जुन तव शोककारणमत्र न किंचिदपि दृश्यते—

**अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ।**
**अव्यक्तनिधनान्येव तत्र का परिदेवना ॥ २८ ॥**

यानि चैतान्यखिलानि भूतानि जन्मतः प्रागमूर्तावस्थान्येव जन्मोत्तरं व्यक्तान्यभूवन् । तानि च यत्र क्षयं यान्ति तत्र निःसंशयममूर्तानि पुनः पूर्वावस्थां प्राप्नुवन्ति । न तु कथंचिदपि ततस्तेषामन्यत्वम् । एवमेकस्यैव वस्तुनो जन्मक्षययोर्मध्ये यत्किंचिन्मूर्तं स्वरूपं दृश्यते तदर्थादलीकमेव केवलं माययाऽऽत्मस्व-

रूपे प्रतिभासते। निद्रितस्य यथा स्वप्ने तद्वत्। अथवा यथा वायुना संचालित-मुदकं तरङ्गाकारं प्रतिभासते यथा वा सुवर्णं परप्रयत्नेनालंकाररूपेण व्यक्तं भवति तथेदमखिलं विश्वं मायया मूर्तरूपेण व्यक्तं भवति। यथा चाऽऽकाशे सहसैवाभ्रपटलं किंचित्कालं दृश्यते तद्वत्। ततश्चादावेव यत्खलु नास्ति तदर्थं कुतस्त्वया रुद्यते। निधेहि दृष्टिं निर्विकारे केवलमेकास्मिन्सत्स्वरूपे ॥ २८ ॥

तस्मिंश्च परमात्मनि प्रीत्यासक्तमनसो जना ( विषयांस्त्यजन्तीति न किंतु ) विषयैरेव ते त्यज्यन्ते विरक्ताश्च सन्तो वने निवसन्ति। तत्रैव चाऽऽत्मानि दृष्टिं निधाय मुनीश्वरा ब्रह्मचर्यादिव्रतानि तपांसि चाऽऽचरन्ति।

**आश्चर्यवत्पश्यति कश्चिदेनमाश्चर्यवद्वदति तथैव चान्यः।**
**आश्चर्यवच्चैनमन्यः शृणोति श्रुत्वाऽप्येनं वेद न चैव कश्चित् ॥२९॥**

केचिदेनमात्मानं निश्चलेन मनसा समालोचयन्तः सांसारिकमखिलं व्यवहारं विस्मरन्ति। केचिच्चैनमात्मानं वर्णयन्तस्तद्गुणानुवादेन संसारादुपरतचित्ताः क्षणमपि मनसि विषयप्रवेशमकुर्वाणास्तथाऽऽत्मानि लीनान्तःकरणा भवन्ति यथा न पुनः कदाऽपि विषयप्रवेशसंभवना। अन्ये च केचिदात्मनो गुणौघं शृण्वन्तोऽहंकारशून्या देहाभिमानरहिता भवन्ति। ततोऽप्यपरे केचित्प्रत्यक्षसाक्षात्कारेणाऽऽत्मरूपा एव भवन्ति। यथा गच्छन्तो नदीनां प्रवाहा महान्तोऽपि सर्वेऽपि चान्ते समुद्रं प्रविशन्त्येव न कोऽपि क्वचिदपि प्रवाहोंऽशेनापि समुद्रेऽवकाशो नास्तीति कृत्वा निवर्तते तथा योगीश्वराणां मतिरात्मस्वरूपे ( प्रथमतो विषयविषयिभावेन ) प्रविष्टाऽपि पश्चात्तत्रैक्यं तथा गच्छति यथा सुविचारशतेनापि न पुनस्ततः परावर्तते ॥ २९ ॥

**देही नित्यमवध्योऽयं देहे सर्वस्य भारत।**
**तस्मात्सर्वाणि भूतानि न त्वं शोचितुमर्हसि ॥३०॥**

तदेव चाऽऽत्मरूपं चैतन्यं सर्वत्र सर्वेषु देहेषु विद्यते यच्च न कथमपि विनाशयितुं शक्यते तदेव चाखिलजगद्रूपमेकं चैतन्यं त्वं पश्य। यस्य च संबन्धाभासमात्रेणेदमखिलं विश्वं प्रकृत्यैवोत्पद्यते विनश्यति च। तत्र वद त्वमेवात्र किं शोच्यत इति। सामान्यतश्च विचारे क्रियमाणेऽपि चार्जुन कथमिदं न ज्ञायते त्वया शोकोऽयं कदाऽपि नानवद्य इति ॥ ३० ॥

स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि ।
धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यते ॥३१॥

अर्जुनाद्यापि कथं न विचारयसि । किमिदं ( धर्मविरुद्धं ) त्वयेदानीं चिन्त्यते । यश्च संकटात्तारयति स स्वधर्मस्त्वयेदानीं विस्मृतः किमु। स्वधर्माचरणे यद्यप्येतेषां कौरवाणां किमप्यनिष्टं स्यात्तव वा किमपि स्यादथवा युगान्तः स्यात्तथाऽपि स्वधर्म एको न कथमपि त्याज्यो भवति । ( नित्यं च स्वधर्मचिन्तनं मनसोऽपसार्येदमिदानीमागन्तुकमुत्पद्यमानं ) दयालुत्वं स्वधर्मत्यागेन प्राप्यमाणामापत्तिं निवारयितुं प्रभवेत्किम् । अर्जुन यद्यप्येतान्पश्यतस्ते चित्तं स्निग्धमभूत्तथाऽपि युद्धसमय इदमनुचितमेव दयालुत्वम् ।यथा च नवज्वरविशेषे सात्त्विकोऽप्याहारो घातकर एव भवति । तत्र पथ्यमिति गृह्यमाणं गोक्षीरमपि विषमेव भवति। तथाऽन्येनान्यत्किंचित्क्रियते चेत्तत्र स्वहितं विनश्येदेव। अतोऽत्रार्जुनावहितमना भव । वृथैवेदानीं त्वं व्याकुलो भवसि । पश्य स्वधर्मे यस्मिन्नाचीर्णे न कदाऽपि बाधः स्याद्यथा मार्गेण गच्छतः सर्वथा नैवापायशङ्का यथा च दीपप्रकाशसाहाय्येन गच्छतो न पादस्खलनं तथा स्वधर्ममाचरतः सकला मनोरथा अनायासेनैव पूर्णा भवन्ति । अतश्चैतदर्थं त्वमेव पश्य युष्माकं क्षत्रियाणामिदानीं युद्धादन्यात्किमपि नोचितमिति । तस्मात्केनापि प्रकारेण कपटमनाश्रयन्युध्यमानस्य शत्रोरभिमुखो भूत्वा युध्यस्व । एतच्च सर्वं भवादृशस्य प्रत्यक्षवदेव स्पष्टं तत्र किं मया कथनीयम् ॥ ३१ ॥

यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम् ।
सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम् ॥ ३२ ॥

अर्जुन यदिदमिदानीं युद्धमुपस्थितं तन्मन्ये भवतां पूर्वादृष्टमिदानीं फलितमिति । यच्च भवतां सकलस्य धर्मस्य निधानं (मूलसंग्रहः) तदिदानीं प्रकटितमभूत् । मन्ये चायं किं संग्राम उतेदृशरूपधारी मूर्तिमान्स्वर्गोऽथवा तवायं प्रतापाग्निर्मूर्तिमानुदितः, अथवा त्वदीयगुणेषु प्रीत्याऽऽसक्त्यतिशयात्कीर्तिः स्वयमेव त्वामनुगन्तुं यदिच्छति तदयं स्वयंवरः किमु । ये च सुकृतातिशयशालिनः क्षत्रियास्तेषामेवेदृशः संग्राम उपस्थितो भवति। यथा पथि गच्छतस्तादृशस्याकस्माच्चिन्तामणिरुपस्थितो भवति यथा वा जृम्भया मुखे प्रसृते तत्राकस्मादमृतधारा पतति तथाऽयं युद्धप्रसङ्गस्तवोपस्थितः ॥ ३२ ॥

अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि ।
ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि ॥ ३३ ॥

अथ यद्येवं युद्धात्पराङ्मुखीभूय केवलं शोचतैवावस्थीयते त्वया तर्हि त्वं स्वयमेव स्वस्य हानिकरो भवसि । यदि चात्र रणे त्वं शस्त्रं परित्यजसि तर्हि यत्पूर्वजैः संपादितं तत्त्वया ( नोपचायितं न संरक्षितं किंतु केवलं ) हापितं भवेत् । त्वया संपादिता च कीर्तिर्विनश्येत् । लोकाश्च त्वां भर्त्सयेयुः । दोषाश्च केवलमाश्रयमन्विष्यन्तस्त्वां प्राप्नुयुः। यथा भर्ता न चेत्तादृश्याः स्त्रियाः दर्शनमप्यमङ्गलं मन्यते लोके तथैव धर्मो न चेत्तादृशस्य जीवितस्यावस्थानं भवति। यथा च युद्धे जीवितविरहितं प्रेतीभूतं शरीरं सर्वतो गृध्रैर्विदीर्यते तथा धर्मविरहितं जीवितं सर्वतो महादोषैराक्रम्यते ॥ ३३ ॥

अतः स्वधर्मं त्यजसि—

अकीर्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययाम् ।
संभावितस्य चाकीर्तिर्मरणादतिरिच्यते ॥ ३४ ॥

चेत्पापं प्राप्स्यसि । अपकीर्तिश्च ते तादृशी भविष्यति या कल्पान्तेऽपि न प्रणश्येत् । ज्ञात्वा च तावदेव जीवितव्यं यावन्नापकीर्तिस्त्वं स्पृशति । वद चार्जुन युद्धमकृत्वाऽस्मात्प्रदेशात्कीदृशस्ते निर्गमः स्यादिति । यद्यपि वस्तुतो निर्मत्सरः सदय एव च त्वं किलास्मात्प्रदेशान्निर्गतो भविष्यसि तथाऽपि न तादृशीं ते निर्गतिं समस्ता एते जना मन्येरन् । निर्गच्छन्तं च तथाभूतं त्वामेते योद्धारः सर्वतो व्याप्नुयुः, बाणांश्च त्वयि वर्षयेयुर्नतु कथमपि दयालुरिति तैर्मोक्ष्यसे । ( तथा च तदैव त्वं मृत्युमुखे पतिष्यसि )। अथ कदाचिदायुःशेषतयाऽस्मादपि प्राणसंकटात्कथंचिन्मुक्तो जीवसि तथाऽपि तदानीं तादृशं ते जीवितं त्वादृशस्य मरणादप्यपकृष्टमेव ॥ ३४ ॥

भयाद्रणादुपरतं मंस्यन्ते त्वां महारथाः ।
येषां च त्वं बहुमतो भूत्वा यास्यसि लाघवम् ॥ ३५ ॥

अन्यच्चार्जुन कथं त्वं न विचारयसीदं यदाऽऽवेशेन महता योद्धुं समागतस्त्वं यद्यपि दयालुतया प्रतिनिर्गच्छसि तथाऽपि तवैतेषां दुर्जनानां वैरिणां कीदृशी मतिः स्यादिति । नूनमेत इत्थं वदिष्यन्त्यस्माद्दृष्ट्वा भीतः सन्निर्गत इति ॥ ३५ ॥

**अवाच्यवादांश्च बहून् वदिष्यन्ति तवाहिताः ।**
**निन्दन्तस्तव सामर्थ्यं ततो दुःखतरं नु किम् ॥ ३६ ॥**

एषा च तेषामुक्तिरखण्डितैवावशिष्येत । अर्जुन महता प्रयत्नेन प्राणत्यागेनापि वा लोकाः स्वकीर्तिं वर्धयन्ति । तव त्वनायासेनैव सा लब्धा ( तां च सांप्रतमपसारयसीति चित्रम् । न च तवेयं कीर्तिरितरसाधारणी । किंतु ) विस्तार आकाशवदद्वितीया । एतादृशी चापरिच्छिन्ना निरुपमा ते कीर्तिः । गुणाश्च तेऽनुपमास्त्रैलोक्ये पूज्या इत्येवं दिगन्तेषु भूपतयः स्तुवन्ति । सूता एव किमु ते तदानीम् । भूपतिकृतामीदृशीं स्तुतिमाकर्ण्य कृतान्तादयोऽपि बिभ्यति ( का कथेतरेषाम् ) । निर्मलं गङ्गोदकमिवागाधं तव सामर्थ्यं विद्यते यच्च दृष्ट्वा सद्य एव महायोद्धारोऽपि लोकेऽस्मिन्स्तब्धा भवन्ति। तादृशं च तवाद्भुतं सामर्थ्यं श्रुत्वा निखिला एते योद्धारो जीविते निराशाः संजाताः । यथा सिंहगर्जना मदोन्मत्तानामपि गजानां प्रलयकाल एव तथा तवाऽऽवेगः (धाक ) कौरवाणामशेषाणाम् । यथा पर्वता वज्रं मन्यन्ते यथा वा सर्पा गरुडं मन्यन्ते तथैते निखिला अप्येते कौरवास्त्वां सर्वदा मन्यन्ते । यदि चेदानीं युद्धमकृत्वा प्रतिनिवृत्तो भविष्यसि तदैतेषां कौरवाणां मनसि चिरं वसदपि त्वद्गाम्भीर्यं क्षणमात्रेणैव ततोऽपसरेत्प्रत्युतैते त्वां तृणाय मन्येरन् । किंचास्मात्प्रदेशान्निर्गच्छन्तं पलायमानमपि च त्वामेते स्तम्भयेयुः प्रसह्य गृहीत्वा चोपहसेयुः शृण्वन्त एव च त्वां वाक्पारुष्यमालब्य भूयोभिः कटुशब्दैर्भर्त्सयेयुस्तदा ते हृदयं स्फुटितं भवेत्तदपेक्षयेदानीमेव शौर्यमालम्ब्य कुतो न युध्यते । एते पराजिताश्चेद्राज्यमुपभोक्तव्यं भवति ॥ ३६ ॥

**हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम् ।**
**तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः ॥ ३७ ॥**

अथवाऽत्र रणे युद्धं कुर्वन् गतजीवितोऽसि तर्हि क्लेशमन्तरेणैव स्वर्गसुखं प्राप्स्यसि । अतोऽर्जुनात्र विषये विचारस्यावसर एव नास्ति । केवलं शीघ्रमेव धनुर्गृहीत्वा युद्धायोत्तिष्ठ । पश्य स्वधर्ममाचरतो विद्यमाना दोषा विनश्यन्ति तव तु चित्ते तद्वैपरीत्येन कथं भ्रान्तिरुदभूद्यदत्र पातकं स्यादिति । किं दृढा नौः कदाऽपि निमज्जयति तथा सुमार्गेण गच्छन् स्खलति किम् । यस्तु सम्यङ् न गच्छति तस्य पादयोर्मिथः संघर्षेण स्खलनं संभवेत् ( न तु स मार्गदोषः ) ।

अमृतायमानमपि दुग्धं विषमिश्रं सेवितं चेत्तत्र मृत्युः स्यात् ( किंतु न स दुग्धदोषः )। तथा स्वधर्मस्याऽऽचरणमपि कंचिद्विशिष्टहेतुं पुरस्कृत्य कृतं चेद्दोषाय भवेत् ( नतु स स्वधर्मदोषः ) । अतोऽर्जुन कंचिदपि विशिष्टहेतुं सर्वथा मनस्यकुर्वन् क्षत्रियस्य धर्मोऽयमित्येव केवलं मनसि कृत्वा युध्यसे चेत्तत्र पापस्य संभव एव नास्ति ॥ ३७ ॥

**सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ ।**
**ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि ॥ ३८ ॥**

प्राप्ते संभाविते वा सुखे तेन न संतुष्टो भवेत् । तथा प्राप्ते संभाविते वा दुःखे तेन न विषादयुक्तो भवेत् । तथा ( कर्मकाल एतस्मात् ) लाभः स्याद्वा न वेत्येतदपि किंचिन्मनसि नैव कर्तव्यम् । तथाऽत्र युद्धे जयः स्यादथवा पराजये सर्वथा देह एव विनश्येदित्येवं कमपि भाविनमर्थमादौ न चिन्तयेत् । स्वस्य योग्यं स्वधर्ममाचरतः ( पूर्वमसंकल्पिमेव ) यत् ( शुभमशुभं वा ) प्राप्तं भवेत्तत्सर्वं निर्विकारेण मनसा सोढव्यम् । एतादृशी मनोवृत्तिश्चेत्तत्र स्वभावत एव दोषा न स्युः । अतोऽत्र भ्रान्तिं त्यक्त्वा निश्चितमनसा त्वया योद्धव्यमेव ॥ ३८ ॥

**एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु ।**
**बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यति ॥ ३९ ॥**

इयं च संक्षेपेण सांख्यस्थितिस्तवोक्ता । इदानीं तात्त्विको बुद्धियोगः कथ्यते शृणु ( बुद्धियोगश्च निष्कामकर्मयोगः ) । अर्जुन यस्य बुद्धिर्युक्ता स्यात्तस्य कर्मबन्धः कथमपि न बाधते ॥ ३९ ॥

**नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते ।**
**स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥ ४० ॥**

यथा कवचावृतदेही कवचव्यवधानाच्छस्त्रसंपातं सहते जयी च भवति देहश्च तस्याक्षतः पूर्वावस्थोऽवशिष्यते तथा निर्दुष्टं कर्ममार्गमनुसरन् कर्मी बुद्धियोगरूपकवचावृतः कर्मबन्धं सहते मोक्षाधिकारी च भवति कर्म च तस्याक्षतं पूर्वावस्थमवशिष्यत ऐहिकफलदायकम् । तथा च कर्म कर्तव्यमेव । केवलं कर्मणः फलं नैवानुसंधातव्यम् । यथा मन्त्रज्ञं भूतबाधा न बाधते तथा ये निष्कामकर्मयोगिनः सुबुद्धयः कार्त्स्न्येन कर्मतत्त्वं जानन्ति तान् कर्मबन्ध-

मूलकः शरीराद्युपाधिगणो न बाधते । यत्र च पुण्यपापयोर्न प्रवेशः, यत्र च सूक्ष्मः स्थिरश्च यो गुणत्रयसंबन्धस्तज्जन्यो न कश्चिद्विकारस्तादृशो बुद्धियोगः पूर्वसुकृतवशात्स्वल्पोऽपि यदि हृदये प्रकाशेत तर्हि तत्रार्जुन निखिलं संसारभयं विनश्यत्येव ॥ ४० ॥

**व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन ।**
**बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम् ॥ ४१ ॥**

( ननु हृदयप्रदेशमात्रे समुद्भवन्पूर्वमविद्यमानश्चायं स्वल्पो बुद्धियोगः कथमनादेर्विस्तृताच्च संसाराद्भयं निवारयितुं शक्नुयात् । उच्यते—स्वल्पोऽयं बुद्धियोग इति न मन्तव्यम् । यथा स्वल्पैव दीपकलिका स्वतेजसा महान्तं प्रदेशं व्याप्नोति तथाऽयं बुद्धियोगः ( अनेकविधं सद्विचारमुद्भावयति )। चराचरेऽस्मिञ्जगतीदृशी सद्वासना दुर्लभैव या च केवलं विचारशीलैः पुरुषैर्बहुधाऽपेक्ष्यते । परिसो हीतरपदार्थवन्न सर्वत्र सुलभस्तथैवायं बुद्धियोगः । अमृतस्य लेशोऽपि हि भाग्यवशादेव प्राप्यते तथैवायम् । दुर्लभश्चायं बुद्धियोगः पूर्वसुकृतवशात्समुद्भूतश्चेत्तस्यान्ते परमात्मप्राप्तिर्निश्चितैव । गङ्गौघो हि कियताऽपि प्रदेशेन गच्छन्नन्ते समुद्रं प्राप्नोत्येव । यतोऽस्य बुद्धियोगस्य नेश्वरमन्तरेणान्यत्र क्वचित्पर्यवसानम् । अर्जुनास्य बुद्धियोगस्य तदेकमात्रविषयकत्वात् । अयं बुद्धियोगो न चेत्सर्वविधा अपि मतयो दुर्मतय एव विकारोत्पादिकाः । ताभिरेव चाविवेकिनो निरन्तरं स्वर्गादिलुब्धा रमन्ते । तेन चार्जुन तादृशानां स्वर्गो वा संसारो वा नरको वैतदन्यतमं किंचिन्मुहुः प्राप्यते नतु सर्वथाऽऽत्मसाक्षात्कारसुखं तेषां दृश्यते ॥ ४१ ॥

**यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ।**
**वेदवादरताः पार्थ नान्यदस्तीति वादिनः ॥ ४२ ॥**

ये च सांप्रतं लोकाः कर्मफलासक्तिं दधाना वेदवाक्यानि प्रमाणीकृत्य कर्मण एव केवलं श्रेष्ठतां प्रस्थापयन्ति संसारे चास्मिञ्जन्म गृहीत्वा यज्ञादि कर्म कृत्वा सर्वोत्कृष्टं स्वर्गसुखं भोक्तव्यम् । एतदन्तरेण चान्यत्र क्वापि नास्त्येव सर्वथा सुखमित्येवमनेकप्रकारेण यथा श्रोतॄणां हृद्यं स्यात्तथा प्रतिपादयन्ति ते दुर्बुद्धय एव ॥ ४२ ॥

**कामात्मानः स्वर्गपरा जन्मकर्मफलप्रदाम् ।**
**क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति ॥ ४३ ॥**

पश्यार्जुन य एवमाविर्भूतकामाः कामाधीनाः सन्तः कर्माऽऽचरन्ति तेषां चित्तं केवलं भोगासक्तमेव । ते च यद्यपि कर्मणि कुशला अनेक विधानि यज्ञादिकर्माणि यथाविधि समाचरन्ति ॥ ४३ ॥

भोगैश्वर्यप्रसक्तानां तथाऽपहृतचेतसाम् ।
व्यवसायात्मिका बुद्धिः समाधौ न विधीयते ॥ ४४ ॥

तथाऽपि तेषामयमेकः प्रमादो दृश्यते यत्तेषां मनो दृढं स्वर्गादिफलासक्तं भवति किंतु तादृशयज्ञफलदाता यज्ञभोक्ता यज्ञपुरुषो न चिन्त्यते । यथा ( परिमलपरिपूर्णे ) कर्पूरराशावज्ञेन केनचिदग्निः प्रस्थाप्यो भवति यथा च स्वाद्वन्ने कालकूटं प्रक्षेप्यं भवति यथा वा भाग्यवशादभिमुखमुपस्थितोऽमृत-कुम्भो हेलयैव पादाघातेनापसार्यो भवति तथा यज्ञजपतपआदिकः सर्वत्राता समुपस्थितोऽयं धर्मः फलाभिनिवेशमात्रेण स्वरूपात्प्रच्याव्यते । महता कष्टेन पुण्यं संपादितं चेत्पुनः किमर्थं संसारोऽपेक्ष्यते जनैरज्ञैः । अप्राप्तं किंचित्तत्र दृष्टं स्यादिति चेत्तादृशं किंचिदपि तैर्नैव ज्ञायते । अथवा पुण्यसंपादनेऽप्यकृ-तार्थतां मन्यमानैः संसारोऽपेक्ष्यते चेत्तादृशमपि तैः किंचिन्न ज्ञायते । यथा निपुणया पाचिकया संपादितं मिष्टमन्नं द्रव्यलोभेन विक्रीयते तथा कुशलैरप्य-विवेकिभिः कर्मनिष्ठैर्यज्ञदानतपआदि कृत्वा संपादितं पुण्यं फलभोगलिप्सया विक्रीयते । ततोऽर्जुन पश्य त्वमियं वेदवादरतानां चेतसि सर्वथा दुर्बुद्धिरु-देतीति ॥ ४४ ॥

त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन ।
निर्द्वंद्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान् ॥४५॥

वेदाश्चैते गुणत्रयेणाऽऽवृताः खलु । तत्राऽऽत्मपर उपनिषद्भागः सात्त्विकः । तदितरश्च भागो यत्र स्वर्गादिफलदं यागादि कर्म निरूपितं ( प्रतिपादितं ) स राजसस्तामसश्च । अतस्त्वमेवं जानीहि वेदाः सुखदुःखहेतव इति । अतश्च तत्रान्तःकरणं मा व्यापारय कथंचिदपि । गुणत्रयस्यावकाशश्चेतसि केनापि रूपेण न देयः । तथाऽहं ममेति भावनाया अप्यवकाशो न देयः । किंतु केवलमेकमात्मसुखं चेतसि सदा भावनीयं न क्षणमपि विस्मर्तव्यम् ॥ ४५ ॥

यावानर्थ उदपाने सर्वतः संप्लुतोदके ।
तावान्सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥ ४६ ॥

यद्यपि वेदे बहूक्तं भिन्नभिन्नानि भूयांसि कर्माणि सूचितानि तथाऽपि तत्र यत्स्वस्य हितं तदेव ग्राह्यम् । यथा सूर्योदये बहवो मार्गाः प्रकाशिता दृश्यन्ते तावता किं तैः सर्वैर्मार्गैः पान्था गच्छन्ति । अथवा सकलमिदं महीतलं जलमयं यद्यपि दृष्टं तथाऽपि तृषार्तः स्वस्य यावदिष्टं तावदेव गृह्णाति । तथा ज्ञानिनो वेदार्थं विवेचयन्ति किंतु तत्र यदपेक्षितं शाधनं च प्रतीयते तदेव स्वीं कुर्वन्ति ॥ ४६ ॥

**कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।**
**मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि ॥ ४७ ॥**

ततोऽर्जुन शृणु त्वं मया यदिदानीमुक्तं तदनुसारेण विचार्यमाणे त्वयेदानीं स्वकर्म कर्तव्यमेतदेवोचितम् । सर्वप्रकारेण विचारः कृतोऽस्माभिस्तत्रैतदेव मनसि निश्चितं यत्त्वयेदानीं विहितं कर्म नैव त्यक्तव्यमिति । तत्र च कर्मफलस्याऽऽशा तु नैव कार्या । अन्यच्च कुत्सितं कर्म ( निषिद्धं काम्यं चेति द्विविधं ) कदाऽपि मनसाऽपि न चिन्तनीयम् । सत्कर्मैव च केवलमाचरणीयं तदपि कमपि हेतुमपुरस्कृत्यैवाऽऽचरणीयं भवति ॥ ४७ ॥

**योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनंजय ।**
**सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ॥४८॥**

तस्मादर्जुन त्वं फलसंबन्धं त्यक्त्वा निष्कामकर्मयोगयुक्तः सन्स्वस्थचित्तो भूत्वा कर्म कुरु । यदि च प्रारब्धं कर्म भाग्यवशात्पूर्णमभूत्तदाऽपि तत्र विशेषतः संतुष्टेन न भाव्यम् । यदि वा दुर्दैववशात्प्रारब्धे कर्मणि केनचिन्निमित्तेन विघ्न उद्भूत्तर्हि तत्रासंतोषात्क्षुब्धमनसा न भाव्यम् । प्रारब्धं कर्म निर्विघ्नं परिसमाप्तं चेत्तत्सम्यगुपयुक्तमिति मन्यत एव । तथैव विघ्नितमपरिसमाप्तमपि पूर्णमित्येव मन्येत । यतो यावच्च यादृशं च कर्म निष्पन्नं भवेत्तावदेव तादृशमेव चेश्वरे समर्पितं चेत्स्वभावत एव तत्परिपूर्णं भवति । येयं सत्कर्मण्यसत्कर्मणि च तुल्यैव मनोवृत्तिः सैवोत्तमा योगस्थितिरिति प्रशंसन्ति (कृतबुद्धयः) ॥ ४८ ॥

**दूरेण ह्यवरं कर्म बुद्धियोगाद्धनंजय ।**
**बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः ॥ ४९ ॥**
**बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते ।**
**तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम् ॥ ५० ॥**

अर्जुन यदेतदुक्तविधया चित्तस्य समत्वं तदेव योगस्य तत्त्वमवेहि । यतस्त-स्यामवस्थायां मनोबुद्ध्योरैक्यं भवति । ईदृशश्च महामहिमशाली बुद्धियोगोऽ-यम्। तदपेक्षया भूयसांऽशेनापकृष्ट एवायं लौकिकः कर्मयोगो (यत्राऽऽत्मनि कर्तृ-त्वानुसंधानं कामना चेति दोषद्वयं दृश्यते)। यद्यप्येवमपकृष्टोऽयं कर्मयोग-स्तथाऽपि सोऽनुष्ठेय एव। केवलं तत्रत्यं दोषमात्रं निर्हरणीयम्। यतो दोषे निर्हृतेऽ-वशिष्टो यः कर्मभागः सैव बुद्धियोगस्य भूमिका। अतश्चास्मिञ्श्रेष्ठे बुद्धियोगे स्थिरमना भव। स बुद्धियोगः साध्यस्तदर्थमादावेव फलकामनादिदोषा मनसा कथमपि नानुसंधेयाः। एवमादित आरभ्यैव ये बुद्धियोगसाधनायोद्युक्तास्ते संसारपारं गच्छन्त्येव। यतस्ते पापेन पुण्येन च वियुक्ता भवन्ति। (संसारश्च पापपुण्यफलात्मक एव) ॥ ४९ ॥ ५० ॥

**कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ।**
**जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ॥ ५१ ॥**

ये चैवं फलमनभिसंधाय कर्म कुर्वते तेषां संसारे गतागतं नास्ति। ते च बुद्धियोगयुक्ता जनाः पर्यन्ते परमेश्वरपदं प्राप्नुवन्ति। निरामयं ब्रह्मानन्दं प्राप्नु-वन्तीति यावत् ॥ ५१ ॥

**यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति ।**
**तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च ॥ ५२ ॥**

अर्जुन सांप्रतं ते समुत्पन्नं कर्मणः सकाशान्निवर्तकममुं मोहं यदा त्यजसि फलकामनानिरासकं वैराग्यं च मनसि धारयसि तदा त्वमीदृशो निरामयब्रह्मा-नन्दभाग्भवसि। यस्यां चावस्थितौ निर्दुष्टं दुर्लभं चाऽऽत्मज्ञानमेवं समुद्भवति तदा चानायासेनैव मनसः सकाशाद्बीजरूपेण स्थिता अपि कामवासनाः सर्वतोऽपसृता भवन्ति। यत्र चान्यत्किंचिज्ज्ञेयं पूर्वज्ञातं वा पुनर्ध्यातव्यमित्या-दिका सर्वविधा मनोवृत्तिर्विलयं गता भवति ॥ ५२ ॥

**श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला ।**
**समाधावचला बुद्धिस्तदा योगमवाप्स्यसि ॥ ५३ ॥**

या च मतिः पूर्वमिन्द्रियाधीना पल्लवितेव विषयेषु प्रसृताऽभूत्सा तदा विष-येभ्य इन्द्रियेभ्यश्च परावृत्याऽऽत्मस्वरूप एव केवलं स्थिरा भविष्यति। तदेव च केवलं समाधिसुखं यदीदृशी स्थिरा मतिः। तदैव च त्वं कार्त्स्न्येन बुद्धियोगं प्राप्स्यसि ॥ ५३ ॥

अर्जुन उवाच–

**स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव ।**
**स्थितधीः किं प्रभाषेत किमासीत व्रजेत किम् ॥ ५४ ॥**

अथार्जुन एवं वदति भगवन्निदानीं मनोगतं सकलं पृच्छ्यते कृपया कथ्यताम् ( अयं मूर्ख इत्यवहेलनां मा कुरु ) । अथ भगवान्सानन्दः सन्नर्जुनं वदति यत्तवार्जुन योग्यं प्रतीयते तन्निर्भीकमनाः सन्विचारयेति । ( अवहेलनाभीतिं मा कार्षीरित्यभिप्रायः । भगवतः सानन्दत्वं च यतोऽयमर्जुनो विचारयितुं प्रवृत्तस्ततो मदुक्तो निष्कामकर्मयोगोऽस्यापेक्षितः । नहि प्रयागमजिगमिषुः प्रयागमार्गं पृच्छतीत्यभिप्रायेण बोध्यम् ) । एवमुक्तोऽर्जुनो वदति भगवन् कीदृशं स्थितप्रज्ञं वदन्ति कथं च सोऽभिज्ञेयः । तथा स्थिरबुद्धिरिति यं वदन्ति स कीदृशैश्चिह्नैरवगन्तव्यः । योऽखण्डितं समाधिसुखं भुनक्ति तस्य कीदृशमवस्थानं कथं च स स्वरूपे निमज्जत्येतत्सर्वं भगवन् कथनीयम् । ततः परब्रह्मावतारः ( ऐश्वर्यौदार्ययशःश्रीवैराग्यज्ञानरूप )षड्गुणैश्वर्यसंपन्नो भगवान्नारायणो वदति स्म ॥ ५४ ॥

श्रीभगवानुवाच–

**प्रजहाति यदा कामान्सर्वान्पार्थ मनोगतान् ।**
**आत्मन्येवाऽऽत्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ॥ ५५ ॥**

अर्जुन शृणु यश्चायं विषयेषु बलवान्मनोभिलाषः स एव हि स्वात्मसुखेऽन्तरायं करोति । यश्चोक्ताभिलाषरहितः सर्वथा नित्यतृप्तान्तःकरणः, तथा यस्य कामस्य संबन्धेन विषयेषु प्रधाव्य पतन्ति जनाः स कामो यस्य सर्वथा गलितः, यस्य चाऽऽत्मसुखे मनः संलग्नं स पुरुषः स्थितप्रज्ञ इत्यवगन्तव्यः ॥ ५५ ॥

**दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ।**
**वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ॥ ५६ ॥**

नानाविधेषु दुःखेषु संप्राप्तेष्वपि यस्य चित्ते नोद्वेगः । तथा सुखलाभेन सुखलिप्सया वा न यस्य मनो व्याकुलं ( समाक्रान्तं ) तं कामः क्रोधश्च स्वभावत एव न स्पृशति । भयं च तस्यापरिचितमेवाऽऽस्ते । परिपूर्ण एव हि सः । ईदृशश्च यः केवलात्मस्वरूप उपाधित्यागेन भेदभावनाराहितः स स्थिरबुद्धिरित्यवगन्तव्यः ॥ ५६ ॥

**यः सर्वत्रानभिस्नेहस्तत्तत्प्राप्य शुभाशुभम् ।**
**नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ॥ ५७ ॥**

यथा पूर्णचन्द्रो वस्तूनां प्रकाशनसमय इदमधमं वस्त्विदमुत्तममित्येवं वस्तुगतं वैषम्यं न पश्यति किंतु सर्वत्र समदृष्टिः सन्नेव साम्येन प्रकाशयति, तथा यस्य मनसो देशकालाद्यनपेक्षं वृत्तिसाम्यं तादृशमेव च दयालुत्वं तद्वैपरीत्यस्य च न कदाऽपि संभवः । तथा च यस्य मनोवृत्तिरीप्सितवस्तुप्राप्तावपि न संतोषायत्ताऽनीप्सितवस्तुप्राप्तौ च न विषादायत्ता तादृशो हर्षशोकरहित आत्मबोधपरिपूर्णो यः पुरुषः स विज्ञेयोऽर्जुन प्रज्ञायुक्तः ( स एव च स्थिरबुद्धिरिति गीयते ) ॥ ५७ ॥

**यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः ।**
**इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ ५८ ॥**

यथा कूर्म आनन्दितः स्वयमेव स्वावयवान् प्रसारयतीच्छामात्रेण च पुनः स्वयमेव संकोचयति तथा यस्योक्तिमात्रेण तदधीनानीन्द्रियाणि तदुक्तं साधयन्ति तस्य प्रज्ञा स्थितेत्यवगन्तव्यम् ॥ ५८ ॥

**विषया विनिवर्तन्ते निराहारस्य देहिनः ।**
**रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते ॥ ५९ ॥**

अर्जुनेदानीमन्यत्कौतुकास्पदं किमपि कथयामि श्रूयताम् । (कर्मिणो योगिनो वा ) साधका व्रतोपवासादौ शब्दादीन्विषयान्दूरीकृत्य ततः श्रोत्रादीनीन्द्रियाणि परावर्तयन्ति नतु रसनेन्द्रियविषये तादृशो नियमः कश्चित्तैः कृतो दृश्यते येन रसनेन्द्रियस्य विषयेभ्यः सर्वथा परावर्तनं ( प्रायोपवेशनरूपं ) स्यात् । ( एतदालक्ष्येव किंनु ) ते रसनेन्द्रियग्राह्या विषया अनेकैः प्रकारैः सहस्रशस्तमाक्रम्याऽऽत्मसात्कुर्वन्ति । यथा वृक्षाग्रे प्ररूढेषु पल्लवेषु च्छिन्नेष्वपि मूले यद्युदकं सिच्यते तर्हि कथं स वृक्षो विनष्टो भवेत् । प्रत्युत तादृगुदकबलेनाधिक एव तिर्यग्विस्तीर्णो भवति। तथा रसनया भक्ष्ये गृहीते स्वस्थायां मनोवृत्तावितरेन्द्रियग्राह्याः शब्दादयो विषया अपि मनसि पुष्टा भवेयुः । यथेतरेन्द्रियग्राह्याः शब्दस्पर्शादयो विषया व्रतादिनियमैरिन्द्रियेभ्योऽपसारयितुं शक्या भवन्ति न तथा रसनेन्द्रियग्राह्यविषया नियमेनापसारयितुं शक्यन्ते। यतस्तदन्तरेण जीवनमेव न संभवति । परब्रह्मानुभवेन तु निःशेषाः सर्व एव विषयाः स्वभा–

यत एव स्वयमेव चेन्द्रियेभ्यो दूरमपसृता भवन्ति । तदा ह्यात्मैक्यप्रतीतिप्रत्यक्षे ( मनोवृत्तिर्लीना भवति ) शरीरात्मभावो विनश्यति मनोनुसारीणीन्द्रियाणि विषयान्सर्वथा विस्मरन्त्येव ॥ ५९ ॥

यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः ।
इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ॥६०॥

ईदृशी चावस्थितिरन्यथा प्राप्तुमशक्यैव । अहर्निशं यत्नं कुर्वतामपि बहुभिरपि च साधनैरियमवस्था न प्राप्यते । ( इन्द्रियाणि च मनसः प्रेष्यभूतानि मनोधीनान्यपि च मनोविषययोरान्तरबाह्ययोर्मध्येऽवस्थितानि बाह्यैर्विषयैः संबन्धं प्राप्य तद्वशेन प्राप्तबलानीव स्वप्रेरकमपि मनः स्वात्मसात्कुर्वन्ति । ततश्चञ्चलं मनो विषयाननुसृत्येतस्ततो धावति ) । तत्रेन्द्रियसंरक्षणार्थं योगिनोऽभ्यासरूपे गृहेऽभ्यासरूपारक्षकपुरुषसंनिधौ वा यमनियमरूपजवनिकाया अन्तरिन्द्रियाणि प्रस्थाप्य मनश्च स्वमुष्टिगतमिवावस्थाप्य वर्तन्ते । एवंभूता अपि योगिनः स्वल्पमपि क्वचिदपि च सदैव च च्छिद्रं निरीक्षमाणैरिन्द्रियैः श्रान्ता विवशाः क्रियन्ते यथा पिशाचैर्मन्त्रज्ञा वञ्च्यन्ते तद्वत् । एवंभूतं दुर्निवारमिन्द्रियाणां सामर्थ्यम् । विषया अपि तथैव सामर्थ्यशालिनो ये ऋद्धिसिद्धिमिषेण योगिनं प्राप्येन्द्रियैः संयुज्य मनोऽप्याक्रामन्ति । तथाभूतं च मनो योगिमुष्टेः सकाशाद्बहिर्निर्गतं सदभ्यासं शिथिलयति (ततश्चार्थादेवाभ्यासरूपं गृहं विशीर्यतेऽभ्यासरूपा आरक्षिकपुरुषा वा निद्रिता भवन्ति । यमनियमरूपा जवनिका चापसृता भवति । एवं प्रतिबन्धान्मुक्तानीन्द्रियाणि हेलयैव योगिनमात्मसात्कुर्वन्ति ) । एवंभूतं विलक्षणं सामर्थ्यमिन्द्रियाणामवेहि ॥ ६० ॥

तानि सर्वाणि संयम्य युक्त आसीत मत्परः ।
वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता ॥ ६१ ॥

( एतादृशं च यद्विलक्षणं सामर्थ्यमिन्द्रियाणां तत्सर्वथा विषयासक्तिमवलम्बते )। अतोऽर्जुन सर्वेषु विषयेष्वासक्तिं परित्यज्येन्द्रियाण्यकिंचनकारीणि यस्तनुते स एव निष्कामकर्मयोगयोग्यः पुरुषो यस्यान्तःकरणं न कदापि विषयसुखेन प्रलोभ्यते । यश्च सततमात्मबोधयुक्तो न क्षणमपि मां विस्मरति । ( ईदृशी च मयि मनस आसक्तिरावश्यक्येव ) । अन्यथा यद्यपि

बाह्या विषयाः संनिहिता न स्युस्तथाऽपि सूक्ष्मरूपेण मनसा तच्चिन्तनं चेदयं संसारो निःशेष आद्यन्तसहितस्तदवस्थ एव भवति । यथा विषस्य लेशोऽपि गृहीतश्चेत्स कृत्स्नं शरीरं व्याप्नुवन्निःसंशयं जीवितमपहरत्येव तथा शङ्कितः कल्पनामात्ररूपोऽपि विषयो मनासि वसति चेत्स निखिलं विवेकजातं समूलघातं हन्ति ॥ ६१ ॥

**ध्यायतो विषयान्पुंसः सङ्गस्तेषूपजायते ।**
**सङ्गात्संजायते कामः कामात्क्रोधोऽभिजायते ॥ ६२ ॥**
**क्रोधाद्भवति संमोहः संमोहात्स्मृतिविभ्रमः ।**
**स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात्प्रणश्यति ॥ ६३ ॥**

निःसङ्गस्यापि योगिनो मनासि विषयस्मरणमात्रं चेत्तावताऽपि तत्राऽऽन्तरो विषयसङ्गः समुद्भवति । समुद्भूते च सङ्गे सद्य एव तत्र मूर्तिमान्काम आविर्भवति । आविर्भूते च कामे तत्र क्रोध आवश्यक एव । ( कामस्य क्रोधाव्यभिचारित्वात् । कामसंभावनामात्रेणापि ततः प्रागेव किंन्वयमाविर्भवति । क्रोधस्य च विचारविरोधित्वात् )। तत्राविचारात्मकः संमोहः स्थितपद एव । (विचारस्य स्मृतिबीजोद्बोधकत्वादर्थादेव) । अविचारे स्मृतिर्विनष्टा भवति । प्रचण्डवाताहता दीपशिखेव । यथा निशासमयेन सूर्यतेजोऽभिभाव्यते तथा स्मृतिभ्रंशेन प्राणिनां बुद्धितत्त्वमभिभाव्यते । अस्यां चाज्ञानान्धतावस्थायां विचारविषयीभूतेषु तत्त्वेषु मलीनेष्विवास्फुरत्सु हृदये स्वरूपमात्रेण विद्यमानाऽपि बुद्धिः किंकर्तव्यतामूढा व्याकुली भवति । यथा जात्यन्धः ( मनःसंभ्रमेण ) त्वरमाणो दीनः सन्यत्र कुत्रापि धावति तथा स्मृतिभ्रंशे बुद्धिर्यत्र कुत्रापि भ्रमति ( न तु वस्तुतत्त्वमनुसरति ) । एवं स्मृतिभ्रंशेन सर्वथा व्याकुलीभूतायां बुद्धौ ज्ञानजातं समूलमुन्मूलितं भवति । यथा जीवितापगमे शरीरस्य सर्वांशेनावद्यतरा प्रेतावस्था प्राप्यते तथा पूर्वोक्तरीत्या बुद्ध्यपगमे पुरुषस्य जीवतोऽपि सर्वांशेनावद्यतराऽवस्था प्राप्यते । अतोऽर्जुन यथाऽणुरपि विस्फुलिङ्ग एधःसंयोगेन प्रौढश्चेत्त्रिभुवनमपि दग्धुं समर्थो भवति तथेदं विषयचिन्तनं कदाचित्क्षणमपि मनस्यवस्थितं चेत्तदुक्तप्रणाड्योत्तरोत्तरावस्थामन्वेषयदन्ते ज्ञानजातं समूलमुन्मूलयितुं प्रभवति । पुरुषं पातयतीति यावत् ॥ ६२ ॥ ६३ ॥

**रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन् ।**
**आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ॥ ६४ ॥**

अतो निखिला इमे विषया मनस्तः सर्वथाऽपसारणीयाः ( सूक्ष्मरूपेणापि तेषामवकाशो मनसि न देयः )। विषयचिन्तनाभावे चानायासेनैव रागद्वेषयोरनुत्पत्तिर्भवति । अन्यच्चात्रार्जुन किंचित्कथ्यते शृणु । रागद्वेषयोरभाव इन्द्रियाणां विषयानुसरणेऽपि न किंचिद्बाधकम् । यथाऽऽकाशगतः सूर्यः स्वरश्मिभिर्महीमण्डलं स्पृशन्नपि न तत्रत्यवस्तुगतदोषैर्लिप्यते तद्वत् । आत्मज्ञानी ह्यात्मरसासक्तमना इन्द्रियग्राह्यान्पदार्थांस्तद्गतधर्मांश्च गुणत्वेन दोषत्वेन चागृह्णन्नत एव कामक्रोधरहितस्तानौदासीन्येन निरीक्षते । तथा च विषयानपि यो मूलकारणस्वरूपेणाऽऽत्मरूपेण पश्यति न कार्यरूपेण तादृशस्य योगिनस्ते विषयाः कथं बाधका भवेयुः । यदि च कथंचिदुदक एवोदकं मग्नं भवेदथवाऽग्निरेव वाऽग्निं दहेत्तर्हि स स्वात्मत्वेन सर्वं पश्यन्नात्मज्ञानी विषयसङ्गेन पीडितो भवेत् । ( सर्वथा विषयासक्तिस्तत्र न किंचिदपि करोति । आसक्तिरेव सा न भवति )। एवं निखिलमिदं जगत्त्रयं केवलात्मस्वरूपेण पश्यतः प्रज्ञा स्थिरेत्यवगन्तव्यम् ॥ ६४ ॥

**प्रसादे सर्वदुःखानां हानिरस्योपजायते ।**
**प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते ॥ ६५ ॥**

पश्यैवं यस्य स्थिरप्रज्ञस्य मनसः प्रसन्नता सततमखण्डिता तत्र कस्यापि संसारदुःखस्य प्रवेशो न संभवति । यथा यस्य जठरेऽमृतनिर्झरः समुद्भूतस्तस्य क्षुधातृषाजन्या भीतिर्न कथमपि संभवति । तथा यस्य हृदयं प्रसन्नं तस्य दुःखं कथं स्यात् । प्रसन्नहृदयस्य च योगिनोऽनायासेनैव बुद्धिः परमात्मस्वरूपे रमते । यथा निर्वातप्रदेशावस्थितः प्रदीप ईषदपि न प्रकम्पते तथा योगयुक्तस्य बुद्धिः परमात्मस्वरूपेऽवस्थिता न कदाऽपि ततः प्रच्यवते । तत्रैव स्थिरा भवति ॥ ६५ ॥

**नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना ।**
**न चाभावयतः शान्तिरशान्तस्य कुतः सुखम् ॥ ६६ ॥**

यस्यान्तःकरणे निष्कामकर्मयोगस्य विचार एव नास्ति स शब्दादिभिर्विषयैः पाशबद्ध इव गुणैराकृष्टो भवति । तस्य च न कदाऽपि स्थिरा बुद्धिर्भ-

वति । ( स्थिरा बुद्धिर्न भवतीति किं वक्तव्यम् ) बुद्धिस्थैर्यस्याऽऽस्था ( कल्पनाऽपि ) विषयाकृष्टस्य मनसि नोदेति । यदि चैवं बुद्धिस्थैर्यस्य कल्पनाऽपि नास्ति तर्हि तन्मनसि शान्तिः कथं पदमादधीत । यत्र च शान्तिर्बीजभूताऽपि नास्ति तत्र भ्रान्तिमूलकोऽपि सुखस्य न प्रवेशः । यथा पापिष्ठे प्राणिनि मोक्षो नैव संभवति तद्वत् । पश्यार्जुन यद्यग्नौ भर्जितानि बीजान्यङ्कुरोत्पादनसमर्थानि स्युस्तर्ह्यशान्तस्य ( संतप्तं मनः ) सुखोत्पादनसमर्थं स्यात् । अतश्च विषयासक्तिमूलको यो मनसो निष्कामकर्मयोगाभावस्तदेव दुःखस्य जीवितम् । ( दुःखस्य मूलकारणं तदेव । तत्र दुःखमपरिहार्यमिति यावत् । तथा च निष्कामकर्मयोगप्राप्तये ) इन्द्रियनिग्रहस्याऽऽवश्यकत्वं सिद्धं भवति ॥ ६६ ॥

**इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते ।**
**तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि ॥ ६७ ॥**

( इन्द्रियनिग्रहाभावे विषयाधीनेष्विन्द्रियेषु सत्सु ) तदानुकूल्येनैव च ये संचरन्ति तैर्विषयसागरं प्रविष्टैरपि पुरुषैर्न कथमपि विषयसागर उत्तीर्णो भवति । यथा नाविकेनापायस्थलानि ह्रदजलभ्रमपाषाणप्रदेशादीनि दूरतः परिहाय संचालिता नौस्तरिसंनिधिं यावदनुप्राप्यते तावदेव यदि वात्याऽऽकृष्टा भवेत्तर्हि वात्यावशां तथाविधां नावमपायप्रदेशात्परिहापयितुं स नाविकः समर्थो न भवति। तद्वद्विषयासक्तस्येन्द्रियाण्याकृष्टानि भवेयुरेव । यदि कदाचित्पुरुषः कौतुकेन लालनयेवेन्द्रियाणि विषयेषु प्रवर्तयेत्तर्हि नियतं स सांसारिकदुःखैराक्रान्त इति विद्धि । (यद्यपि सागरप्रवेशं विना सागरोत्तरणं न संभवति । उत्तरणस्य प्रवेशानुविधायित्वात्तथाऽपि न तदर्थं हठाद्विषयोन्मुखेन भवितव्यम् । किंत्वेतावत्कालपर्यन्तं यावान्विषयोपभोगो जातस्तावानेव तत्र पर्याप्तो भवति ) ॥ ६७ ॥

**तस्माद्यस्य महाबाहो निगृहीतानि सर्वशः ।**
**वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता ॥ ६८ ॥**

तस्माद्विषयेष्वनासक्तानीन्द्रियाणि स्वयमेव यस्य पुरुषस्याधीनानि ( पूर्वसुकृतवशात्) भवेयुस्तर्हि तस्य सार्थकतायै किमधिकमपेक्षितं भवेत् ) । ( तावतैव च तस्य जन्म सार्थकं भवति ) । पश्य यथा कूर्म आनन्दितः स्वयमेव स्वावयवान्प्रसारयतीच्छामात्रेण च पुनः स्वयमेव संकोचयति तथा यस्योक्तिमात्रेण तदधीनानीन्द्रियाणि तदुक्तं साधयन्ति तस्य प्रज्ञा स्थितेत्यवगन्तव्यम् । अर्जुन पूर्णावस्थां गतस्य बुद्धियुक्तस्यान्यत्किंचिद्गुप्ततरं चिह्नमिदानीं त्वां कथयामि शृणु ॥ ६८ ॥

**या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।**
**यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥ ६९ ॥**

यत्र प्राणिमात्रं निद्रितं तत्र (स्वात्मरूपे) यः सदा जागृतः । यत्र ( संसारे ) च प्राणिनो जागृतास्तत्र यो निद्रितः स एव निरुपाधिः स्थिरबुद्धिरवगन्तव्यः । स एव च सदैव मुक्तो मुनीश्वरः ॥ ६९ ॥

**आपूर्यमाणमचलप्रतिष्ठं समुद्रमापः प्रविशन्ति यद्वत् ।**
**तद्वत्कामा यं प्रविशन्ति सर्वे स शान्तिमाप्नोति न कामकामी ॥७०॥**

अर्जुनायं स्थितप्रज्ञ इत्येवं येनावधारितः स्यात्तादृशमन्यदपि किंचिच्चिह्नमिदानीं कथ्यते । समुद्रे चाखण्डितैवाक्षोभ्यता यथा दृश्यते नदीनां च सकलाः परिपूर्णाश्च प्रवाहा यत्र संगता भवन्ति तथाऽपि न तत्र समुद्रे किंचिदप्याधिक्यं दृश्यते मर्यादा च न तेनोल्लङ्घ्यते। ग्रीष्मे च नदीनां प्रवाहाः शुष्काः संगता भवन्ति तथाऽपि न तत्र समुद्रे काचिन्न्यूनता दृश्यते ( एकरूपैव सदाऽवस्थितिः ) । तथा यस्य बुद्धिर्ऋद्धिसिद्धिप्राप्तावपि नाऽऽनन्दभरेण क्षुब्धा भवति तदप्राप्तौ च विषण्णा संभ्रमेणाऽऽक्रान्ता न भवति स स्थितप्रज्ञ इत्यवगन्तव्यः । यथा सूर्यगृहे प्रकाशः किं दीपसापेक्षः, तथाऽपसारिते दीपे किं तत्सूर्यगृहमन्धकारावृतं भवेत्तथा स्थितप्रज्ञस्य गृहे ऋद्धिः सिद्धिश्च समागता निर्गताऽनिर्गता वा नेषदपि वैषम्यं प्रदर्शयितुं प्रभवति । यतः स तदा स्वात्मानन्दे निमग्न एवाऽऽस्ते । ( लोके च बाह्यदृष्टिः पुरुषः कश्चिद्वनवास्यारण्यकवस्तुपरिपूर्णायां भिल्लपल्ल्यां रमते)। यश्चाऽऽत्मानन्दभूतो योगी स्ववैभवेनेन्द्रभुवनमपि न गणयति स कथं भिल्लपल्ल्यां रमेत । यथा च यस्यामृतेऽपि सदोषा दृष्टिः स यवागूं कथं सेवेत । तथा यस्याऽऽत्मसुखानुभवः स कथमृद्धिं सिद्धिं वा लिप्सेत । अर्जुन पश्याद्भुतमेतत् । ( यासु ऋद्धिसिद्धिसु सर्वेषां लोकानामसाधारणः सविशेष आदरस्ता ऋद्धिसिद्धयस्तत्र बुद्धियुक्तस्य योगिनो गृहे तृणतुल्याँ भवन्ति। यत्र स्वर्गसुखमपि न गण्यते तत्र का वार्ता ऋद्धिसिद्धीनाम् )॥ ७० ॥

**विहाय कामान्यः सर्वान्पुमांश्चरति निःस्पृहः ।**
**निर्ममो निरहंकारः स शान्तिमधिगच्छति ॥ ७१ ॥**

य एवमात्मज्ञानेन संतुष्ट आत्मानन्दपरिपूर्णः स त्वया स्थितप्रज्ञ इत्यवगन्तव्यः । ( न तत्र स्वर्गादयः कामा नापि तादृशकामस्पृहाऽवकाशं लभते ।

सति ह्यहंकारे तत्संभवति नान्यथा )। स्थितप्रज्ञस्त्वहंकारं परित्यज्य तत एव च सकलान्कामान्सुदूरमपसार्य स्वयं सर्वात्मभूतः सन्नस्मिञ्जगति संचरति ॥ ७१॥

**एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति ।**
**स्थित्वाऽस्यामन्तकालेऽपि ब्रह्मनिर्वाणमृच्छति ॥ ७२ ॥**

( या चेयं सर्वात्मभावरूपेणावस्थितिः ) इमां शाश्वतिकीं ब्राह्मीं स्थितिं ये निष्कामा अनुभवन्ति ते ततोऽनायासेनैव परं ब्रह्म प्राप्नुवन्ति । ( आयासस्तु प्रथमतः कामत्यागकाल एव नतु तदुत्तरं लेशतोऽप्यायासः । यच्च प्राणिनां देहावसानकाले व्याकुलतया चित्तमवरुध्यते साऽपि व्याकुलता तेषां नास्ति यतस्ते प्रागेव विज्ञानात्मनैक्यं प्राप्ताः केवलं लोकदृष्ट्या विद्यमानं सोपाधिकं परमात्मनः सकाशात्पृथग्भावं तदानीमुपाधित्यागेन त्यजन्ति )। तथा च ब्राह्मीं स्थितिमनुभवतां देहावसानकाले विज्ञानात्मस्वरूपे प्रविशतां स्थितप्रज्ञानां तादृशावस्थितिवशाद्व्याकुलता चित्तमवरोद्धुं न समर्था भवति । ( व्याकुलता नैवोत्पद्यत इति यावत् । यथा ग्रीष्मोष्मसंतप्तानां देहिनां तादृशावस्थायां देहावरकस्य कञ्चुकोत्तरीयादेर्वस्त्रस्य देहान्निष्काशनसमये किमपि दुःखं न भवति। वस्त्रप्रक्षेपकाले हि शैत्यजन्यया व्याकुलतया भवितव्यम् । तत्तु तदानीं नास्ति। ग्रीष्मोष्मणा शैत्यस्य विनष्टत्वात् । तद्वदेवात्र बोध्यम् ) । इयं च ब्राह्मी स्थितिर्भगवता स्वमुखेनार्जुनं प्रत्युक्तेति संजयो धृतराष्ट्रमवादीत् । ततोऽर्जुनो भगवद्वाक्यं श्रुत्वेत्थं मनस्यकरोत् । सांप्रतं संजाता या ममेयं युद्धाद्विमुखता साऽनया भगवत्प्रदर्शितया विचारसरण्या पोषितेव संजाता । यत्रेदानीं योगबुद्धिप्रसङ्गेन स्थितप्रज्ञलक्षणं प्रदर्शयता भगवताऽखिलं कर्मजातं निराकृतं ततोऽर्थादेव युद्धकर्मापि निराकृतप्रायमेव भवति । एवं भगवदुक्त्या मनसि संतुष्टोऽप्यर्जुनो (अन्तराऽन्तरा युध्यस्व) अ. २ श्लो. १८, ३१, ३२, ३७, ३८ ) इत्याद्युक्त्या साशङ्कमनाः ) यत्पृच्छति स्म यच्च तत्रोत्तरं भगवान्वदति स्म स प्रश्नोत्तरसंवादोऽतीव सुन्दरः सकलधर्मतत्त्वभूतोऽपरिच्छिन्नविवेकामृतसागरस्वरूपश्च तृतीयाध्यायमारभ्य वर्ण्यत इत्येवमुवाच भावार्थदीपिकायां श्रीज्ञानदेवः ॥ ७२ ॥ श्रीकृष्णार्पणमस्तु ॥

---

युद्धारम्भे पुरोवस्थितान्भीष्मादीन्दृष्ट्वा तद्वधकारणं भावयतोऽर्जुनस्य शोकातिरेकाद्युद्धान्निवृत्तिरभूत् । ततो भगवतो मनसि ' अर्जुनस्य शोकानि-

वृत्तिर्युद्धे प्रवृत्तिश्च ' इति द्वयं कर्तव्यतयोपस्थितमभूत् । तदनुसारेण भगवानित्थं मनस्यकरोत्—नायमर्जुनो धर्मराज इव ज्ञानचक्षुर्जन्यसंस्कारवृतमनाः, नापि भीमसेन इव कौरवविषयकद्वेषातिशयजन्यसंस्कारावृतमनाः । अतो नास्यार्जुनस्य चक्षुः केनचित्सूक्ष्मेणोपनेत्रेण युतम् । नाप्येतद्दृष्ट्या भीष्मादिशरीरं केनचित्सूक्ष्मेणाऽऽवरणेनाऽऽवृतम् । तथा च पाञ्चभौतिकं भीष्मादिशरीरमनावृतमव्यवहितं च पश्यताऽनेनार्जुनेन ' कथं भीष्ममहं ' इत्यादि यदुक्तं तद्युक्तमेवं। एतादृशावस्थस्यार्जुनस्य युद्धे प्रवृत्तिः, ' देहात्मनोः पार्थक्यम्' तत्र नित्यं देहस्य विनाशित्वमेव, आत्मनश्चाविनाशित्वमेव, न तत्र युद्धेन लेशतोऽपि वैषम्यं स्यात् ' ईदृशज्ञानमन्तरेण साधयितुमशक्येति। एवं मन्वानः श्रीभगवानुवाच—अशोच्यानित्यादि । अशोच्यान्—त्वत्कृतशोकोद्देश्यत्वानर्हान् भीष्मादीनुद्दिश्य त्वया शोकः कृतः । यद्यप्येते न पश्यन्ति० कथं न ज्ञेयमस्माभिः ' ( १ । ३८–३९ ) इत्येवं प्रज्ञावादभाषणं च कुरुषे, एतन्मिथो विरुद्धम् । कथं विरोध इत्याह—गतासूनिति । प्रज्ञावादभाषणकर्ता हि पण्डित एव । पण्डिते च शोककर्तृत्वं नैव संभवतीत्यर्थः । गतासवो मृताः । अगतासवो जीवन्तः । तानुद्दिश्य केनापि प्रकारेण पण्डिता न शोचन्ति । तत्र गतासूनुद्दिश्य शोको वियोगनिमित्तो जायते । अगतासूनुद्दिश्य तु वियोगकारणीभूतविनाशसंभावनया शारीरपीडासंभावनया वा जायते। पण्डिता गतासूनुद्दिश्यापि न शोचन्ति किमुतागतासून् । त्वं तु पण्डितोऽस्यत एतान्भीष्मादीनगतासूनुद्दिश्य शोको न कार्य इति भावः ।

अत्रेदं बोध्यम् । ' अशोच्यानन्वशोचः ' इति यत्त्वदीयमाचरणं तत्प्रज्ञावादभाषणेन त्वयैव पूर्वं कृतेन विरुध्यते । ' अशोच्यानन्वशोचः ' इत्यशोच्यानुलक्ष्यीकरणपूर्वकः शोक इत्यर्थः । तत्र ( १ ) अशोच्यानुलक्ष्यीकरणं ( २ ) शोकश्चेत्यस्त्यंशद्वयम् । तत्र द्वयमप्येतत्प्रज्ञावादभाषणेन विरुद्धमन्यतरद्वा । अन्त्येऽपि किमशोच्यानुलक्ष्यीकरणं शोको वा । तत्र न तावच्छोकः प्रज्ञावादभाषणेन विरुध्यते । प्रज्ञावादकर्तुरपि सति योग्ये शोककारणे शोकसंभवात् । अत एव च ' द्वयमपि प्रज्ञावादभाषणेन विरुध्यत इति पक्षो न संभवति । किंतु केवलं शोककारणत्वेनाशोच्यानुलक्ष्यीकरणं प्रज्ञावादभाषणेन विरुध्यते । एते शोच्या एते चाशोच्या इत्येवं

यो विभागस्तदज्ञानस्य प्राज्ञेष्वसंभवात् । एतदर्थद्योतनार्थमेव ह्यत्रान्वशोच इत्यनुपसृष्टः शुचधातुः प्रयुक्तः । अत एव चोत्तरार्धेऽपि

गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः ।

इत्येवमनुपसृष्ट एव शुचधातुः प्रयुक्तः । पण्डिताः पण्डायुक्ताः । बुद्धिवैभवशालिन इति यावत् । यदि हि ते कदाचिच्छोकं कुर्युस्तर्ह्यपि तत्र शोके न कदाचिदपि कारणत्वेन गतप्राणानगतप्राणान्वाऽशोच्याननुलक्ष्यी कुर्वन्ति । आत्मनो नित्यत्वेन तत्र प्राणसत्त्वस्य तदसत्त्वस्य वाऽकिंचित्करत्वात् । तथैतस्याशोच्यत्वालोचनप्रकरणस्यान्ते

'तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि ( २ । २५ )

इत्येवमनुपसृष्टं शुचधातुं प्रयुज्यैवोपसंहृतम् । तत्र ह्यनुपसर्गद्योत्यं यद्भीष्मादिषु शोच्यत्वालोचनं तदर्हता निषिध्यते । तन्मूलक एव तत्र शोकार्हतानिषेधो न स्वातन्त्र्येण । उपक्रमानुरोधात् । अनुपसर्गप्रयोगाच्च । अन्यथा ह्यनुपसर्गप्रयोगवैयर्थ्यं स्यात् । यथा हि तदुत्तरं 'न त्वं शोचितुमर्हसि' इत्येवं केवलः शुचधातुरेव प्रयुक्तः । तद्वदत्रापि प्रयोगः कृतः स्यादिति ।

अथ कथं न शोच्या भीष्मादय इति चेत्तत्र यान्भीष्मद्रोणादीनुद्दिश्यार्जुनेन शोकः कृतस्ते मिलितं यत्—आत्मशरीर—एतदुभयं तत्स्वरूपाः, शरीरसंसृष्ट आत्मस्वरूपाः, अथवाऽऽत्मसंसृष्टशरीररूपा वा । तत्र शरीरविशेष आत्मा चेत्येतदुभयं मिलितं सद् भीष्मद्रोणादिपदवाच्यमिति प्रथमः पक्षः । तत्र भीष्मद्रोणादीनां सांप्रतं गतासुत्वाभावान्न गतासूनुद्दिश्य शोकसंभवः। अगतासूंस्तानुद्दिश्य संभवन् शोकः किं तेषां विनाशसंभावनयाऽथवा शरीरपीडासंभावनया । तत्र नाऽऽद्य इत्याह—नत्वेवाहं जात्विति । अहं त्वं सर्वे चैते सदा वर्तन्त एवेति त्वया कल्पितो भीष्मादीनां विनाशो न संभवति । ननु सदा विद्यमाना अप्येते युद्धे हताश्चेदेतेन सांप्रतिकेन देहेन नावस्थास्यन्तीत्यतोऽयं शोक इति चेदेते एतावत्कालपर्यन्तमपि सांप्रतिकेन देहेन नावस्थिता इत्याह—देहिनोऽस्मिन्निति । अथ युद्धे सति भीष्मादीनां शरीरपीडासंभव इत्यतः शोक इति चेत्तत्राऽऽह—मात्रास्पर्शा इति । इन्द्रियविषयसंयोगवियोगजन्या पीडाऽवश्यंभाविनी । सा चाकृतेऽपि युद्धे परिहर्तुं न शक्यत इत्यतः सा सोढव्यैवेति भावः । मात्रा इन्द्रियाणि । तेषां स्पर्शाः संयोगाः । कर्तृषष्ठ्या समासः। अचेतनानामिन्द्रियाणां

चेतनभिन्नस्यैव वस्तुतः प्रवृत्तावपि तेषां कर्तृत्वविवक्षयाऽत्र स्वातन्त्र्यं सूच्यते । तेन जीवात्मानपेक्षयेव नैसर्गिकीन्द्रियाणां प्रवृत्तिरित्यर्थबोधनद्वारा मात्रास्पर्शानामवर्जनीयत्वं बोध्यते । अवर्जनीयत्वाच्च ते सोढव्या एव भवन्ति । अनित्यत्वादपि ते सोढव्या एव भवन्तीत्यागमापायिन इत्यनेन बोध्यते । अतो युद्धे भीष्मादीनां शरीरपीडासंभवेऽपि सा सोढव्यपक्षीयेति तत्रौदासीन्यं त्वयाऽऽस्थेयमित्यभिप्रायः । तत्रौदासीन्येऽर्जुनस्याभिरुच्युत्पादनार्थमौदासीन्यस्य प्रयोजनं प्रदर्शयति—यं हीति २ । १५ । अमृतत्वं मोक्षः ।

निहत्य धार्तराष्ट्रान्नः का प्रीतिः स्याज्जनार्दन ।
अपि त्रैलोक्यराज्यस्य हेतोः किं नु महीकृते ॥

इत्येवं त्रैलोक्यराज्यमपि यस्तृणाय मन्यते तस्य मोक्षं विनाऽन्येन फलान्तरेणाभिरुचिर्नैव संभवति ।

अत्रेदं बोध्यम्—पूर्वश्लोके तितिक्षस्वेति तितिक्षोक्ता । तितिक्षा क्षमा । सहनमिति यावत् । तितिक्षा च दुःखसंवेदनपूर्विका तदपूर्विका च । विकारादिजन्या दुःखवेदना जायत एव । किंतु केवलं तादृशदुःखस्यावर्जनीयत्वास्थिरत्वादीन्विचिन्त्य तेन विचारेण यत्र तत्सह्यते तत्र दुःखसंवेदनपूर्विका तितिक्षा । तत्र यस्मिन्हस्तपादादौ शरीरावयवे प्रहारादिजन्यो विकारः, शरीराद्बहिर्वा स्त्रीपुत्रगृहक्षेत्रालंकारादौ प्रहारादिजन्यो विकारस्तत्र दुःखितस्य मदीयत्वबुद्धिरस्त्येव । यत्र त्ववर्जनीयत्वास्थिरत्वादिचिन्तनेन शरीरावयवेषु बाह्येषु स्त्रीपुत्रादिषु च मदीयत्वबुद्धिरेवापचिता तत्र प्रहारादिजन्ये विकारे सत्यपि दुःखसंवेदनं स्वल्पमप्यजातप्रायमेवेत्यतत्पूर्विका तितिक्षा तत्र भवति । इयमेव हि दुःखसंवेदनाभावयुक्ता तितिक्षोच्यते । मूर्च्छितो यद्यपि स्वशरीरविकारादिभिर्दुःखितो न दृश्यत इति तत्र दुःखसंवेदनाभावस्तथाऽपि न स तादृशतितिक्षोदाहरणम् । तत्र तितिक्षाया अप्यभावात् । मनोवृत्तिविशेषरूपा तितिक्षा मूर्च्छितस्य न संभवति । तथा चोक्तम्—

न जातु प्रतिबध्नाति पाषाणः स्वस्य भेदकम् ।
नैतावता तस्य लोके तितिक्षा व्यपदिश्यते ॥ इति ।

न च पराधीनः कारागृहस्थादिर्यत्र दुःखं सहते तत्र मनोवृत्तिसत्त्वात्तितिक्षा

कुतो न व्यपदिश्यत इति वाच्यम् । तत्रागत्या तत्सहनात्तितिक्षाया अभावात् । तदुक्तम्–

विद्यमानेऽपि सामर्थ्ये नैव प्रतिचिकीर्षते ।
न स्तम्भनात्यपकुर्वन्तं तितिक्षा तत्र ढौकते ॥ इति ।

अत्र यत्तितिक्षाद्वैविध्यमुक्तं तत्राऽऽद्यायां दुःखसंवेदनपूर्विकायां तितिक्षायां मात्रास्पर्शाः प्राणिनं व्यथयन्त्येव किंतु केवलं ते सह्यन्ते । द्वितीयायां दुःखसंवेदनाभावपूर्विकायां तितिक्षायां मात्रास्पर्शाः प्राणिनं न व्यथयन्ति । तदिदमुक्तम्– ‘ यदि न व्यथयन्ति ’ इति ।

ननु प्रकृतेऽर्जुनाय या ‘ तितिक्षस्व ’ इत्येवं तितिक्षोपदिष्टा साऽऽद्या । अत्र निर्दिष्टं ‘ अमृतत्वाय कल्पते ’ इत्येवं फलं तु द्वितीयायाः । तथा चेदमसंबद्धमिव प्रतीयत इति चेद्भ्रान्तोऽसि । नहीदं तितिक्षाद्वयं मिथो भिन्नम् । येन त्वयोत्प्रेक्षिताऽसंबद्धताऽत्र पदमादधीत । किंत्वेकैव तितिक्षा । तस्या एवावस्थाद्वयम् । प्रथमावस्थायास्तितिक्षायाः परिणामभूता हि द्वितीयाऽवस्था । न केवलमेकस्यास्तितिक्षाया अवस्थाद्वयमित्येव, किंतु तयोः प्रथमावस्थां विनाऽस्तितामपि न लभते द्वितीयाऽवस्था—

बाल्यावस्थामन्तरेण तारुण्यं न कदाचन ।
विना तथैव तारुण्यं वार्धक्यं न कदाचन ॥

इतिवत् । एवं च यदत्र तितिक्षायाः फलं मोक्षरूपमर्जुनस्य प्ररोचनायोक्तं –‘ सोऽमृतत्वाय कल्पते ’ इति तद्युक्तमेवेति सिद्धम् । एतेन “ सांसारिककर्मासक्तयोः कृष्णार्जुनयोः संभाषणमत्र प्रवृत्तम् । तथा च तद्विरुद्धो मोक्षसाधनीभूतात्मज्ञानविचारोऽत्र न युक्तः । यद्यपि प्रसक्तानुप्रसक्त्या कथंचित्प्रसङ्गमुपस्थाप्य निवेशितस्तथाऽपि ‘ प्रवृत्ते शस्त्रसंपाते धनुरुद्यम्य पाण्डवः ’ इत्येवं युद्धे प्रवृत्ते विषयान्तरविचारः प्रासङ्गिकोऽप्यनवसरग्रस्त एव । तादृशे हि विषमसमये यदत्यन्तावश्यकतया कर्तव्यतामापतति तदेवानुष्ठेयं भवति ” इत्यपास्तम् । अत्यन्तावश्यक इत्येवात्र भगवता तादृशविचारस्य कृतत्वात् । न च विरोधः शङ्क्यः । आत्मज्ञानस्य सांसारिककर्मबाधकत्वेऽपि तादृशात्मज्ञानमार्गोपदेशस्य सांसारिककर्माविरोधित्वात् । एतदुक्तं भवति—प्रारब्धस्य कर्मणो

यदत्यन्तावश्यकं कर्मान्तरं येन कर्मान्तरेण विना प्रारब्धं कर्म स्वरूपमेव नाऽऽपद्यते तादृशं कर्मान्तरं ' विरोध्यनुचितम्, अप्रासङ्गिकं च ' इत्येवं भासमानमपि तादात्विकपरिस्थित्यनुसारेण वस्तुतस्तन्न विरोधि नानुचितं नाप्यप्रासङ्गिकं भवति । प्रकृते च प्रारब्धं कर्म भीष्मादिभिः सह युद्धम् । तदर्जुनस्य विषादातिशयेन प्रतिबद्धम् । तत्रार्जुनस्य प्रवृत्तिस्त्रैलोक्यराज्यलोभेनापि न स्यादिति साऽऽत्मज्ञानमार्गोपदेशादन्येन प्रकारान्तरेण साधयितुमशक्येति मन्वानोऽत्रागत्याऽऽत्मज्ञानमार्गमुपदिदेश । अत्र युद्धस्य प्रारब्धकर्मण आत्मज्ञानोपदेशरूपस्य कर्मान्तरस्य च न विरोधः । अत्रैव सामानाधिकरण्यदर्शनात् । नहि दृष्टेऽनुपपन्नं नामेति न्यायात् । उपपत्तिस्त्वात्मज्ञानस्य सांसारिककर्मविरोधित्वेऽप्यात्मज्ञानमार्गोपदेशस्य तदविरोधित्वमिति प्रागुपदर्शितैव । तथा तत्कर्मान्तरं नानुचितम् । तदात्वे प्रकारान्तरस्याशक्यत्वात् । अत एव च नाप्रासङ्गिकम् । एवं च तदानीमवश्यकर्तव्यतामापतित एवायमात्मज्ञानमार्गोपदेशो भगवता कृतो न तु यथाकथंचिदुत्थाप्यात्र निवेशित इति । अर्जुनस्य सांसारिके कर्मणि प्रसक्तस्य युद्धे प्रवृत्तिं संपिपादयिषोर्भगवतो यो व्यापारस्तस्य पर्यवसानमात्मज्ञानमार्गोपदेशे जातं नत्वत्राऽऽत्मज्ञानमार्गोपदेशं मुख्यतयोद्दिश्य भगवतः प्रवृत्तिरिति सिद्धम् ।

ननु युद्धानन्तरं शान्ततयोपविष्टेषु सर्वेषु यदि भगवताऽयमुपदेशः कृत स्याच्चेत्को विशेषः स्यात् । उच्यते—स ह्युपदेशावसरः—यदाऽऽचार्यः संनिहित उपदिदिक्षुः शिष्यो मुमुक्षुरधिकारी च सन्नाचार्यं प्रार्थयते । तत्र मुमुक्षोः शिष्यस्य पूर्णाधिकारसत्त्व आचार्य उपदेशेनाऽऽत्मैक्यप्रत्यक्षं साधयति । पूर्णाधिकाराभावे सामान्यतोऽधिकारसंपन्नस्य मुमुक्षोः शिष्यस्याऽऽत्मज्ञानमार्गमुपदिशति । यदा तु शिष्यस्याधिकारसंपत्तिर्न प्रकाशिता नापि मुमुक्षुत्वं प्रकाशितं किंतु केवलं प्रकाशितैः सात्त्विकैर्मनोव्यापारैस्तस्य योग्यतामाकलय्य तथाऽऽत्मज्ञानमार्गमुपदिशति यथोपदेशकाले शिष्यस्याधिकारसंपत्तिर्मुमुक्षुता च बहिः स्पष्टमुद्भूता भवति । प्रकृते चार्जुनोऽस्यामेव कोटावन्तर्भवति । इतः पूर्वं तस्याधिकारसंपन्नताया मुमुक्षायाश्च तदुक्त्याऽनवगमात् । राज्यलोभेन युद्धे प्रवृत्त्या भोगलालसायाः स्फुटमेव प्रतीयमानत्वेन तद्विरुद्धतया तयोरुन्नयनमपि न संभवति । किंतु शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम्, पृच्छामि त्वां धर्मसंमूढचेताः, इत्यर्जुनस्य विनयपूर्विकयोक्त्या तस्य सात्त्विकीं

निरहंकारां चेतोवृत्तिमालक्ष्य 'अयमात्मज्ञानोपदेशयोग्योऽधिकारी' इति भगवतो मतिरासीत् । अस्याश्च योग्यतायाः परीक्षया निर्धारणं कर्तव्यं भवति । यद्यस्येयं योग्यता सत्या स्यात्तर्हि मोक्षरूपे फले श्रुतेऽयं तत्साधनार्थं प्रयतेत, सत्या न स्याच्चेन्मोक्षरूपे फले श्रुतेऽप्ययमुदासीन एवावतिष्ठेत ' इति परीक्षायाः स्वरूपम् । तच्च परीक्षार्थं मोक्षरूपफलश्रवणं युद्धप्रवृत्तिप्रयोजिकायां मात्रास्पर्शतितिक्षायामर्जुनस्य प्ररोचनार्था या ' सोऽमृतत्वाय कल्पते ' इति भगवदुक्तिस्तया साधितम् । न तु तदर्थं स्वतन्त्रो यत्नः कश्चिदाश्रितो भगवता ।

इदं च बोध्यम्—गीताया वेदान्तशास्त्रीयग्रन्थमध्ये प्रवेशो वेदान्तशास्त्रीयविषयप्रतिपादनात् । तच्छास्त्रीयविषयाश्च मोक्षः, आत्मज्ञानम्, आत्मस्वरूपम्, स्थितप्रज्ञस्वरूपमित्यादयः । तादृशविषयप्रतिपादनारम्भश्चात्रैव सोऽमृतत्वाय कल्पत इति तितिक्षाप्ररोचनप्रसङ्गाज्जातः । न तु प्रतिपाद्यत्वेनात्र मुख्योद्देश्यः । अतो न तावन्मात्रेणास्य ग्रन्थस्य वेदान्तशास्त्रीयत्वं सिध्यति । अथार्जुनस्य प्ररोचनार्था या ' अमृतत्वाय कल्पते ' इति भगवदुक्तिस्तयाऽर्जुनस्य प्ररोचनं जातं न वा । अत्र निषेधकोटिर्नैव पुरतः परिस्फुरति । यतो भगवदुक्तिरियं—

" काकतालीययोगेन सत्या स्यान्मूर्खकल्पना ।
प्रेक्षावतां मनोवृत्तिर्भवितव्यानुसारिणी "

इति हि न्यायः । भगवांस्तु प्रेक्षावत्तरः । कथं तदुक्तिर्निरर्थिका स्यात् । कथं तर्हि तस्य प्ररोचनमभूत् । उच्यते—सद्य उत्पन्नेन विषादातिशयेन त्रैलोक्यराज्येऽपि विरक्तस्यार्जुनस्य मोक्षं विनाऽन्येन केनापि प्रकारेण प्ररोचनं न स्यादित्यतोऽत्रामृतत्वप्राप्त्या प्ररोचितोऽर्जुन इति प्रागुक्तमेव । यादृशावस्थायाश्च तितिक्षाया अमृतत्वप्राप्तिः फलत्वेनोक्ता सा दुःखवेदनाविरहपूर्विका पूर्णावस्थां प्राप्ता तितिक्षा ' यदि न व्यथयन्त्येते ' इत्युक्तेरित्यपि प्रागुक्तमेव । अथ प्ररोचितस्यार्जुनस्येत्थं मतिरासीत्—' प्रतिकूलविषयसंयोगा अपि न व्यथाजनकाः ' । अत्र कारणं विषयेषु हेयबुद्धिरेव । सा च

' ग्राह्यता गुणवत्त्वात्स्याद्दोषाधीना तु हेयता '

इत्युक्तरीत्या विषयेषु दोषदृष्ट्या जायते । प्रकृते चादृष्टा भीष्मादिदेहा

युद्धे संभावितविनाशाः सन्तो मदीयं मनो व्यथयेयुरेवेति । एतामर्जुनस्य मनोवृत्तिमपसारयितुं भीष्मादिदेहेषु दोषं प्रदर्शयन्नाह—नासतो विद्यते भाव इति। भीष्मादिदेहेषु दोषान्तरमपश्यता भगवताऽत्र तेषु मायिकत्वदोषः प्रदर्शितः । एते भीष्मादिदेहा भीष्मादिजन्मनः प्रागविद्यमाना इति प्रसिद्धं सर्वैर्निश्चितमेव । तत एतेषामसतां भावः सत्त्वं नास्त्येव । तथा च सांप्रतमप्येते नैव सन्तीत्यतस्तद्विनाशादिशङ्का वृथैव त्वया क्रियत इति भावः । अथ 'नासतो विद्यते भावः' इत्येवं शाब्दज्ञानं भीष्मादिविषयकेण प्रत्यक्षेण बाधितमिति भीष्मादिदेहानामिदानीमसत्त्वं निश्चेतुमशक्यमित्यर्जुनाभिप्रायः स्याच्चेत्तथाऽपि तद्विनाशशङ्का वृथैव । यतो यदीदानीं सन्ति चेदग्रेऽपि स्युरेवेत्याह—नाभावो विद्यते सत इति । ननु 'सतोऽभावो न विद्यते' एतदपि प्रत्यक्षप्रमाणेन बाधितम् । अर्जुनेन पूर्वं हतानां कालखञ्जादिदैत्यानां पूर्वं सतामिदानीमभावस्योपलभ्यमानत्वादिति चेत् । उच्यते—यद्यपि प्रत्यक्षं प्रमाणं प्रमाणान्तरापेक्षया प्रबलं तथाऽपि न तद्भ्रान्तस्यातत्त्वदर्शिनः किंत्वभ्रान्तस्य तत्त्वदर्शिन एव । तदाह—उभयोरपीति । अत एव तत्त्वदर्शिभिरित्येवोक्तं नतु तत्त्ववेदिभिरिति । तत्त्वदर्शिभिरयं निश्चयः कृतः । तत्रोपपत्तिस्तु 'युक्तेः शब्दान्तराच्च' ( ब्र. सू. २ । १ । १८ ) इति सूत्रस्थशारीरभाष्यादवगन्तव्या । तथा च संप्रत्यर्जुनस्य जायमानं भीष्मादिदेहविषयकं प्रत्यक्षं भ्रम एवेति तद्विनाशशङ्काऽयुक्तैवेति भावः । नन्वेवं तर्हि 'नाभावो विद्यते सतः' इति नियमः क्व दृष्ट इति चेत्तत्राऽऽह—अविनाशि त्विति । नासतो विद्यते भाव इत्यस्योदाहरणमाह—अन्तवन्त इति ।

अत्रेदमवधेयम्—गीताग्रन्थस्य वेदान्तशास्त्रीयत्वं वेदान्तशास्त्रीयविषयप्रतिपादनात्सिध्यति । तस्याऽऽरम्भः 'सोऽमृतत्वाय कल्पते' इत्येवं प्ररोचनार्थं कृतेन प्रासङ्गिकमोक्षनिर्देशेन कृतः । ततः साधनचतुष्टयान्तर्गता मुमुक्षा प्ररोचनेनोत्पन्ना । युद्धारम्भे भीष्मादिदेहदर्शनात्सद्यः समुत्पन्नेन विषादातिशयेन जायमान इहामुत्रार्थफलभोगाविरागः 'अपि त्रैलोक्यराज्यस्य हेतोः०' इत्यादिना 'यदि मामप्रतीकारम्' इत्यादिना च प्रदर्शितः। नासतो विद्यते भावः० इत्यादिना च नित्यानित्यवस्तुविवेकः प्रदर्शितः । शमादिषट्कसंपत्त्यन्तर्गता तितिक्षा तांस्तितिक्षस्व भारत । यं हि न व्यथयन्त्येते० ' इत्यत्र दर्शिता । शमादयोऽग्रे प्रदर्श्यन्त इति ।

इदं चात्रावधेयम्—युद्धारम्भे भीष्मादीन् दृष्ट्वाऽप्यर्जुनस्य यदि विषादो नाभविष्यत्, यदि वा जातः कुतस्त्वा कश्मलमिदम्० त्यक्त्वोत्तिष्ठ परंतप' इत्येतावद्भगवदुक्तिमात्रेण विनष्टोऽभविष्यत्तर्हि वेदान्तचर्चा तदानीमनवसरग्रस्तत्वान्नैवाभविष्यत्। पश्चाच्च युद्धसमाप्त्यनन्तरं शान्तावस्थायां प्राक्तनसंस्कारोद्बोधवशादात्मजिज्ञासायां भगवदुपसत्तौ च जातायां वेदान्तचर्चायाः कदाचित्संभवोऽस्ति। सा च संभाविता चर्चा गीतायां ग्रथिता चेत् को विशेषः स्यात्।

उच्यते—विशेषः कश्चन नैव स्यात्। प्रत्युतास्या युद्धारम्भकालिकगीताया वेदान्तशास्त्रीयग्रन्थान्तरेभ्यो वैशिष्ट्यं यद् दृश्यते येन वैशिष्ट्येन 'इदमेकं प्रस्थानत्रयान्तर्गतं प्रस्थानमभूत्तद्वैशिष्ट्यं न स्यात्। तथा हि—बद्धो जन्तुर्द्विविधः, मुमुक्षया युतस्तद्रहितश्च। आद्यो द्विविधः स्वतन्त्रप्रज्ञः परतन्त्रप्रज्ञश्च। अन्त्योऽपि द्विविधः, मुमुक्षोत्पादनयोग्यस्तदयोग्यश्च। संकलनया चातुर्विध्यम्। एतदुक्तचतुष्टयमध्ये यः प्रथमः प्राक्तनसुकृतवशान्मुमुक्षुः स्वतन्त्रप्रज्ञः स उपनिषद्रूपेण प्रथमेन प्रस्थानेनावगतब्रह्मात्मतत्त्वस्तत्संस्कारदार्ढ्ये तत्त्वदर्शिनाऽऽचार्येणोपदिष्टः सद्यो मुक्तो भवति। द्वितीयस्तु परतन्त्रप्रज्ञः प्राक्तनसंस्कारवशान्मुमुक्षुर्ब्रह्मसूत्ररूपद्वितीयप्रस्थानसहायेन निर्णीतश्रुत्यर्थस्तत्संस्कारदार्ढ्ये स्वतन्त्रप्रज्ञकक्षामारोहति। तृतीयस्तु मुमुक्षाराहितोऽपि प्राक्तनसुकृतविशेषवशान्मुमुक्षोत्पादनयोग्यः सांसारिककर्मण्यासक्तो भगवद्गीतारूपेण तृतीयप्रस्थानेनावगतकर्मतत्त्वस्ततः कर्मण्यासक्तिशून्योऽहंकारशैथिल्यत उत्पन्नमुमुक्षः परतन्त्रप्रज्ञमुमुक्षुकक्षामारोहति। चतुर्थस्तु प्राक्तनतादृशसुकृताभावान्मुमुक्षोत्पादनयोग्यतामप्यलभमानः संसारसागरे मुहुर्निमज्जत्युन्मज्जति च। एष प्रथमः स्वतन्त्रप्रज्ञो मुमुक्षुर्जगत्यतीव विरलः कदाचित्क्वचिदेव विद्योतते। तदपेक्षया शतगुणेनाधिको द्वितीयः परतन्त्रप्रज्ञो मुमुक्षुः। तदपेक्षयाऽपि सहस्रगुणेन लक्षगुणेन वाऽधिकस्तृतीयो मुमुक्षोत्पादनयोग्यः सांसारिके कर्मण्यासक्तो भोगलालसो जन्तुः, यस्येदं गीताशास्त्रं विशेषत उपयुज्यते। एतदेवास्यां भगवद्गीतायां वैशिष्ट्यं यन्मुमुक्षया रहितानामपि सांसारिके कर्मण्यासक्तानामपि भूयसां जनानां सांसारिकं कर्म कारयन्त्येव तत्राऽऽसक्तिं शिथिलयन्ती मुमुक्षोत्पादनद्वाराऽऽत्मज्ञानसाधनीभूते मार्गे प्रवेशयति। अनेनैव वैशिष्ट्येन तृतीयं प्रस्थानमभूद्भूयसां च जनानामुपयुक्तमभूत्। यदि च युद्धारम्भे श्रीकृष्णार्जुनयोरियमीदृशी वेदान्तविषयचर्चा न स्यात्, युद्धानन्तरं च कदाचित्सा स्याच्चेत एतादृशं महत्त्वं गीताया न स्यात्। यदि

कदाचित्तदानीं कर्मान्तरासक्तस्यार्जुनस्य धर्मराजस्य वोपदेशेन सांसारिकाणां गीताया उपयोगः संभवति तथाऽपि नैतादृशः। युद्धकर्म हि सांसारिकाणां जनानां कर्मासक्तेः परा काष्ठा। यतो राज्यसुखोपभोगापेक्षयाऽधिक ऐहिको नैव कश्चन सुखोपभोगः संदृश्यते । तादृशीं परां काष्ठां गतमप्यर्जुनमुपदेशेन कृतार्थमकरोद्भगवानित्यालोच्येतरेऽस्यां गीतायां प्रवर्तन्ते । सांप्रतं प्रायो भूयांसो जना मुमुक्षाशून्या एव । यद्यपि तेषां बहिर्मुमुक्षा प्रतीयते तथाऽपि साऽनास्तिकल्पैव। मुमुक्षाभास एव सः । तदुक्तम्—

मुमुक्षा सैव संप्रोक्ता यया जन्तुरहर्निशम्।
ज्ञानमार्गे प्रयतते तदेकासक्तमानसः ॥ इति ।

सांप्रतं तु तद्विपरीतं दृश्यते । तदप्युक्तम्—

कलौ लुब्धा नरा नार्यो ह्यासक्ताः काम्यकर्मणि ।
क्षणं क्रीडन्ति विश्रान्त्यै सायं वेदान्तचर्चया ॥ इति ।

अत्रेदमवधेयम् । अस्मिन्नध्यायेऽवान्तरप्रकरणानि षट् । तत्राऽऽदौ तं तथा कृपयाऽऽविष्टम् ( २ । १ ) इत्यारभ्य विषीदन्तमिदं वचः (२ । १०) इत्येतत्पर्यन्तं दशश्लोकात्मकं मोहप्रकाशनं नाम प्रथमं प्रकरणम् ।तत्र चार्जुनस्याकस्मादुद्भूतं युद्धवैमुख्यं सहेतुकं प्रतिपादितम् । अस्यैव प्रकरणस्याङ्गभूतः प्रथमोऽध्यायः ।

ततः ' अशोच्यान् ' ( २ । ११ ) इत्यारभ्य प्रकरणचतुष्टयेनार्जुनस्य युद्धे समुत्पन्नां पराङ्मुखतां दूरीकृत्य युद्धे प्रवृत्तिः साधिता । तत्र च भगवता स्वाभीष्टसाधनाय कारणचतुष्टयं प्रदर्शितम् । तत्र ' अशोच्यान्० ' (२ । ११) इत्यारभ्य ' नानुशोचितुमर्हसि ' ( २ । २५ ) इत्यन्तं पञ्चदशश्लोकात्मकमशोच्यत्वालोचनं नाम द्वितीयं प्रकरणम् । तत्राऽऽत्मनां नित्यत्वेन विनाशासंभवाद्भीष्मादयः शोच्या एव न भवन्तीत्युपपादितम् । शोच्यत्वाभावे च तन्मूलकस्य शोकस्याभावः । शोकाभावे च तन्मूलकस्य किं नो राज्येन० इत्येवमुत्पन्नस्य वैराग्यस्याभावः। वैराग्याभावे च तन्मूलकस्य युद्धात्परावर्तनस्याभावः। ततः पूर्वसिद्धत्वादावश्यिकैव युद्धे प्रवृत्तिः स्यादिति । एतच्च पूर्वोक्तकर्तव्यद्वयमध्ये शोकनिवृत्तिरूपस्य प्रथमस्य कर्तव्यस्य कारणम् । न तु युद्धे प्रवृत्तिरूपस्य द्वितीयस्य कर्तव्यस्य कारणम् । अशोच्यत्वप्रदर्शनेन हि शोकनि-

वृत्तिर्भवेन्न तु युद्धे प्रवृत्तिः । तस्याः कारणं तु राज्यलोभादिकं प्रसिद्धमेव । नन्वेवम्—

'अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः ।
अनाशिनोऽप्रमेयस्य तस्माद्युध्यस्व भारत ' ( २ । १८ )

इत्येवमुक्तश्लोकपञ्चदशकमध्येऽविनाश्यात्मनो देहानां विनाशित्वं तस्मादिति तच्छब्देन परामृश्य तस्य युद्धकारणत्वं पञ्चम्या यत्प्रदर्शितं तन्नोपपद्यत इति चेत्सत्यम् । तत्र तस्मादित्युत्तरं ' शोकं त्यक्त्वा ' इत्यध्याहृत्य तच्छब्देन निर्दिष्टस्य शोकत्यागे कारणत्वेनान्वयस्वीकारेणादोषात् । युध्यस्वेति त्वनुवादो नापूर्वो विधिः । शोकात्पूर्वं युद्धे प्रवृत्तेर्जायमानत्वात् । अत्र तादृशयुद्धप्रवृत्तिप्रतिबन्धकः शोक एव केवलमपसारितो भगवता । अत एव प्रथमकारणप्रतिपादके श्लोकपञ्चदशके नानुशोचन्तीत्युपक्रम्य शेषे 'तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि' (२।२५) इत्येव शोकस्यायोग्यत्वं प्रदर्श्योपसंहृतम् । नतु ' युद्धं कर्तुमिहार्हसि ' इत्येवं तत्रोपसंहारः कृतो भगवता । प्रतिबन्धकाभावस्य कारणत्ववादिनां मते तु शोकनिवृत्तेर्युद्धकारणत्वात्तद्द्वारा युद्धकारणत्वमपि तच्छब्दनिर्दिष्टस्य देहविनाशित्वस्य संभवति । देहविनाशित्वं हि ज्ञातं सच्छोकनिवृत्तिद्वारा युद्धे प्रवृत्तिं संपादयति । एवं भगवता स्वाभीष्टसिद्ध्यर्थमर्जुनाय प्रथमं कारणं प्रदर्श्य ततः ' अथ चैनं नित्यजातम् ' ( २ । २६ ) इत्यादिना ' तस्मात्सर्वाणि भूतानि न त्वं शोचितुमर्हसि ' ( २ । ३० ) इत्यन्तेन श्लोकपञ्चकात्मकेन तृतीयप्रकरणेन शोकराहित्याख्येन द्वितीयं ( २ ) कारणं लौकिकदृष्ट्या देहिनां भीष्मद्रोणादीनां देहविनाशसंभावनया शोच्यत्वेऽपि तादृशविनाशस्य युद्धाकरणेऽप्यवश्यंभावित्वेनापरिहार्यत्वरूपमुक्तम् । एतदपि कारणं पूर्वोक्तकर्तव्यद्वयमध्ये शोकनिवृत्तेरेव प्रथमकारणवन्नतु युद्धप्रवृत्तिरूपस्य द्वितीयस्य कर्तव्यस्य । विनाशस्यापरिहार्यत्वं हि ज्ञातं चेत्तच्छोकमपसारयेन्न तु तेन युद्धे प्रवृत्तिः संभवति । नैव चोक्ता तादृशद्वितीयकारणप्रतिपादके श्लोकपञ्चके । शोकनिवृत्तिस्तु तत्र श्लोकपञ्चके ' नैवं शोचितुमर्हसि ' ( २ । २६ ) ' न त्वं शोचितुमर्हसि ' ( २।२७ ) ' तत्र का परिदेवना ' ( २।२८ ) ' न त्वं शोचितुमर्हसि ' ( २ । ३० ) इत्येवं चतुर्वारं निर्दिष्टा भगवता । एतदुक्तं भवति । जन्ममृत्यू सर्वजनप्रसिद्धौ तादृशं च सर्वजनप्रसिद्धं मरणं भीष्मादीनामपि संभाव्यत एवेत्यतस्ते शोच्या

भवन्त्येवैवमर्जुनाभिप्रायं प्रकल्प्य तमनूद्य तथाऽपि तादृशमरणस्यापरिहार्यत्वाच्छोको नैव युक्त इत्येवं 'तत्र का परिदेवना' (२।२८) इत्यन्तेन श्लोकत्रयेणोपपादितम्। अत्रार्जुनस्यैवं मतिः स्यात्—'मया लोकप्रसिद्धं मरणमिति भीष्मादिषु तत्संभावनया तेषां शोच्यत्वं गृहीतम्। भगवता तु तद्विरुद्धमशोच्यत्वमेव द्वितीयप्रकरण उक्तम्। यतश्च भगवानेवेत्थं ब्रवीतीत्यतो मम भ्रमः स्यात्। किंतु तदनन्तरं मया गृहीतं शोच्यत्वमनूद्य परिहारान्तरमपरिहार्यत्वमुक्तवान्। अतो मम न सर्वथा भ्रमः स्यादिति। सर्वथा भ्रमः स्याच्चेद्बाधकमुद्भाव्य भ्रमो दूरीकृत एवेति न तन्मम मतमनूद्य तत्र भगवता परिहारान्तरमुक्तं स्यात्। अतोऽहं मन्ये "भगवतोक्तमशोच्यत्वं भगवदुक्तत्वात्सत्यमेव भवेत्। किंतु मया गृहीतं शोच्यत्वमपि कस्यांचिदवस्थायां सत्यं स्यात्। सा च देहिनः सांसारिकी जाग्रदवस्था। यतोऽस्यामेव देहिनो मरणं दृश्यते। एवमवस्थाभेदेन शोच्यत्वाशोच्यत्वयोरुभयोः सत्यत्वं संभवति। किंतु यथा स्वप्नावस्थायां भासमानानां हस्त्यश्वादीनां तदानीं सत्यत्वमेव प्रत्येति जनः। मिथ्यात्वं तु जाग्रदवस्थायां प्रतीयमानमपि 'एते हस्त्यश्वादयो मिथ्याभूताः' इति स्वप्नावस्थायां न कोऽपि पश्यति न कोऽपि वदति नैव च कोऽपि शृणोति तथाऽस्यां देहिनः सांसारिक्यां जाग्रदवस्थायां भासमानं यच्छोच्यत्वं तद्विरुद्धमशोच्यत्वमस्यामेवावस्थायामभासमानं कथं भगवतोक्तम्" इति। एतामर्जुनस्य मनसि समुद्भवन्तीमाशङ्कां प्रकल्प्यास्यामेव देहिनः सांसारिक्यां जाग्रदवस्थायामशोच्यत्वं भासत एव सत्याधिकारे कस्यचिदित्येवमाश्चर्यवत्पश्यतीत्यादिना चरणत्रयेण प्रतिपाद्यानधिकारिणस्तु नैव तद्भासत इति सावधारणं चतुर्थचरणेनोपपादितम्। अधिकारी हि पुरुषविशेषः कश्चित्सूक्ष्मदृष्टिर्देहे देहांशेन 'एतस्मात्किमिवेन्द्रजाल०' इत्येवं चित्रं पश्यति। तत्रैव चेतनांशेन तु देहाभिमानरहितं जन्ममरणातिक्रान्तत्वेनानुसंदधानः साश्चर्यो भवति। तदानीं तदनुभवारूढमशोच्यत्वं भवत्यस्यामेव सांसारिक्यां जाग्रदवस्थायाम्। अनेन वैषम्येणात्र स्वप्नदृष्टान्तो न युज्यते। एवं च यदा सांसारिक्यामवस्थायां जन्ममरणाक्रान्तो भासते तदानीमपि वस्तुतः स जन्ममरणातीत एवेति सर्वदाऽयमवध्य एवेति 'देही नित्यमवध्योऽयम्' इत्यनेन प्रतिपादितम्।

'तस्मात्सर्वाणि भूतानि न त्वं शोचितुमर्हसि'

इत्येवं सामान्येन प्रकरणद्वयस्योपसंहारोऽशोच्यत्वाच्छोककारणत्वेनाभिमतस्यापरिहार्यत्वाच्च शोको न युक्त इति।

अत्राऽऽहुः–'जातस्य हि० (२।२७)। इत्यत्र शोककारणीभूतस्य मृत्योरपरिहार्यत्वाच्छोको न युक्तः। मृत्योरपरिहार्यत्वं च 'जातस्य हि ध्रुवो मृत्युः०' इति नियमं प्रदर्श्योपपादितम्। यतश्चेदृशो नियमोऽतो मृत्युपरिराहार्थं प्रयत्नेषु कृतेष्वपि ते प्रयत्ना निष्फला एव भविष्यन्तीत्यतः शोको न युक्त इति तदाशयः। इदानीं मृत्युपरिहारार्थं प्रयत्नाः कर्तुमपि न शक्यन्त इत्येतत्प्रदर्शनीयम्। तत्र मृत्युर्नाम न कश्चन स्थूलो मूर्तः पदार्थो यः कण्टकपाषाणादिवद्धस्तेन गृहीत्वा दूरतः प्रक्षेप्तुं शक्येत। तथा च मृत्योः परिहारे प्रकारान्तरमेवान्वेषणीयम्। तदप्यत्र न संभवतीत्याह–अव्यक्तादीनीति २।२८। प्रकारान्तरं च परिहार्यं वस्तु यदधीनं यत्सत्ताधीनसत्ताकं तादृशस्यार्थस्यापसारणम्। स चार्थः परिहार्यवस्तुनः कारणीभूतो वाऽन्यो वा कोऽप्यस्तु। यथा दाहे परिहार्येऽग्निर्निर्वाप्यते। अग्न्यधीनत्वाद्दाहस्य। यथा वा स्वपुत्रस्य दुराचरणे मित्रायत्ते दुराचरणं परिजिहीर्षुः पिता मित्रं निर्वासयति। प्रकृते च मृत्युः परिहार्यः। मृत्योश्च कस्तथाविधोऽर्थः स्याद्यदधीनो मृत्युः स्याद्यस्मिंश्चापसारिते मृत्युः परिहृतो भवेदित्यपेक्षायां यावन्मृत्योरुपजीव्यभूतस्तथाविधोऽर्थोऽन्विष्यते तावत् 'जातस्य हि ध्रुवो मृत्युः' इत्यनुपदमेवोक्तत्वाज्जन्मैव तथाविधोऽर्थः परिस्फुरति। ननु मृत्युर्जन्मायत्त इति नियमः प्रकृतोपयुक्तः। जन्म विना मृत्युर्नैव भवतीति हि तस्यार्थः। तथा च जन्मन्येव परिहृते मृत्युः परिहृतो भवेत्किल। किंत्वीदृशो नियमः 'जातस्य हि ध्रुवो मृत्युः' इत्युक्त्या कथमवगम्यते। 'जातस्य मृत्युरस्त्येव' इति हि तदर्थः। न तु जातस्यैव मृत्युरिति। सत्यम्। यद्यपि 'जातस्य हि ध्रुवं मृत्युः' इत्यस्माद्वाक्याद्वाच्यमर्यादया जातस्य मृत्युरस्त्येवेत्येवार्थोऽवबुध्यते न तु जातस्यैव मृत्युरिति तथाऽपि जातस्यैव मृत्युरित्यप्यर्थस्तस्मादेव वाक्यात्प्रतीयत एव। तथा हि–शरीरविशेषसंयोगो जन्म, शरीरविशेषवियोगो मरणम्। संयोगवियोगौ हि मिथोऽन्योन्यसापेक्षौ। वस्तुस्वाभाव्यात्। कदाऽप्ययुक्तयोर्नैव वियोगव्यपदेशः। नापि च कदाऽप्यावियुक्तयोः संयोगव्यपदेशः। यत्र च संयोगवियोगयोरन्यतरस्यासंभवो बुद्धावारोहति तत्रेतरस्याप्यसंभव एव। यत्र चान्यतरस्य संभवो बुद्धावारोहति तत्रेतरस्यापि संभव एव। नतु कदाचिदप्येकस्य संभवोऽन्यस्यासंभव इति। अत एव

'संयोगश्च वियोगान्तो वियोगो योगपूर्वकः'

इत्यभियुक्ता वदन्ति । तथा च जन्ममृत्यू मिथो निगडबद्धाविव दृढं संबद्धावित्यतो जन्मन्यपसारिते मृत्युः परिहृतो भवेत्किल । किंतु जन्मनोऽपि मृत्योरिव सूक्ष्मत्वात्तस्यापि परिहारः कण्टकपाषाणादिवत्साक्षान्नैव कर्तुं शक्यते। किंतु जन्म यदधीनं तस्मिन्परिहृते जन्म परिहृतं भवेत् । तादृशं च जन्मन उपजीव्यभूतं वस्तु किमित्यन्वेषणायां ध्रुवं जन्म मृतस्य चेत्यनुपदमेवोक्तत्वान्मृत्युरेव तथाविधं वस्तु परिस्फुरति। एवं चोपजीव्यान्वेषणमन्योन्याश्रयग्रस्तमित्यतस्तयोर्जन्ममरणयोर्द्वयोरप्यन्यानि तदुपजीव्यभूतानि वस्तून्यन्वेषणीयानि। तानि च जन्ममरणयोर्द्वयोरपि सूक्ष्मतरत्वाद्दुर्विज्ञेयानि भवन्ति । आदिर्जन्म । निधनं मरणम् । द्वयमप्येतव्द्यक्तं न भवति । यतः—

कुत आगत्य गृह्णाति त्यक्त्वा वा कुत्र गच्छति ।
कार्यकारणसंघातं जीवात्मा तन्न बुध्यते ॥ १ ॥

कथं जन्मनि गृह्णाति जहाति निधने कथम् ।
कार्यकारणसंघातं जीवात्मा तन्न बुध्यते ॥ २ ॥

कस्माज्जन्मानि गृह्णाति मृतौ कस्माज्जहाति वा।
कार्यकारणसंघातं जीवात्मा तन्न बुध्यते ॥ ३ ॥

किं प्रयोजनमुद्दिश्य गृह्णाति च जहाति च।
कार्यकारणसंघातं जीवात्मा तन्न बुध्यते ॥ ४ ॥

किंसहायः किमालम्ब्य गृह्णाति च जिहाति च ।
कार्यकारणसंघातं जीवात्मा तन्न बुध्यते ॥ ५ ॥

कार्यकारणसंघातः शरीरेन्द्रियसंघातः । जन्मकाले जीवात्मा नवं शरीरमिन्द्रियाणि च गृह्णाति मरणकाले जहाति । तत्र ग्रहणे त्यागे च को हेतुः कः प्रकारः किं प्रयोजनं कः सहायः क आश्रयः पूर्वं कस्मात्प्रदेशादागतः पश्चाच्च कस्मिन्प्रदेशे गमनमित्येवं किमपि न ज्ञायते । अतस्तयोर्जन्ममरणयोः संबन्धिपदार्थान्वेषणे मतिः कुण्ठिता भवति । एवं च जन्ममरणयोः सर्वप्रकारेणाव्यक्तत्वात्तयोः परिहारार्थं परम्परयाऽपि लौकिकः प्रयत्नः कर्तुं न शक्यते । यदि भूतानां जन्म मरणं च व्यक्तं स्यात्तर्हि शरीरेन्द्रियग्रहणे तत्त्यागे च को हेतुः कः प्रकारः किं प्रयोजनं कः सहायः क आश्रयः पूर्वं कस्मात्प्रदेशादागमनं पश्चाच्च कस्मि-

न्मदेशे गमनमित्येते तत्संबंधिनः सर्वे पदार्था ज्ञाता भवेयुः । ततश्च तेषु पदार्थेष्वेकस्यानेकस्य वा विघातार्थं स्वस्वशक्त्यनुसारेण प्रयत्नः संभवेद्येन तद्द्वारा जन्म मरणं वा परिहृतं स्यात् । एवं च जन्ममृत्युपरिहारार्थं प्रयत्नो नैव कर्तुं शक्यत इति सिद्धम् । अत्राऽऽहुः—लौकिकः प्रयत्नः कर्तुं न शक्यत इति न्यूनम् । तादृशः प्रयत्नः कर्तुं न शक्यत इति सत्यमेव । किंतु जन्ममृत्युपरिहारार्थं तादृशः प्रयत्नश्चिन्तयितुमपि न शक्यते । यतो यथा प्राणिनामाद्यन्तावस्थयोरव्यक्तत्वात्तत्संबन्धिनः पूर्वोक्ताः पदार्थाः प्रत्यक्षप्रमाणेन निश्चेतुं न शक्यन्ते तथाऽनुमानप्रमाणेनापि न ते निश्चेतुं शक्यन्ते । तत्कथमनवधारितस्वरूपाणां पदार्थानां प्रहाणार्थं प्रयत्नश्चिन्तनीयः स्यात् । अनुमाने हि व्यक्तेनाव्यक्तस्य प्रकल्पनम् । यद्यपि प्राणिनां मध्याऽवस्था व्यक्ता 'व्यक्तमध्यानि भारत' इत्येवमत्रापि सा तथा निर्दिष्टा तथाऽप्यव्यक्तप्रायैव सा । यतस्तदानीमपि—

जीवन्धारयते कस्मात्किमर्थं कीदृशः कथम् ।
कार्यकारणसंघातं जीवात्मा तन्न बुध्यते ॥

अयमाशयः—जातस्य हीति पूर्वश्लोके जन्मनो मृत्योश्चापरिहार्यत्वमुक्तम् । तत्समर्थनार्थं तयोरवस्थयोरव्यक्तत्वमत्र यत्प्रतिपादितं तद्युज्यते । किंतु मध्यावस्थायां व्यक्तत्वमत्र यत्प्रतिपाद्यते तस्य न कथंचन तत्रोपयोगो दृश्यते । किंचाऽऽद्यन्तयोरवस्थयोरव्यक्तत्वे प्रतिपादिते मध्यावस्थाया व्यक्तत्वं परिशेषसिद्धमेवेति पुनस्तदुक्तेर्वैयर्थ्यं च दृश्यत इति चेत्सत्यमेतत् । पुनस्तदुक्तिरवधारणगर्भा 'मध्य एव व्यक्त' इत्यर्थप्रतिपादनद्वाराऽऽद्यन्तयोरवस्थयोरव्यक्तत्वं दृढी करोति । तथा च 'व्यक्तमध्यानि भारत' इत्युक्तेर्न मध्यस्य व्यक्तत्वबोधने तात्पर्यं किंतु मध्येतरस्य व्यक्तत्वनिषेधे तात्पर्यम् । नहि निन्देति न्यायवत् । नहि निन्दा निन्द्यं निन्दितुं प्रक्रमतेऽपि तु स्तुत्यं स्तोतुम् । तथा नहि स्तुतिः स्तुत्यं स्तोतुं प्रक्रमतेऽपि तु निन्द्यं निन्दितुम् । वक्तुस्तथा तात्पर्ये सत्येवमवगम्यते । तथा यत्र सिद्धस्य विधानं दृश्यते तत्र नहि विधिर्विधेयं विधातुं प्रक्रमतेऽपि तु निषेध्यं निषेद्धुम् । एवं च व्यक्तमध्यानि भारतेत्युक्तिर्न व्यर्था नापि प्रकृतानुपयोगिनी । आद्यन्तयोरवस्थयोरव्यक्तत्वस्य दार्ढ्यप्रदर्शनेन प्रकृतोपयोगसत्त्वात् । तेनाऽऽद्यन्तयोरवस्थयोरत्यन्ताव्यक्तत्वमवगम्यते । अत्यन्ताव्यक्ते चानुमानस्यापि न गतिः । यतोऽत्यन्ताव्यक्तस्य न बहिः किंचिच्चिह्नमवलोक्यते ।

यथा पर्वतस्थोऽग्निर्दृष्ट्यगोचरत्वादव्यक्त इति तत्र व्यक्तेन धूमेनानुमातुं शक्यते नतु शमीगर्भस्थोऽत्यन्ताव्यक्तोऽग्निरनुमातुं शक्यते तद्वत् ।

अथवा मध्यावस्थाया व्यक्तत्वं सिद्धमेवेति पुनस्तस्यात्र विधिर्विधेये विशेषद्योतनाय । व्यक्तमध्यानीत्यत्र विधेयं मध्यावस्थाया व्यक्तत्वम् । तत्र विशेषश्चाऽऽभासरूपत्वम् । तेन मध्यो न व्यक्तः किंतु व्यक्ताभासः । मध्यश्च प्राणिनां जीवनावस्था । तत्र व्यक्ताभासत्वं च 'जीवन्धारयते' इत्यादिभिः श्लोकैरनुपदमेव प्रदर्शितम् । एवं चावतप्ते नकुलस्थितवज्जीवनावस्थायां जीवात्मनोऽवस्थानमिति तत्रत्यं स्थिरं लिङ्गं किंचिदाश्रयितुं न शक्यते यदालम्ब्यानुमानस्य तत्रावकाशः स्यात् । अवस्थाविशेषोऽयमिति निश्चयोऽस्त्येवेति चेत् । बाढं तेनाऽऽद्यन्तयोरवस्थयोः केवलमस्तित्वानुमानं भवेन्न तु तादृशावस्थाद्वयसंबन्धिनां पदार्थविशेषाणाम् । आद्यन्तावस्थयोः केवलमनुमाने तु तेन जन्मनो मृत्योश्चापरिहार्यत्वमेव दृढी भवतीति बोध्यम् । इत्थं च व्यक्तमध्यानीत्युक्तवतो भगवतोऽत्राभिप्रायो द्विविधः संभवति । तदुक्तम्—

सिद्धस्यैव विधौ कल्प्या गतिर्द्वेधा विवक्षया ।
विशेषो वा विधेये स्याद्व्यावृत्तिरितरत्र वा ॥ इति ।

अत्र केचित्—प्राणिनां ह्याद्यन्तमध्येत्यवस्थात्रयं प्रसिद्धम् । तत्र या मध्यावस्था जीवनावस्थारूपा सा व्यक्ता । जन्ममरणरूपे आद्यन्तावस्थे अव्यक्ते इत्यनुभवः । तस्यैवानुवादोऽत्र श्लोके क्रियते । अनुवादकरणस्य प्रयोजनं त्वनुमानस्य बाधः । अनुमानं च द्विविधम् । मध्यावस्थासादृश्यादाद्यन्तयोरवस्थयोर्व्यक्तत्वमित्येकम् । तद्वैपरीत्येनाऽऽद्यन्तावस्थासादृश्यान्मध्यावस्थाया अव्यक्तत्वमित्यपरम् । अनुमानद्वयं चैतन्मिथो विरुद्धम् । उभयमपि च पूर्वप्रदर्शितानुभवेन विरुद्धमेव । अनुमानद्वये चाऽऽद्यन्तावस्थाद्वयसादृश्यान्मध्यावस्थाया अव्यक्तत्वानुमानमुपपन्नतरम् । एकानुरोधेनानेकत्र विरुद्धकल्पनापेक्षयाऽनेकानुरोधेनैकत्र विरुद्धकल्पनाया एव ज्यायस्त्वात् । तादृशानुमानस्य बाधायात्र श्लोके लोकप्रसिद्ध्यनुवाद इति 'व्यक्तमध्यानि' इत्यस्याभिप्राय इति ।

तत्रेत्थमुच्यते । स्यादप्येतदेवं यदि मध्यावस्थाया बोधितस्य व्यक्तत्वस्य कश्चित्प्रकृतोपयोगः स्यात् । शोककारणीभूतस्यार्थस्यापरिहार्यत्वं ह्यत्रोपपादनीयम् । तच्च तदर्थस्यावर्जनीयत्वात्तत्परिहारार्थं प्रयत्नस्याप्यशक्यत्वादचिन्तनी-

यत्वाच्चोपपद्यते । तत्र च जीवनावस्थाया अव्यक्तत्वमेवोपयुक्तं भवेन्न तु व्यक्तत्वम् । किंचात्र यदनूदितं जीवनावस्थाया व्यक्तत्वस्य प्रत्यक्षं तेनाव्यक्तत्वसाधकस्यानुमानस्य बाधो दुर्वचः । व्यक्तत्वाव्यक्तत्वयोर्विषयभेदेनाविरोधात् । जीवनावस्थाया यद्यव्यक्तत्वमनुभवसिद्धमित्युच्यते तत्कीदृशमिति विवेचनीयम् । वयं त्वित्थं प्रतीमः—व्यक्तत्वं प्रत्यक्षविषयत्वम् ।

प्रत्यक्षा जीवनावस्था जन्तोरिति मुधा वचः ।
यतः सा कीदृशी कस्येत्यादि न स्पष्टमीक्ष्यते ॥

जीवात्मना क्रियमाणं भोगसाधनशरीरविशेषधारणं हि जीवनमित्युच्यते । तत्र जीवात्मनः स्वरूपं कीदृशं स्थूलं सूक्ष्मं वा मूर्तममूर्तं वेदमीदृशमित्येवं नैव प्रत्यक्षं तेन क्रियमाणं शरीरधारणं कथं क्रियते तदपि नैव प्रत्यक्षम् । तथा सुखदुःखसाक्षात्कारो भोगः । स च भवतीत्येव । न तु स आत्मनः कया विधया भवति मनश्च तत्र साक्षात्कारे कथमुपयुज्यते कथं च तत्र शरीरं साधनं भवति तत्किमपि न प्रत्यक्षं निश्चीयते । तथा शरीरविशेषपदेन मनुष्यपशुपक्ष्यादीनां सर्वेषां प्राणिनां यत्स्थूलं शरीरं तद्ग्राह्यम् । तस्य च स्थूलत्वं यस्माच्छरीरान्तरात्तत्प्रत्यक्षं न भवति । सूक्ष्मशरीरस्य प्रत्यक्षविषयत्वाभावात् । तथा च स्थूलं शरीरं न स्थूलत्वेन प्रत्यक्षविषयः । स्थूलत्वप्रतियोगिभूतस्य सूक्ष्मत्वस्य प्रत्यक्षाविषयत्वात् । किंतूद्भूतत्वेन तदपि च तस्य शरीरस्य प्रत्यक्षं बहिरेव नान्तः । आन्तरस्य भागस्य भोगसाधनत्वेन प्रत्यक्षाविषयत्वात् । एवं च सर्वमेतदनुमानादिप्रमाणगम्यमेवेति केवलं स्थूलशरीरस्य बाह्यप्रत्यक्षमात्रेण जीवनावस्थायाः प्रत्यक्षं नैवोपपादयितुं शक्यम् । स्वप्नेऽपि तादात्विकशरीरस्य तदानीं प्रत्यक्षं भवति । तावता किं तस्या अवस्थाया व्यक्तत्वं कश्चिदभ्युपैति । स्वप्नदृष्टान्तेनापि च जीवनावस्थाया अव्यक्तत्वमेवानुमातुं शक्यम् । नैव तत्र प्रत्यक्षप्रमाणं व्यक्तत्वं साधयितुं प्रभवति । स्थूलशरीरमात्रं ह्युद्भूतरूपवत्त्वेन प्रत्यक्षविषयः । नैव तत्र भोगसाधनत्वमात्रं (प्रकारः) प्रत्यक्षविषयः । तथा मन इन्द्रियाण्यात्मा तेषां स मिथः संबन्ध इत्यादिकं सर्व मनुमानसाध्यमेवेति । तथा चात्र नैव प्रत्यक्षसिद्धार्थानुवादेन व्यक्तमध्यानीत्यनेनानुमानसिद्धाव्यक्तत्वस्य बाध इति सिद्धम् । व्यक्तमध्यानीत्यस्य प्रकृते परिदेवनाक्षेप उपयोगस्तु मध्यस्यैव व्यक्तत्वं नाऽद्यन्तयोरव्यक्तत्वे च व्यक्तत्वव्यक्ताभासत्वमेवेत्येवं प्रकारद्वयेन प्राक् प्रदर्शित एव ।

संप्रति मध्याया जीवनावस्थाया व्यक्ताभासत्वं विशदयति—( २ । २९ ) आश्चर्यवदिति । एनं जीवात्मानं देहिनं स्वात्मानं परात्मानं च सर्व एव जन्तवो देहद्वारा पश्यन्त्येव । पश्यतां च तेषां मध्ये कस्यचिदेवाऽऽश्चर्यं भवति न सर्वेषाम् । लोके ह्यैन्द्रजालिकेन माययोत्पादितान्पदार्थानालोचयतां जनानां सर्वेषामाश्चर्यं भवति । तदुक्तम्—

संभवन्नपि चैवार्थो नाजस्रं योऽनुभूयते ।
आश्चर्यं मन्यते मूढस्तत्र कादाचित्कदर्शनात् ॥ इति ।

यस्तु ते पदार्थाः कीदृशाः कथमुत्पन्ना इत्येतद्याथात्म्येनावगच्छति स एव केवलं नाऽऽश्चर्यचकितो भवति । अत्र तु जीवात्मनः स्वरूपं याथात्म्येनानवगच्छन्तोऽपि लोका आश्चर्यचकिता न भवन्ति । तदप्युक्तम्—

असंभव्यपि चैवार्थः सततं योऽनुभूयते ।
नाऽऽश्चर्यं मन्यते तत्र मूढः सततदर्शनात् ॥ इति ।

यस्तु जीवात्मविषये सूक्ष्मेक्षिकया विचारं कर्तुं प्रवर्तते स एवैनमाश्चर्यवत्पश्यति । तथा च पञ्चदश्यामुक्तम्—

एतस्मात्किमिवेन्द्रजालमपरं यद्गर्भवासस्थितं
रेतश्चेतति हस्तमस्तकपदप्रोद्भूतनानाङ्कुरम् ।
पर्यायेण शिशुत्वयौवनजरावेषैरनेकैर्वृतं
पश्यत्यत्ति शृणोति जिघ्रति तथा गच्छत्यथाऽऽगच्छति ॥ इति ।

तथाऽन्यः कश्चिदेवैनमाश्चर्यवद्वदति । जीवात्मसंबन्धेन भाषणं च द्विविधम्—जीवात्मनि कर्मकर्तृत्वं तज्जन्यफलभोक्तृत्वं च मत्वा प्रवृत्ता ये ‘ अग्निहोत्रं जुहुयान्नानृतं वदेत् ’ इत्यादयो विधिनिषेधास्तदनुसार्येकम् । ईदृश एव भूयान्भागो भारतरामायणादिषु पूर्वसिद्धानुवादरूपोऽमार्गप्रवृत्तानामुल्लङ्घितनिषेधानां दुर्योधनरावणादीनां न समीचीनः परिणामः, अनुल्लङ्घितनिषेधानां विध्यनुसारिणां धर्मराजरामचन्द्रादीनां समीचीनः परिणाम इति । अत एवैतदनुसारेण भूयांसो जनाः कीर्तनप्रवचनादिषु यद् ब्रुवते न तदाश्चर्यकरं भाषणं भवति । अनुभवसिद्धार्थानुवादरूपत्वात् । जीवात्मसंबन्धेन क्रियमाणस्य भाषणस्य द्वितीयः प्रकारस्तु जीवात्मनि कर्मकर्तृत्वं फलभोक्तृत्वं चौपाधिकमेव न तु वस्तुतस्तन्नास्ति । अतो नैव तत्र विधिनिषेधप्रवृत्तिरित्यादिवास्तविकात्मस्व-

रूपानुसारेण क्रियमाणं भाषणम् । ईदृशो भागस्तु भारतरामायणादिषु स्वल्प एव गीतादिरूपः प्रसिद्धः । एतदनुसारेण 'कर्मण्यकर्म यः पश्येत्' इत्यादि कश्चिदेव यद्वदति तदाश्चर्यकरं भाषणम् । तदर्थस्य लोकानुभवानारूढत्वात् । तथा चोक्तम्—

संभवन्नपि चैवार्थो नाजस्रं योऽनुभूयते ।
आश्चर्यं मन्यते जन्तुस्तस्यासंभवकल्पनात् ॥ इति ।

तथा कश्चिदेवैनमाश्चर्यवच्छृणोति । वक्तरि वक्तुं प्रवृत्ते तस्य श्रवणं द्विविधम् । दृढसंस्कारजनकं तदजनकं च । यत्र वक्तृप्रतिपाद्यविषयपरिज्ञानेऽधिकारी तादृशं प्रतिपाद्यं विषयं जिज्ञासुः सावधानेन मनसा श्रोतुं प्रवर्तते तत्र तेन श्रोत्रा क्रियमाणं श्रवणं श्रोतुर्मनसि दृढसंस्कारं जनयति तच्छ्रवणं दृढसंस्कारजनकम् । अन्यथा तु सामान्यतो जायमानं श्रवणं दृढसंस्काराजनकं भवति । प्रकृतविषये च तादृशसंस्कारजनकं श्रवणं तदैव संभवेद्यदाऽकर्त्रभोक्त्रात्मस्वरूपं प्रतिपादयितुं वक्तरि प्रवृत्ते तादृशात्मस्वरूपज्ञानाधिकारी विरक्तो मुमुक्षुः सावधानेन मनसा श्रोतुं प्रवृत्तो भवेत् । एतादृशस्य च श्रवणस्य संभवो वर्षसहस्रेणापि कदाचिदेवेत्यत आश्चर्यजनकमेव तदिति भावः ।

तथा—श्रुत्वाऽप्येनं वेद न चैव कश्चित् ।

एतादृशश्रवणोत्तरमपि न कश्चिदात्मस्वरूपं साक्षात्करोतीति वाच्यार्थोऽवभासते । ननु न तादृशोऽर्थोऽत्र भगवतोऽभिप्रेतो भवति । इतरथाऽऽत्मज्ञानार्थं श्रवणे कस्यापि प्रवृत्तिर्न स्यात् । कस्तर्हि भगवतोऽत्राभिप्रायः । उच्यते—न चैवेति निपातसमुदायोऽत्रासंभावनातिशये । निरुक्तश्रवणोत्तरमप्यात्मस्वरूपसाक्षात्कारः प्रायो नैव संभवति, किंतु कस्यचिदेवेति ।

'अनेकजन्मसंसिद्धस्ततो याति परां गतिम्' ( गी० ६ । ४५ )

इत्युक्तिरेतमेवार्थमुपोद्बलयति । आश्चर्यो ज्ञाता कुशलानुशिष्टः ( का० १ । २ । ७ ) इति श्रुतिश्चात्रानुकूला भवति । शृण्वन्तोऽपि बहवो यं न विद्युः ( का० १ । २ । ७ ) इति श्रुतौ बहुपदं प्रतियोगिनः स्वल्पसत्तां सूचयदमुमर्थमुपोद्बलयति ।

अन्ये त्वाहुः—" जीवात्मनो यत्कर्तृत्वभोक्तृत्वादिविशिष्टमौपाधिकं स्वरूपं

तद्वास्तविकमेवेति भ्रमेण तादृशमेव जीवात्मानमेके पश्यन्ति तथैवान्ये वदन्ति तथैव चापरे शृण्वन्ति । किंतु तत्र जीवात्मनः सत्यं स्वरूपं न कश्चिदपि वेत्तीत्याश्चर्यमित्यर्थः ” इति । तन्न रुचिरम् । प्रथमचरणोक्तस्य कश्चिदित्यस्य तथा द्वितीयचरणे तृतीयचरणे च परामृष्टस्य कश्चिदित्यस्यासंगतेः । औपाधिकं स्वरूपं गृहीत्वा तादृशं पश्यतां वदतां शृण्वतां च जनानां बहुत्वात् । प्रायेण सर्वेषामेव तथात्वात् । किंचास्मिन्नर्थे ‘ आश्चर्यवत्पश्यति कश्चिदेनम् ’ इति वाक्यरचना विरुद्धा भवति । अनया हि रचनया जीवात्मस्वरूपं पश्यतो वदतः शृण्वतश्चाऽऽश्चर्यमित्यर्थः प्रतीयते । उक्तार्थे स्वीकृते तु पश्यति वदति शृणोतीत्युक्तवतो भगवत आश्चर्यं भवति । तथा सति ‘ ईदृशं पश्यति कश्चिदेनम् ’ इत्याश्चर्यमित्येवमाश्चर्यस्य विधेयतया निर्देशो भगवता कृतः स्यात् । ‘आश्चर्यवत्पश्यति ’ इत्यादिरचनया त्वाश्चर्यवदित्यस्य पश्यति वदति शृणोतीत्यत्रान्वयः प्रतीयते । तदनुसारेण पश्यतो वदतः शृण्वतश्चाऽऽश्चर्यं जायमानमत्र भगवता केवलमनूदितम् । अतः पूर्वोक्तार्थ एव सम्यक् । आश्चर्यो वक्ता कुशलोऽस्य लब्धा आश्चर्यो ज्ञाता कुशलानुशिष्टः ( का० १ । २ । ७ ) इति श्रुतावप्याश्चर्य इति वक्तुर्विशेषणेन वक्तुरेवाऽऽश्चर्यं प्रतीयते । आश्चर्यमस्यास्तीत्याश्चर्य इत्यर्शआद्यजन्त आश्चर्यशब्दस्तत्र पुंसि निर्दिष्टः ।

अत्र वदन्ति—श्रवणायापि बहुभिर्यो न लभ्यः ( का० १ । २ । ७ ) इत्यादिश्रुतिरत्रार्थत उपनिबद्धा दृश्यते । तत्र ‘ शृण्वन्तोऽपि बहवो यं न विद्युः ’ इत्यस्य द्वितीयचरणस्यार्थोऽत्र ‘ श्रुत्वाऽप्येनं वेद न चैव कश्चित् ’ इत्यनेनात्रत्यचतुर्थचरणेनोपनिबद्धः । तथा च तादृशश्रुत्यनुसारेणात्रार्थो निबद्धव्यो भवति । कश्चिदित्यत्राप्यर्थगर्भीकारेण ‘ एनं श्रुत्वाऽपि कश्चिदपि न वेद ’ इत्येवं सर्वसाधारण्येन निषेधरूपोऽत्रार्थस्तु श्रुतिविरुद्ध एव । श्रुतौ हि बहूनां वेदननिषेधेऽपि क्वचित्कस्यचिद्वेदनं भवत्येवेत्यर्थस्य संसूचनात् । सिद्धान्तविरोधश्च । कस्याप्यात्मज्ञानं न भवतीत्यर्थस्य केनापि दर्शनकारेणानङ्गीकारात् । अप्यर्थाध्याहारश्चात्रार्थे कल्पनीय इति क्लेशः । न चैवेति निपातसमुदायमसंभावनातिशयार्थकं गृहीत्वा ‘ श्रुत्वाऽप्येनं कश्चिद्वेदेति न संभावये ’ इति द्वितीयोऽर्थो यः प्रदर्शितस्तत्र यद्यपि वेदनसंभावनाया निषेधेऽपि वेदनस्यानिषेधात्क्वचित्कस्यचिद्वेदनस्य संमतिप्रदर्शनेन श्रुत्यर्थोऽनुगृहीतो भवति सिद्धान्तश्चाविरुद्धो भवति तथाऽपि नायमर्थोऽत्र भगवतोऽभिप्रेतः स्यात् ।

असंभावनातिशयार्थकत्वेनाप्रसिद्धस्य न चैवेति निपातसमुदायस्य निर्देशो भगवदुक्तौ न युज्यते कल्पयितुम् । तदपेक्षया ' श्रुत्वाऽप्येनं न विद्युर्बहवः ' इति ' श्रुत्वाऽप्येनं वेद कश्चिदेव ' इति वा स्पष्टोक्त्यैव श्रुत्यर्थसंग्रहो भगवता कृतः स्यात् ।

कस्तर्हि भगवदभिप्रेतोऽत्रार्थः । उच्यते—कश्चिदित्यनेनात्रानधिकारी पुरुषोऽनुसंधीयते । एनं श्रुत्वाऽप्यनधिकारी नैव वेत्तीत्यर्थः । अस्मिन्नर्थे नाप्यर्थाध्याहारः । नाप्यप्रसिद्धार्थकल्पना । नापि सिद्धान्तविरोधः । शृण्वन्तोऽपि बहवो यं न विद्युरिति श्रुतिश्च संगृहीता भवति । अनधिकारिणां बहुत्वात् । ननु ' कुशलोऽस्य लब्धा ' इति श्रुतिभागः ' आश्चर्यवत्पश्यति कश्चिदेनम् ' इत्यनेनात्रत्यप्रथमचरणेनानूदितः । अन्वयेनैव चायमनुवादः । श्रुतौ द्रष्टेत्यर्थकेन लब्धेति पदेन तथाऽत्र च पश्यतीत्यनेन दर्शनस्यैव विधानात् । यदि तु ' अनाश्चर्या न पश्यन्त्येनं बहवः ' इत्यत्र भगवतोक्तं स्यात्तर्हि व्यतिरेकेणायमनुवादः स्यादित्यन्यत् । तथा ' आश्चर्यो वक्ता ' इति श्रुतिभागः ' आश्चर्यवद्वदति तथैव चान्यः ' इत्यनेनात्रत्यद्वितीयचरणेनान्वयेनैवानूदितः । तथा ' श्रवणायापि बहुभिर्यो न लभ्यः ' इति भागः ' आश्चर्यवच्चैनमन्यः शृणोति ' इत्यनेनात्रत्यतृतीयचरणेनानूदितः । अयं त्वनुवादो व्यतिरेकेण । श्रुतौ बहुकर्तृकश्रवणाभावस्य, अत्र तु तद्वैपरीत्ययेन किंचित्कर्तृकश्रवणस्य विधानात् । एतत्सर्वमस्तु, किंतु 'शृण्वन्तोऽपि बहवो यं न विद्युः' इति श्रुतिभागः ' श्रुत्वाऽप्येनं वेद न चैव कश्चित् ' इत्यनेनात्रत्यचतुर्थचरणेन योऽनूदितः सोऽनुचित इवाऽऽभाति । अयं ह्यन्वयेनैवानुवादः । उभयत्र वेदनाभावस्यैव विधानात् । तत्र च श्रुतौ कर्तृत्वेन बहूनां निर्देशः । अत्र तु कश्चिदित्येवं कस्यचिदेवेति वैषम्यं दृश्यते । ' श्रुत्वाऽप्येनं विद्युर्नैव बहवः ' इत्यत्रोक्तं स्याच्चेद्वैषम्यं न स्यात् । अत्रोच्यते—यद्यपि ' शृण्वन्तोऽपि बहवो यं न विद्युः ' इति श्रुत्यर्थो भगवतः संमत एव तथाऽपि प्रकृतसंदर्भानुसारेण संबोध्यमर्जुनं कटाक्षीकृत्यात्र कश्चिदित्यनेन श्रुत्यर्थैकदेशस्यानुवादो भगवता कृतः । तथा हि—अर्जुनस्य जायमानो मोहः सप्रयोजनं नित्यानित्यवस्तुविवेकं श्रावयित्वैव निवारणीयो नान्यथा । तदुक्तम्—

उदात्तचेतसां मोहः सहसा नैव जायते ।
जातश्चेन्न तमुच्छेत्तुं प्रभुः साधारणो जनः ॥

युक्तिप्रयुक्तिदृष्टान्तप्रमाणानि प्रयोजनम् ।
श्रीकृष्ण एवार्जुनस्य शक्तो मोहापसारणे ॥ इति ।

नित्यानित्यवस्तुविवेकेन च भीष्मादिष्वात्मनो नित्यत्वेन युद्धे कृतेऽपि विनाशाभावाद्देहस्य त्वनित्यत्वेन युद्धेऽकृतेऽपि विनाशस्यापरिहार्यत्वादशोच्यत्वेन युद्धस्य युद्धप्रवृत्तिप्रतिबन्धकस्य मोहस्य निवारणेऽपि प्रतिबन्धकान्तरं तत्र प्राप्नोति । कृतेऽपि युद्धे जयप्राप्तावपि देहविनाशस्यावर्जनीयत्वाद्राज्यसुखं स्थिरं नैव स्यादिति बुद्धयोत्पन्नं राज्यविषयकं वैराग्यं तत्र प्रतिबन्धकान्तरम् । एवं च प्रथमप्रतिबन्धकनिवारणमिष्टं यथा सिध्येत प्रतिबन्धकान्तरं चात्रानिष्टं यथा नोत्पद्येत तथा प्रयतनीयम् । यथा कस्यचिद्रोगविशेषस्य विषमेवौषधं देयतया प्राप्तं चेत्तत्र तस्य विषस्य रोगेणैव संबन्धो यथा जायेत यथा च तस्य प्राणेन संबन्धो न जायेत तथा तदौषधं रोगिणा ग्राहयति चतुरो वैद्यः । तदुक्तम्—

औषधं भवति रोगिणः क्वचित्क्ष्वेडमिश्रितमवश्यनिषेव्यम् ।
सेवयेत मतिमांस्तदौषधं प्राणवायुपरिपीडनवर्जम् ॥ इति ।

यथा वा बालानां जठरे जायमानजन्तुनाशार्थं कवस( कवसकुल्या )मौषधं दीयते । तत्र कवसस्य स्वल्पं भागं गुडगुटिकान्तर्गतं कृत्वा सा गुडगुटिका मुखान्तरजिह्वामूले निक्षिप्यते येन सा सद्यो गिलिता भवति । अन्यथा कवसं त्वचि संबद्धं कण्डूवतिशयोत्पादकमिति मुखे त्वचि संबन्धश्चेत्कण्डूवतिशयोत्पादनं स्यात् । यथा च ज्वरशमनौषधं गुडूच्यादि चूर्णं ( कोयनेल ) तत्रत्यकटुरसस्याप्रतीतयेऽभितः शर्करावगुण्ठितं कृत्वा स्वल्पगुटिकारूपेण सांप्रतं दीयते तद्वत् । एवं च—

उपादेया एव गुणा मता दोषपु स्वल्पस्वपि ।
दोषेषु धार्यं ताटस्थ्यं गुणेभ्यः स्वेष्टसाधनम् ।
नोप्यन्ते किं यवाः क्षेत्रे मृगाः सन्तीति जानता ।
भिक्षुकान्कल्पयन्तोऽपि पचन्त्येव हि तण्डुलान् ॥

एवं चात्र नित्यानित्यवस्तुविवेकस्तथा भगवता श्रावयितव्यो भवति यथा तेन केवलं भीष्मादिविषयकं शोच्यत्वं निवारयितव्यं नत्वर्जुनस्य स्वदेहे भोगानर्हत्वमुत्पादयितव्यम् । ननु स्वदेहे भोगानर्हत्वबुद्धिरावश्यिकैव । तां विना मोक्षप्राप्तेरसंभवादिति चेत् । सत्यमेतत् । वैराग्येण चित्तशुद्धयनन्तरं हि जायमानं वैराग्यं 'यदि

मामप्रतीकार०' इत्यनेन प्रदर्श्यमानं श्मशानवैराग्यवदौपाधिकम्। तथेदानीं नित्यानित्यवस्तुविवेकेन जायमानमप्यौपाधिकमस्थिरमेव स्यात्। चित्तशुद्ध्यभावात्। राज्यलोभाविष्टत्वेन चित्तस्याशुद्धत्वात्। यदीदानीं स्वकीयकौरवव्यतिरिक्तैः सह युद्धमुपस्थितं स्यात्तर्हि न कदाऽप्ययं ततः परावृत्तो भवेत्। अतोऽशुद्धे चित्ते सति जायमाना स्वदेहे भोगानर्हत्वबुद्धिरप्यौपाधिक्यस्थिरैव। तादृशी भोगानर्हत्वबुद्धिश्च बहिस्तथा दृश्यमानाऽप्यन्तर्भोगगर्भैव। अतः सा नैव मोक्षोपयोगिनी प्रत्युत मोक्षप्रतिबन्धिकैवेत्यतो नोत्पाद्यैव सा। तदुत्पत्तिप्रतिबन्धश्च नित्यानित्यवस्तुविवेकस्य स्वदेहेऽर्जुनेनानुसंधानाभावात्। तदननुसंधानंचानुसंधानस्य प्रयोजनाभावात्। प्रयोजनस्य मोक्षरूपस्याभावश्चाधिकाराभावात्। अधिकाराभावश्च स्वस्यार्जुनेन कथं ज्ञात इति चेदर्जुनमालक्ष्य 'श्रुत्वाऽप्येनं वेद न चैव कश्चित्' इति भगवदुक्त्या ज्ञायते। अथार्जुनेन स्वमालक्ष्यैवेदं भगवतोक्तमिति कथं निश्चितम्। प्रत्युत 'अत्र साक्षाद्भगवानेव वक्ता नत्वन्यो यः कश्चित्। भगवति च वक्तरि श्रोताऽऽत्मज्ञानेन कृतार्थः स्यादेवेति भगवताऽत्रान्य एव कश्चित्कटाक्षीकृतः स्यान्नाहम्' इत्यर्जुनस्य मतिः स्यादिति चेन्न। इत्थं ह्यर्जुनस्य मतिः स्याद्यत्र वक्तुर्भाषणेन श्रोतुर्मनसि न कश्चित्परिणामविशेषस्तत्र वक्तृश्रोत्रोरन्यतरत्र दोष आवश्यकः। प्रकृते तु भगवानेव वक्तेति न तत्र दोषः संभावनागन्धमर्हति। भगवद्भाषणेन च सद्य एवाऽऽत्मज्ञानं भाव्यम्। तत्तु यतो मम न जातमतो मय्येव कश्चिद्दोषः स्यात्। स चाधिकाराभाव एवेत्यतो मामुद्दिश्यैव 'श्रुत्वाऽप्येनं वेद न चैव कश्चित्' इति भगवतोच्यत इति। किमर्थं तर्हि नित्यानित्यवस्तुविवेको भगवतोच्यत इति चेत्। भीष्मादिविनाशसंभावनानिमित्तस्यार्जुनमनसि जायमानस्य शोकस्य निवारणायैव हि तथोक्तम्। तदेवाशोच्यत्वस्य कारणमवध्यत्वमात्मन उपसंहरति—देही नित्यमवध्योऽयमिति (२। ३०)। ततः 'स्वधर्ममपि चावेक्ष्य०' (२। ३१) इत्यारभ्य

'ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि' (२। ३८)

इत्यन्तमष्टश्लोकात्मकं स्वधर्मपुरस्काराख्यं चतुर्थं प्रकरणम्। पूर्वोक्तं कारणद्वयं यथा शोकनिवृत्तेः प्रदर्शितं तथा नैतत्तृतीयं शोकनिवृत्तेः कारणमुक्तम्। किंतु पूर्वोक्तकर्तव्यद्वयमध्ये द्वितीयस्य युद्धप्रवृत्तिरूपस्य कर्तव्यस्य कारणमेत-

त्प्रदर्शितं भगवता । युद्धं हि क्षत्रियस्यार्जुनस्य स्वधर्म इति तादृशस्वधर्मावेक्षणेन युद्धे प्रवृत्तिः साधिता भवति ।

ननु स्वधर्मावेक्षणेऽपि शोकनिवृत्तिमन्तरेण न साधीयसी युद्धे प्रवृत्तिरिति स्वधर्मावेक्षणेनात्रोक्तेन स्वकार्यसाधनाय शोकनिवृत्तिराक्षिप्यत इति स्वधर्मावेक्षणं शोकनिवृत्तेरपि कारणं संभवतीति चेन्मैवम् । आक्षेपासंभवात् । येन विना यदनुपपन्नं तदेव तेनाऽऽक्षिप्यते नेतरत् । तदुक्तम्—

अन्यथानुपपत्तिश्चेदाक्षिप्येत न चान्यथा ।
जलाहृत्या यथा पात्रं न तूशीरः कथंचन ॥ इति ।

प्रकृते च यद्यपि शोकनिवृत्तिमन्तरेण साधीयसी युद्धे प्रवृत्तिर्न संभवति तथाऽपि सामान्यतो युद्धे प्रवृत्तिसंभवोऽस्त्येव । तावन्मात्रेणापि स्वधर्मरक्षणं भवत्येवेत्यन्यथानुपपत्त्यभावान्न स्वधर्मावेक्षणेन शोकनिवृत्तेराक्षेपः । भगवताऽपि चास्मिन्स्वधर्मावेक्षणरूपकारणप्रतिपादके श्लोकाष्टके 'न विकम्पितुमर्हसि । 'धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यते' ( २ । ३१ ) इत्युपक्रम्य 'तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः' ( २ । ३७ ) 'ततो युद्धाय युज्यस्व' ( २ । ३८ ) इत्येवमुपसंहृतम् । कम्पनं चलनम् । 'कपि चलने' इति धातुपाठ उक्तम् । तच्च चलनं पूर्वसिद्धं युद्धान्निवर्तनं रथोपस्थोपवेशनादिकं शारीरम् । विशिष्टं चलनं विकम्पनं युद्धान्निवर्तनं कायिकं मानसं च । तादृशनिवर्तनानर्हत्वं च प्रवृत्त्यर्हत्वरूपमत्र स्वधर्मावेक्षणकार्यतया निबध्यते । विकम्पितुमित्यस्य शोचितुमिति तु नार्थः । कपिधातोस्तदर्थत्वाभावात् ।

अत्र वदन्ति—प्रकरणद्वयोक्तस्यात्रोपयोगो न भवेदिति संभावनयाऽस्य चतुर्थप्रकरणस्याऽऽरम्भः । आश्चर्यवत्पश्यतीत्यत्र यादृशो द्रष्टा वक्ता श्रोता वा कथितो न तादृश्यवस्थितिरर्जुनस्य । प्रत्युत श्रुत्वाऽप्येनं वेद न चैव कश्चिदित्यत्रोक्ताऽवस्थाऽर्जुने संदृश्यते । तथा च भीष्मादिषु वस्तुतो विद्यमानमप्यशोच्यत्वमर्जुनेन ज्ञातं न भवेदित्यतो द्वितीयप्रकरणोक्तमत्र नोपयुज्यते । तथा तृतीयप्रकरणोक्तमप्यत्र नोपयुज्यते । शोककारणस्य मरणस्य सर्वथाऽपरिहार्यत्वेऽपि यावच्छक्यं परिहारस्याऽऽवश्यकत्वात् । यथा—

मृत्युः कदाऽपि स्यादेवेत्येवं सत्यपि निश्चये ।
औषधं किं न सेवन्ते रुग्णा रोगनिवृत्तये ॥

तथा प्रकृते भीष्मादीनां मृत्योर्यदा कदाऽप्यवश्यंभावित्वेऽपि तस्य किंचित्कालपर्यन्तं परिहारसंभवो युद्धान्निवर्तनेन स्यादेवेति । अतश्चतुर्थप्रकरणस्याऽऽरम्भः। मा भूद्भीष्मादयोऽशोच्या इति ज्ञानमर्जुनस्य भवतु वा तस्य मतिर्यावच्छक्यं परिहारः कर्तव्य इति तथाऽपि युद्धान्निवर्तनमनुचितमेव । सर्वैरेव हि प्राणिभिः स्वधर्मेण स्वोत्कर्षप्राप्तये प्रयतितव्यमेव । राज्यसुखलिप्सया युद्धे प्रवृत्तिश्च क्षत्रियाणां स्वधर्मः । तत्रापि कदाचित्प्रथमत एवाप्रवृत्तिर्भवतु । प्रवृत्त्यनन्तरं ततो निवृत्तिस्तु सर्वथाऽनुचितैव । एवं विजानन्नप्ययं विचक्षणोऽर्जुनो यतश्चेदानीं युद्धान्निवृत्तोऽभूत्तस्य कारणं केवलं स पापभ्रमाद्भीतः। यतश्च—

पापमेवाऽऽश्रयेदस्मान्हत्वैतानाततायिनः ( १ । ३६ )
कथं न ज्ञेयमस्माभिः पापादस्मान्निवर्तितुम् । ( १ । ३९ ।
अहो बत महत्पापं कर्तुं व्यवसिता वयम् ।
यद्राज्यसुखलोभेन हन्तुं स्वजनमुद्यताः ( १ । ४५ )

इति तेन स्पष्टमेवोक्तम् । सा पापभीतिरर्जुनस्य निराकरणीया । निराकरणं चात्र सुकरमेव । यतः स पापभ्रमः । नतु वस्तुतस्तत्र पापम् । नहि युद्धं स्वधर्ममाचरतः शत्रुविघातेऽपि कदाऽपि कस्यापि पापं भवति । अत एव पूर्वमनेनार्जुनेनानेके शत्रवो युद्धे हताः । तदानीं पापशङ्काऽपि तस्य नोद्भूत् । शत्रुवधात्पातकं स्याच्चेत्तर्हि स्वकीयवध इव परकीयवधेऽपि तदुत्पद्येत । वधस्याविशेषात् । यत्र पातकमुत्पद्येत तत्र स्वकीयपरकीयादिवध्यविशेषः पातकतारतम्यप्रयोजकः स्यादित्यन्यत् । ईदृशं च विज्ञानं प्रेक्षावतोऽर्जुनस्य नाऽऽसीदिति न शक्यते कल्पयितुम् । किंतु प्रत्यक्षतो भीष्मादीन्युद्धार्थं पुरोवस्थितान्दृष्ट्वा केवलं तिरोहितमिति केवलं तादृशविज्ञानस्मारकसंस्कारोद्बोधाय युद्धस्य स्वधर्मत्वमत्र ज्ञापितं

'स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि '

इत्यनेन । अग्रे चैतत्प्रकरणशेषे 'सुखदुःखे समे' इत्यनेन युद्धे शत्रुवधेऽपि नैव पातकमिति स्पष्टमेव सहेतुकं भगवता प्रतिपादितमेव । न विकम्पितुमर्हसीत्यत्र विकल्पनं च विशिष्टं कल्पनम् । कम्पनं वेपथुः । स च 'वेपथुश्च शरीरे मे' ( १ । २९ ) इति पूर्वमुक्तः । तत्र विशेषश्च स्वोत्कर्षप्रापकादपि स्वधर्मादपि च युद्धान्निवृत्तिजनकत्वरूपः । सोऽपि च—

'न काङ्क्षे विजयं कृष्ण न च राज्यं सुखानि च' ( १ । ३२ )

'न योत्स्ये' ( २ । २९ ) इत्यत्र पूर्वमुक्तः । एवंभूतं विकम्पनं च तव स्वधर्मदृष्ट्या नैव योग्यं भवति । तथा चास्थान एवायं वेपथुरित्यर्थः । वेपथोरयोग्यत्वकथनेन वेपथुकालिकानां वेपथुसमानाधिकरणानां रोमहर्षगाण्डीवस्रंसनादीनामप्ययोग्यत्वमुक्तं भवति । अर्जुनेन हि पूर्वं मनसीत्थं गृहीतम्—'अस्मिन्युद्धे स्वकीयवधजन्यपातकोत्पत्त्या श्रेयो न स्यात् । तथा राज्यसुखादित्यागेन युद्धान्निवृत्तस्य तु मे श्रेयो भवेत् । तत्रापि 'अशस्त्रमप्रतीकारं मां कौरवा हन्युश्चेदधिकमेव श्रेयो भवेत्' इति । तत्र युद्धे स्वकीयवधेऽपि नैव पातकमित्येतच्चतुर्थप्रकरणस्थप्रथमश्लोकपूर्वार्धेन

'स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि'

इत्यनेन सूचितम् ।

'धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यते'

इत्युत्तरार्धेन च युद्धादन्यतः क्षत्रियस्य न श्रेय इत्युक्त्या राज्यसुखादित्यागेन धृतेऽप्यौदासीन्ये श्रेयो नैव भवेदिति सूचितम् । द्वयमप्येतदुपपत्त्याऽर्जुनस्य ज्ञापनीयम् । तत् 'यदृच्छया' ( २ । ३२ ) इत्यादिना श्लोकसप्तकेनोपपत्त्या ज्ञाप्यते । तत्र धर्म्यं युद्धं हि ननु क्षत्रियाणामुद्घाटितं स्वर्गद्वारमेव । तादृशं च तद्भाग्यशालिनामेव क्षत्रियाणामुपस्थितं भवति । तव च भाग्यशालित्वादेव तादृशमुपस्थितमपि त्वमज्ञानेन परिहातुमिच्छसि । चित्रमेतत् । तथा चेदृशाद्युद्धात्तव श्रेयः स्यादेवेति 'यदृच्छया' ( २ । ३२ ) इति श्लोकेन सूचितम् । अथास्तु युद्धाच्छ्रेयः । किंतु युद्धत्यागेऽपि 'यदि मा० क्षेमतरं भवेत्' ( १ । ४६ ) इत्युक्तरीत्या श्रेयो भवेत् । उभयथाऽपि श्रेयश्चेदलं युद्धेन स्वकीयजनप्राणहानिकरेणेति मन्वानमर्जुनं प्रति प्रत्युतोपस्थितस्याप्येतादृशस्य त्यागे स्वधर्मत्यागात्पातकावाप्तिः कीर्तेरेतावत्कालपर्यन्तं संपादिताया हानिश्च प्रसज्येतेति 'अथ चेत्' ( २ । ३३ ) इति श्लोकेनोक्तम् । नैतावदेव किंतु दुष्कीर्तिरामलयं चिरस्थायिनी स्यात् । दुष्कीर्तिश्च मरणादधिकदुःखदायिनी । तथा च

'धार्तराष्ट्रा रणे हन्युस्तन्मे क्षेमतरं भवेत्'

इत्येवं मरणं सोढुं प्रवृत्तोऽपि त्वं दुष्कीर्तिं सोढुं नार्हसीति 'अकीर्तिं चापि' (२।

३४ ) इत्यनेन सूचितम् । ततः 'भयाद्रणादुपरतं' ( २ । ३५ ) इति श्लोकद्वयेन दुष्कीर्तेः स्वरूपं प्रतिश्रावितं जानतोऽप्यर्जुनस्य तत्परिहाराय । अथास्तु युद्धे प्रवृत्त्या स्वधर्मत्यागजन्यपातकस्याभावः, किंतु श्रेयो भवेदेवेति नियमो नास्ति । राज्यसुखं हि जय एव स्यान्नतु पराजये । तथा चाकरणे प्रत्यवायश्रवणमात्रादेव किं युद्धे प्रवर्तितव्यमिति मन्वानमर्जुनं प्रति धर्म्यं युद्धं ह्युभयथाऽपि सुखकरमेव जय ऐहिकं सुखं पराजये पारलौकिकमिति 'हतो वा प्राप्स्यसि' ( २ । ३७ ) इत्येतेनोक्त्वा युद्धायोत्तिष्ठेत्युच्यते । अयं हि न विधिः, किंतु पूर्वसिद्धानुवादः । प्रतिबन्धनिवृत्तिमात्रमत्र भगवता कृतम् । ततो युद्धस्य स्वधर्मत्वेऽपि तत्र स्वजनवधे पातकं स्यान्न वेति संशयमर्जुनस्य मनसि वर्तमानं युद्धप्रवृत्तिप्रतिबन्धकं मत्वा तं दूरीकर्तुं भावनाविशेषं प्रदर्शयन्युद्धे प्रवर्तयति भगवान् 'सुखदुःखे' ( १ । ३८ ) इत्यनेन श्लोकेन। सुखदुःखयोः समीकरणं तथा लाभालाभयोस्तथैव जयपराजययोश्च समीकरणं कृत्वा युद्धं क्रियते चेत्तत्र स्वजनवधेऽपि पातकोद्भवो नैव भवति । ननु सुखदुःखयोः परस्परविरुद्धस्वभावयोः समीकरणं कथं संभवति । कथं च तस्मिंश्च सति वधादपि पातकानुद्भव इति चेत् । उच्यते—सुखं दुःखं चेति द्वयमपि भावनामयमेव । नतु वस्तुतन्त्रम् । अन्यथा ग्रीष्म इव हेमन्तेऽपि चन्दनः शैत्यद्वारा सुखकारकः स्यात् । हेमन्त इव ग्रीष्मेऽपि शैत्यद्वारा दुःखजनकः स्यात्। तदुक्तम्—

सुखं वाऽप्यथवा दुखं वस्तुतन्त्रं न कर्हिचित् ।
असंशयं तद्विज्ञेयं प्राणिनां भावनामयम् ॥ इति ।

भावनामयोऽर्थश्च पुरुषाधीनः । तथा च तत्र सुखं दुःखरूपेण भावयितुं दुःखं वा सुखरूपेण भावयितुं युज्यते । तदप्युक्तम्—

परिवृत्तेर्विकल्पस्य तथा विधिनिषेधयोः ।
योऽर्थो न पुरुषाधीनस्तत्र नावसरः क्वचित् ॥ इति ।

तथा चात्र भावनामयत्वेन पुरुषाधीनयोः सुखदुःखयोः साम्यमन्यतरस्य परिवृत्त्या संपादनीयं भवति । नन्वत्र परिवृत्तिः कार्यद्वारा स्वरूपतो वा । उभयथाऽपि प्रकृते नोपयुज्यते । तत्र सुखकार्ये हि सुखसाधनीभूतेऽर्थेऽनुकूलभावनया पुनः प्रवृत्तिः । तस्मिंश्चार्थे प्रतिकूलभावनया निवृत्तिः कल्प्यते चेदीदृशी परिवृत्तिः प्रकृतेऽनुपयुक्तैव संदृश्यते । राज्यसुखार्थं या सांप्रतं युद्धे प्रवृत्तिः

सिषाधयिषिता सैव न स्यात् । तथा दुःखकार्ये दुःखसाधनीभूतेऽर्थे प्रतिकूल-भावनया निवृत्तिः । तस्मिंश्चार्थेऽनुकूलभावनया प्रवृत्तिः प्रकल्प्यते चेदीदृश्यपि परिवृत्तिः प्रकृतेऽनुपयुक्तैव भवति । यतोऽत्र—

'अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि' (२।३३)

इत्यादिना श्लोकचतुष्टयेन संग्रामाकरणरूपोऽर्थः स्वधर्मत्यागः कीर्तिहानं पापावाप्तिरकीर्तिप्राप्तिश्चेत्येवं दुःखसाधनतया भगवता प्रतिपादितः । तस्मिंश्च संग्रामाकरणरूपेऽर्थेऽनुकूलभावनया सुखसाम्यं संपाद्य पुनः प्रवृत्तिः स्याच्चेदीदृश्यपि परिवृत्तिः प्रकृतेऽनुपयुक्तैव । यतोऽत्र साम्यसंपादनम् 'ततो युद्धाय युज्यस्व' इत्येवं युद्धप्रवृत्त्युपयोगित्वेन निर्दिश्यते । तथा च कार्यद्वारा जायमानस्य द्विविधस्यापि सुखदुःखसाम्यस्य प्रकृते नोपयोगः । तथा स्वरूपतः साम्यस्यापि नैव प्रकृत उपयोगः । अनुकूलवेदनीयं सुखमिति हि सुखस्वरूपम् । तत्र परिवृत्त्या यदि तत्सुखकाले प्रतिकूलत्वेन वेद्यते चेत्तस्य दुःखेन सह साम्यं भवेत् । किंतु संग्रामसाध्यत्वेनाग्रे यत्संभावितं राज्यसुखं तद्यदि प्रतिकूलवेदनीयत्वेन संभाव्यते चेदिदानीं सिषाधयिषिता युद्धे प्रवृत्तिर्न स्यात् । तथा दुःखस्वरूपे परिवृत्त्या सुखसाम्यसंपादनमपि नैवोपयुक्तं भवेत् । प्रतिकूलवेदनीयं दुःखमिति हि दुःखस्वरूपम् । तत्र परिवृत्त्या यदि तद्दुःखकालेऽनुकूलवेदनीयं भवेत्तर्हि तस्य सुखेन सह साम्यं भवेत् । किंतु प्रकृते भगवता संग्रामाकरणं दुःखसाधनमिति यत्परिजिहीर्षितं तन्न साधितं भवेत् । संग्रामाकरणाज्जायमाने दुःखेऽनुकूलत्वेन भावनया संग्रामाकरणस्य तदवस्थत्वात् । एवं दुःखप्रतियोगिकं सुखानुयोगिकं तथा तद्वैपरीत्येन सुखप्रतियोगिकं दुःखानुयोगिकं चेति द्विविधं साम्यं पुनः प्रत्येकं कार्यतः स्वरूपतश्चेति द्विविधमिति संकलनया चतुर्विधमपि परिवृत्तिसाध्यं साम्यमत्र नोपयुज्यते । अतश्च कीदृशं साम्यमत्र भगवता विवक्षितं स्यात् ।

उच्यते—स्वरूपतः साम्यापेक्षया कार्यतः साम्यस्य जघन्यत्वात्प्रकृतानुपयोगाच्च नेह तद्विवक्षितं भगवता । स्वरूपतः साम्यमपि च पूर्वोक्तप्रकारेण परिवृत्तिसाध्यं प्रकृतानुपयोगादेव न विवक्षितम् । किंत्वनुकूलवेदनीयं सुखमिति सुखस्वरूपेऽनुकूलत्वांशप्रमोषेण तथा प्रतिकूलवेदनीयं दुःखमिति दुःखस्वरूपे प्रतिकूलत्वांशप्रमोषेण यदवशिष्टं 'वेदनीयम्' इत्येतावन्मात्रमुभयोः स्वरूपं

तत्सममेवेत्येतादृशं साम्यमत्र विवक्षितं भगवता । एवं लाभालाभयोरपि । इष्टप्राप्तिर्लाभस्तदभावोऽलाभः । तत्रेष्टत्वांशस्य प्रमोषः । अलाभ इष्टत्वांशस्याभावांशस्य च प्रमोषः । ततः साम्यम् । तथा जयाजययोरपि । जय उत्कर्षप्राप्तिः । अपकर्षप्राप्तिरजयः । तत्रोत्कर्षांशस्यापकर्षांशस्य च प्रमोषेण साम्यमुपपादनीयम् । अत्र युद्धाय युज्यस्वेत्युक्तम् । तत्र युद्धे प्रवृत्तेः पूर्वसिद्धत्वात्केवलं तत्र प्रतिबन्धिका याऽर्जुनस्य मनोवृत्तिः सा निराकरणीया । अतश्च 'समे कृत्वा युद्धाय युज्यस्व' इत्युक्त्या समीकरणेन प्रतिबन्धनिरासो भविष्यतीति भगवतोऽभिप्रायोऽवगम्यते । एवंचात्र युद्धाय युज्यस्वेति लोडर्थो विधिः सविशेषणे हीतिन्यायेन तद्विशेषणीभूते समीकरणे पर्यवस्यति । प्रतिबन्धकं च स्वजनवधेन संभाव्यमानं पातकमवशिष्टम् । अन्यच्च प्रकरणद्वयेन दूरीकृतम् । 'नैवं पापमवाप्स्यसि' इत्येवमत्रत्यचतुर्थचरणेन भगवता स्पष्टमेव तथोक्तम् ।

अथ युद्धे स्वजनवधेऽपि यत्पातकं नोत्पद्यते तत्र सुखदुःखादिसमीकरणं कथमुपयुज्यते तदुच्यते । युद्धे हि शत्रुहिंसातः किल पापसंभवः । हिंसा च 'न हिंस्यात्सर्वा भूतानि' इति शास्त्रीयनिषेधप्रतियोगिनी भूत्वा तादृशनिषेधसाहाय्येन स्वप्रयोजके पापं जनयति । 'अग्नीषोमीयं पशुमालभेत' इत्येवं विधिना पुरस्कृता तु तादृशविधिसाहाय्येन स्वप्रयोजकेऽवान्तरापूर्वमुत्पादयति । तत्र च तादृशेन धर्म्येण विधिनोन्मूलितः स निषेध इति नैव तस्य साहाय्यप्रदाने सामर्थ्यम् । एवं च सामान्यतः प्रवर्तमानो न हिंस्यादिति निषेधो रागतः प्राप्तामेव हिंसां विषयी करोति नतु कथमपि धर्म्यां हिंसाम् । एवं हिंसाभूयिष्ठमपि युद्धं क्षत्रियाणां स्वधर्म इति तत्र जायमाना हिंसा धर्म्यैवेति तामप्याक्रमितुं न हिंस्यादिति निषेधो नोत्सहते । तदुक्तम्—

यश्च यज्ञे पशुवधः संग्रामे च रिपोर्वधः ।
न धर्मात्स बहिर्भूतो न तस्मादेनसो जनिः ॥ इति ।

किंतु यज्ञे वा युद्धे वा केनापि द्वारेण लेशतोऽप्यधर्मस्य प्रवेशो यदि स्यात्तर्हि सद्य एव च्छिद्रान्वेषीव न हिंस्यादिति निषेधस्तमवलम्ब्य तत्रत्यां हिंसां स्वात्मसात्कुर्यात् । तथा च दूर एव श्रेयःकथा । प्रत्युत तत्र पापमधोगतिं नयेत् । अतः केनापि प्रकारेणाधर्मस्य प्रवेशो यथा न भवेत्तथा यज्ञे युद्धे च प्रयतितव्यम् । तदप्युक्तम्—

प्रक्षिप्येवाञ्जनं चक्षुष्यप्रमत्तः सदा भवेत् ।
यदि किंचिदधर्म्यं चेत्तत्रैनो महदुद्भवेत् ॥ इति ।

तादृशः प्रयत्नश्च युद्धकाले सुखदुःखादिद्वंद्वत्रयसमीकरणम् । इतरथा स्वधर्ममूलस्य मर्यादाभङ्गस्य भूयसांऽशेन संभवो दुर्निवारः ।

सुखस्य दुःखस्य दशातिरेको विचारशक्तिं शिथिली करोति ।

इति न्यायात् । किंच युद्धात्प्राङ् मनसि स्थिताऽपि मर्यादा प्रवृत्ते युद्धे न स्थिरपदा भवति । तदानीं तु येन केनापि प्रकारेण स्वेष्टसाधने प्रवृत्तिर्दृश्यते विचारशीलानामपि । स्वभावतश्चञ्चलस्य मनसो दुर्निग्रहत्वात् । पूर्वोक्तरीत्या सुखदुःखादिद्वंद्वसाम्ये तु सुखदुःखयोर्विरुद्धस्वरूपयोरपि न तारतम्यम् । किमुताविरुद्धस्वरूपयोः सुखतदतिरेकयोस्तथा दुःखतदतिरेकयोः । ततश्च मर्यादाभङ्गशङ्कया अप्यभावेन पापबीजमनवसरग्रस्तं भवति । एतत्सर्वं मनसिकृत्यात्र 'सुखदुःखे समे कृत्वा० ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि' । इति भगवतोक्तमिति । एवं स्वधर्मपुरस्काराख्येऽस्मिंश्चतुर्थे प्रकरणे युद्धस्य धर्म्यत्वेन तत्र स्वजनवधेऽपि पातकानुद्भवः साधितः । अग्रे च निष्कामकर्मयोगाख्ये पञ्चमे प्रकरणे पातकानुद्भवः सम एव । इयांस्तु विशेषः—स्वधर्मपुरस्कार उक्तरीत्या पातकानुद्भवेऽपि कर्मकर्तृत्वाभिमानः फलभोक्तृत्वं फलाभिलाषेण प्रवृत्तिर्युद्धेतरकालेऽनुकूलत्वप्रतिकूलत्वांशाप्रमोषेण सुखदुःखभोगश्च वर्तते । निष्कामकर्मयोगे तु तत्किमपि नास्ति ।

तत्र केवलं कर्तृत्वाभिमानफलाभिसंधिरहितं कर्म कर्तव्यमिति प्रतिपादितम् । तच्च न साक्षाच्छोकनिवृत्तेः कारणमिति प्रतिपादितम् । नापि युद्धप्रवृत्तेः । किंतु स्वधर्मावेक्षणरूपेण तृतीयेन कारणेन जायमानायां युद्धप्रवृत्तौ तत्र समुत्थितानिष्टशङ्कानिरासकम् । तद्द्वारा च पूर्वोक्तस्य स्वधर्मावेक्षणरूपस्य तृतीयस्य कारणस्योपोद्बलकम् । अत्रेदं बोध्यम्—

यथा सिंहादयो, ध्वान्तं, कण्टकाः पूतिगन्धिता ।
दुर्गद्वारि समादृष्टा आरुरुक्षोर्निवर्तकाः ॥
भीष्मादिनाशो, मरणमंहो भोगा असृग्युताः ।
संभाविता अर्जुनेन तथा युद्धान्निवर्तकाः ॥

तथा हि—यथा दुर्गस्वामिना हिताकाङ्क्षिणा दुर्गमारोहयेत्कः कश्चिद्दुर्ग-

मारुरुक्षुर्दुर्गद्वाराद्बहिः समीप एवावस्थितोऽन्तर्दत्तदृष्टिरारोहणाय कृतं सोपानमार्गं तमसाऽऽवृतत्वादपश्यन्नारोहणमशक्यं मन्यते । द्वारस्यान्तरप्रदेशं च पुरतः सिंहव्याघ्रादियुतमन्तर्गाढान्धतमसावृतं संभावितकण्टकपाषाणविषमं तमसि वसतां टिट्टिभादिक्षुद्रपक्षिणां विष्ठादिभिर्दुर्गन्धितं च संभावयन्नारोहणमयोग्यमिति च मन्यते । तं च तज्ज्ञः कश्चित्प्रतिबोधयते—अन्ततोऽस्त्येव सुलभः सोपानमार्गः । नैव च तत्र द्वारि पुरतो दृश्यमानाः सिंहादयश्चेतनाः । किंतु सिंहव्याघ्रादिप्रतिकृतयः केवलं तत्र प्रस्थापिताः । अन्धकारस्तु नान्तरीयकतया सोढव्य एव भवति । तत्र नियोजिताश्चाऽऽरक्षिणः संमार्जनादिभिर्मार्गं शोधयन्त्यतो नैव तत्र पादवेधककण्टकादिसंभवः । दुर्गन्धस्तु संभवन्नपि नैवेन्द्रियविषयतां नेयः । तत्र मनोवृत्तिर्न विधेया । केवलमारोहणमात्रमवश्यकर्तव्यतया प्रपश्यता त्वया मुष्टौ नासिकां प्रधार्य गन्तव्यमिति । प्रकृते तु तादृशसोपानस्थानीयोऽर्जुनस्य जायमानो मोहः । स च यावन्न ज्ञातस्तावदारोहणस्थानीयस्य युद्धस्याशक्यताप्रतीतिः । तज्ज्ञाने त्वक्यताप्रतीतिर्निवर्तते । सिंहव्याघ्रादिस्थानीयश्च भीष्मादिविनाशः तत्र च नेमे सिंहव्याघ्राः किंतु तत्प्रतिकृतयः । तथा प्रकृते न वस्तुतो भीष्मादिविनाशः किंतु नाशप्रतिकृतिरियम् । आत्मनो नित्यत्वात् । तेन च सिंहव्याघ्रादिभीतिर्भीष्मादिविनाशभीतिश्च निवर्तते । ततस्तन्मूलिका प्रतीयमाना दुर्गारोहणस्य युद्धस्य चायोग्यता निवर्तते । अन्धकारस्थानीयश्च प्रकृते स्वजनप्राणवियोगः । स चापरिहार्यत्वात्सोढव्य एव भवतीति तन्मूलिकाऽपि प्रतीयमाना दुर्गारोहणस्य युद्धस्य चायोग्यता निवर्तते । कण्टकस्थानीयं च प्रकृते पातकम् । नियोजिता आरक्षिणश्च यथा तत्र कण्टकादयो न वेधं जनयेयुस्तथाऽहर्निशं प्रयतन्ते । प्रकृतेऽपि च युद्धस्य धर्म्यत्वात्तत्र वधनिमित्तं पातकं नैव संयोजयन्ति कर्मनिरीक्षकाः परमेश्वरनियोजिता अधिकारिणः । दुर्गन्धस्थानीयाश्चात्र रुधिरप्रदिग्धा भोगाः । तत्र च कर्तव्यकर्मैकदृष्ट्या दुर्लक्ष्यमेव कर्तव्यमिति ।

अत्रायं क्रमः—युद्धवैमुख्याख्ये प्रथमे प्रकरणेऽर्जुनेन प्रथमं भीष्मादयः शोच्यत्वेनाऽऽलोचिताः । शोच्यत्वालोचनोत्तरं शोकोद्भवः । ततः पातकानुसंधानपूर्वकं राज्यादिभोगेषु वैराग्यम् । ततो युद्धात्पराङ्मुखत्वं प्रदर्शितम् । एतत्सर्वं भगवता प्रकरणचतुष्टयेन निराकृतम् । तत्र शोच्यत्वालोचनाख्ये द्वितीये प्रकरणे शोच्यत्वनिरासः कृतः । ततोऽर्थादेव शोच्यत्वमूलकस्य शोकस्य निरासः । ततः शोकमूलकस्य वैराग्यस्य निरासः । ततो वैरा[illegible]

निरासः। शोकराहित्याख्ये तृतीये प्रकरणे त्वस्तु नाम शोच्यत्वं तथाऽपि शोको न युक्तः। ततः शोकमूलकस्य वैराग्यस्य निरासः। ततो वैराग्यमूलकस्य पराङ्मुखत्वस्य निरासः। स्वधर्मपुरस्काराख्ये चतुर्थे प्रकरणे त्वस्तु नाम शोच्यत्वम्। अस्तु नाम तन्मूलकः शोकः। तथाऽपि युद्धस्य स्वधर्मत्वात्तत्र पातकानुसंधानं वैराग्यं च न युक्तम्। ततस्तन्मूलकस्य पराङ्मुखत्वस्य निरासः। निष्कामकर्मयोगाख्ये पञ्चमे प्रकरणे त्वस्तु नाम शोच्यत्वम्। अस्तु नाम तन्मूलकः शोकः। अस्तु नाम तन्मूलकं पातकानुसंधानपूर्वकं वैराग्यम्। तथाऽपि कर्मणः सकाशात्पराङ्मुखत्वं नैव कर्तुं शक्यमिति प्रदर्शितम्। कर्म च तत्र प्रकृतत्वात्पूर्वमारब्धत्वाद्युद्धरूपमेवेति भगवतो गूढाशयः।

अत्र वदन्ति। ननु यथा—

सर्वव्याख्याविकल्पानां द्वयमिष्टं प्रयोजनम्।
पूर्वत्रापरितोषो वा विषयव्याप्तिरेव वा॥

इत्यन्यत्रोच्यते तथा प्रकृते यत्कारणचतुष्टयमुक्तं तत्र किमभिप्रेतं स्याद्भगवतः पूर्वत्रापरितोषो विषयव्याप्तिर्वा। नाऽऽद्यः पक्षः। यश्चायं वक्तुः स्वोक्तावपरितोषः स तादृशोक्त्यनन्तरं वक्त्राऽवगतः पूर्वं वा। द्विविधोऽप्यत्र न संभवति। पूर्वमेवापरितोषो वक्त्राऽवगतश्चेत्सा तदुक्तिस्तत्र श्रोतृजनवञ्चनायैव भवति। तदुक्तम्—

स्वस्यैवासंमतो योऽर्थः स वक्त्रा प्रोच्यते यदि।
न तत्त्वावगतिस्तस्मात्केवलं श्रोतृवञ्चनम्॥ इति।

प्रकृते च भगवतः श्रोतृवञ्चनार्था प्रवृत्तिः शशशृङ्गायते। यत्र च स्वोक्त्यनन्तरं तत्रापरितोषो वक्त्राऽवगम्यते न ततः प्राक् तत्र वक्तुरज्ञानं शरणम्। तदप्यत्र न संभवति। भगवति लेशतोऽप्यज्ञानासंभवात्। नापि द्वितीयः पक्षो विषयव्याप्तिरूपोऽत्र प्रकल्पयितुं शक्यते। यत्र श्रोतारो विरतेतरव्यापाराः शान्तमनसस्तत्त्वजिज्ञासया श्रोतुं प्रवृत्तास्तत्र वक्तुर्यथाकामं विषयव्याप्तिर्भवतु। प्रकृते तु युद्धारम्भे शस्त्रसंपाते प्रवृत्ते विषमसमये यावदावश्यकं तावदेव वक्तव्यं भवति नेषदप्यधिकम्। तथा चात्र किमर्थं कारणचतुष्टयोक्तिरिति चेत्।

उच्यते—नात्राऽऽवश्यकार्थादतिरिक्तं किंचिदपि भगवतोक्तमिति मन्तव्यम्। मोहनिवृत्तिपूर्वकयुद्धप्रवृत्तिरूपस्य भगवदुद्दिष्टार्थस्य यावच्छक्यं शैघ्र्येण संपाद-

नीयत्वात् । नूनं तदानीं ' तदवस्थमर्जुनं प्रेक्षमाणानां स्वीयानां परकीयाणां च कीदृशी भावना स्यात् ' इत्येवमाशङ्कमानेनेतस्ततो योधान् संपश्यता भगवता द्रुतवृत्त्यैवायं संवादः प्रायः साधितः स्यात् । तादृशवृत्त्या च जायमानोऽयं संवादस्तदानीं कियता कालेन निष्पन्नः स्यादित्येवं विचारे क्रियमाण एवं संभाव्यते—इदानीं मध्यमवृत्त्या पठ्यमानेयं कृत्स्ना गीता पादोनं घटीत्रयं व्याप्नोति । द्रुतवृत्त्या पठिता चेच्चतुर्थांशहीनं तावन्तं कालं व्याप्नुयात् । स च घटीद्वयकल्पः । किंच तदानीं जायमानः संवादस्तं तथा कृपयाऽऽविष्टं० इत्येतच्छ्लोकसदृशैर्व्यासोक्तिमयैः श्लोकैः श्रीभगवानुवाच, अर्जुन उवाच, इत्येतैर्वाक्यैर्विरहित एवेति सर्वथा तदानीमयं श्रीकृष्णार्जुनसंवादो घटीद्वयादूनेनैव कालेन जातः स्यादिति मन्ये । पश्यत तावत्क्वचिदर्जुनेनापृष्टस्यापि भगवतोऽर्जुनमनोगतं प्रश्नमुन्नीयैव केवलं तमनूद्य तदुत्तरदाने प्रवृत्तिः । एतादृश्या च प्रवृत्त्या भगवतो विलम्बासहत्वमनुमीयते । अत्रोदाहरणम्—' अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम् ' इति । तत्र चेदृशः प्रश्नः संभवति—
' अर्जुन उवाच ।

कथमेते नित्यजातास्तथा नित्यमृता इव ।
जीवाः सर्वत्र दृश्यन्ते शोच्यन्ते च तथाऽपरैः ' ॥ इति ।

उत्तरं च श्रीभगवानुवाच—

' यद्यप्येवं नित्यजातं नित्यं वा मन्यसे मृतम् '

इत्यादि । क्वचित्त्वर्जुनमनोगतं प्रश्नमुन्नीय तस्यानुवादमकृत्वैव भगवतः प्रवृत्तिरुत्तरदाने दृश्यते । सा सूक्ष्मार्थदर्शिभिर्गीतापाठकैः पण्डितैः स्वयमुन्नेया ।

प्रकृतमनुसरामः । यदेतस्मिन्द्वितीयेऽध्याये ' अशोच्यानन्वशोचस्त्वम् ' इत्यारभ्याध्यायपरिसमाप्तिपर्यन्तं भगवता स्वोद्दिष्टार्थसिद्ध्यर्थं नित्यानित्यवस्तुविवेकः ( १ ) विनाशस्यापरिहार्यत्वं ( २ ) स्वधर्मावेक्षणं ( ३ ) निष्कामकर्मयोगश्च ( ४ ) इत्येवं चत्वारि कारणान्यर्जुनं प्रत्यभिहितानि तेषां सर्वेषां कथमावश्यकत्वं तत्प्रदर्श्यते—अर्जुनस्य शोकानिवृत्तेर्युद्धे प्रवृत्तिश्चेति द्वयमत्र सिषाधयिषितम् । तच्च द्वयं नैकयत्नसाध्यम् । द्वयोरर्थयोरविनाभावे हि सति तत्रैकस्मिन्नर्थे साधिते न द्वितीयस्यार्थस्य सिद्ध्यये यत्नान्तरमास्थेयं भवति । अविनाभावश्च क्वचिद्द्वयोर्मिथः संभवति । यथाऽऽम्रवृक्षे फलच्छाययोः ।

तत्राऽऽम्रे फलार्थे निर्मिते छायाऽनूत्पद्यते । छायार्थे वा निर्मिते फलमनूत्पद्यते । तत्रैकस्मिन्नर्थे सिद्धे सत्यपरोऽर्थ इष्टोऽनिष्टो वाऽवश्यंभाव्येव । ज्वरशमनार्थं कटूवौषधे सेविते तत्रानिष्टमपि पित्तमनूत्पद्यत एव । तदुक्तम्—

मिथश्चेदविनाभावः कयोरप्यर्थयोर्द्वयोः ।
एकसिद्धावन्यसिद्धिरनिष्टाऽपि प्रसज्यते ॥ इति ।

क्वचिच्चाविनाभावो द्वयोर्मध्ये कस्यचिदेकस्यैवान्येन सह संभवति नतु तद्वैपरीत्येन । यथा धूमस्याग्निना । न त्वग्नेर्धूमेन । धूमं विनाऽप्ययोगोलकेऽग्नेः साधनदर्शनात् । तत्रापि च—

यदर्थस्याविनाभावो दृश्यते येन वस्तुना ।
तदर्थसिद्धौ तद्वस्तु नैव यत्नान्तराश्रयम् ॥

यथा पुत्रप्राप्तये प्रार्थिते वरे देवताप्रसादाल्लब्धे पत्नीप्राप्त्यर्थं नान्यो वरः संप्रार्थनीयो भवति । प्रकृते च शोकनिवृत्तियुद्धप्रवृत्तिरूपयोर्द्वयोरर्थयोर्मध्ये न कस्याप्येकस्यापरेणाविनाभावः संभवति । मिथस्त्वविनाभावो दूर एव । युद्धप्रवृत्तिं विनाऽपि शोकनिवृत्तेः संभवात् । तथा शोकनिवृत्तिमन्तरेणापि युद्धप्रवृत्तेः संभवाच्च । तादृशावस्थायां जायमाना युद्धप्रवृत्तिः साधयिसी न स्यादिति त्वन्यत् । एतावता तयोरविनाभावसंभवः । अविनाभावाभावे च द्वयोरर्थयोः साधनाय पृथक्कारणद्वयमश्यमेव वक्तव्यं भवति । शोकनिवृत्तिरेकेन यत्नेन साध्याऽपरेण च यत्नेन युद्धे प्रवृत्तिरिति । अतोऽत्र कारणद्वयमवश्यं प्रदर्शितव्यमेव । तत्रापि च तृतीयं स्वधर्मावेक्षणं चतुर्थं निष्कामकर्मयोगश्चेति द्वयं यद्युद्धप्रवृत्तेः कारणं प्रदर्शितं तत्र चतुर्थं न स्वातन्त्र्येण युद्धप्रवृत्तेः कारणम् । किंतु तृतीयेन स्वधर्मावेक्षणरूपेण कारणेन युद्धकर्मण्याभिमुख्ये संपादिते कर्मणि रुधिरप्रदिग्धभोगाद्यनिष्टसंभावनानिरासः केवलं निष्कामकर्मयोगेन(ण) क्रियते । तथा च तत्तृतीयस्यैव दाढ्यार्थमुक्तमिति तदावश्यकमेव । यथा 'वायव्यं श्वेतमालभेत भूतिकामः' ( तै० सं० ) इति विध्यनन्तरं तादृशशब्दभावनेतिकर्तव्यतारूपा तादृशविधिप्रवृत्तिदार्ढ्यसंपादिका 'वायुर्वै क्षेपिष्ठा देवता०' ( तै० सं० ३ ) इत्याद्यर्थवदोक्तिस्तद्वत् । अत एव च न केवलेन तृतीयकारणेनेष्टार्थसिद्धिः । युद्धप्रवृत्तिप्रतिबन्धिकाया रुधिरप्रदिग्धभोगसंभावनायाः सत्त्वात् ।

नन्वत्र युद्धप्रवृत्तेः स्वधर्मावेक्षणरूपं तृतीयमेव कारणं वक्तव्यतां नार्हति कुतस्तद्दाढर्याय चतुर्थकारणापेक्षा । यतो युद्धेऽर्जुनस्य प्रवृत्तिः पूर्वसिद्धैव । केवलं मध्ये समुत्पन्नेन शोकेन सा प्रतिबद्धेति प्रतिबन्धके शोके निवृत्ते स्वभावत एव सा समुदेष्यतीति चेत् स्यादप्येवं यदि शोकनिवृत्त्यर्थं प्रदर्शितेन कारणेन शोकनिवृत्तिमात्रं साधितं स्यात् । नतु तथा किंतु तेन पूर्वसिद्धा युद्धे प्रवृत्तिरपि विनाश्यते ।

घटायोन्मीलितं चक्षुः पटं नहि न पश्यति ।
गन्धायाऽऽत्तोऽपि किं न स्याच्चन्दनः शैत्यकारकः ॥

इतिवत् । तथा च प्रथमकारणकथनप्रसङ्गे नित्यानित्यवस्तुविवेकेन भगवता प्रदर्शितेन देहस्यानित्यत्वाज्जायमाना तत्र क्षुद्रत्वदृष्टिर्यथा भीष्मादिदेहानां शोच्यत्वं निराकरोति तथा तुल्यन्यायादर्जुनस्य स्वदेहेऽपि क्षुद्रत्वदृष्टिर्भवेत्सा च राज्यलोभं निराकुर्यादिति युद्धान्निवृत्तिः स्यात् । तथा द्वितीयकारणकथनप्रसङ्गे भगवता प्रदर्शितेन देहविनाशस्यापरिहार्यत्वेन यथा भीष्मादिदेहदुःखसंभावनामूलकः शोको निराक्रियते तथा तुल्यन्यायादर्जुनस्य स्वदेहदुःखसंभावनामूलकः सुखमात्रफलको राज्यलोभोऽपि निराकृतः स्यादिति युद्धान्निवृत्तिः स्यात् । सोऽयं तक्रस्नुषान्यायः—

तक्रं नास्तीत्युक्तवतीं निषेधन्ती निजां स्नुषाम् ।
स्वयं तथैव यच्छ्वश्रूर्याचित्रे भिक्षवे वदेत् ।
सोऽयं तक्रस्नुषान्यायो विपश्चिद्भिरुदाहृतः ॥

अयमेव च श्वश्रूभिक्षान्यायः । प्रकृते च तक्रस्थानीयं युद्धाभिमुख्यमपसारयन्तीं स्नुषास्थानीयां शुचं निवर्तयन्ती श्वश्रूस्थानीया तत्त्वदृष्टिः स्वयं युद्धाभिमुख्यमपसारयत्येव । तथा च यथा तत्र तक्रं तद्गृहव्यतिरिक्तगृहान्तरादेव लभ्यं भवेत्तथाऽत्र युद्धाभिमुख्यं राज्यलोभातिरिक्तात्कारणान्तरादेव संपादनीयं भवति । तच्च स्वधर्मावेक्षणरूपमिति तदत्यन्तावश्यकं भवति । तस्य दृढीकरणाय चतुर्थं निष्कामकर्मयोगरूपमिति प्रागुक्तमेव । केवलेन निष्कामकर्मयोगकथनेन तु न युद्धे प्रवृत्तिः सिध्यति । निष्कामकर्मयोगेन(हि) न कर्म साध्यते किंतु सिद्धे कर्मणि केवलं निष्कामता बोध्यते । कर्मसिद्धिस्तु स्वधर्मावेक्षणाधीनैवेति ।

अथार्जुनस्य शोकनिवृत्त्यर्थं कारणद्वयं (१) नित्यानित्यवस्तुविवेकपूर्विका देहे क्षुद्रत्वदृष्टिः (२) देहवियोगस्यापरिहार्यत्वं चेत्येवं प्रदर्शितं तद्राव-

श्यकत्वं प्रदर्श्यते । तत्र प्रथममनुक्त्वा द्वितीयं कारणमत्र वक्तुं न युज्यते । तत्र हि जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य चेत्याद्युपदेशेन देहवियोगस्यापरिहार्यत्वमुच्यते। देहवियोगश्च देहव्यतिरिक्तस्य नित्यस्याऽऽत्मनः सत्त्व एव संभवति। अतो नित्यानित्यवस्तुविवेकः पूर्वं प्रदर्शितः । नन्वेवमपि जातस्येत्याद्युपदेशयोग्यता न तदानीमर्जुनस्य संदृश्यते । यथोक्तम्—

संजातबन्धुविच्छेदः स्वदेहावनतत्परः ।
जातस्येत्युपदेशार्हो नरः सद्भिरुदाहृतः ॥ इति ।

अर्जुनस्तु तदानीं न संजातबन्धुविच्छेदः । तदानीं बन्धुविच्छेदस्य केवलं कल्पनामयत्वात् । नाप्यर्जुनः स्वदेहावनतत्परः । स हि तदानीं त्यक्तदेहानुरागः—

यदि मामप्रतीकारमशस्त्रं शस्त्रपाणयः ।
धार्तराष्ट्रा रणे हन्युस्तन्मे क्षेमतरं भवेत् ( १ । ९ )

इति तदुक्तेः । अतः स तदानीं तादृशोपदेशानर्ह एव । यथा—

दूरे तिष्ठ दहेदग्निरित्यादेशः सतीं प्रति ।
न युज्यते तदात्वे सा त्यक्तदेहरतिर्यतः ॥ इति ।

तथा च कथमत्रायमुपदेशो भगवता कृत इति चेन्न । संजातबन्धुविच्छेदवत्संभवद्बन्धुविच्छेदस्यापि तादृशोपदेशार्हत्वात् । बन्धोर्मुमूर्षुत्वे तद्विच्छेदस्य तत्राजातत्वेऽपि संभवित्वात्तमुद्दिश्य शोकं कुर्वन्नुक्तोपदेशार्हो भवत्येव लोके । स्वदेहावनतत्परत्वमपि न केवलं पूर्वसिद्धमेवोक्तोपदेशे निमित्तम् । किंतूक्तोपदेशेनोपदेष्ट्रा सिषाधयिषितमपि फलमपि हेतुः क्वचिद्विवक्ष्यत एव । बन्धुविनाशजन्यशोकातिरेकेण दुःखभारमसहमानः प्राणत्यागे प्रवृत्तो नर आप्तैरेवमुपदिश्यमानो दृश्यत एव लोके । प्रकृतेऽपि च शोकनिवृत्त्यर्थं कृतस्यास्य प्राणवियोगापरिहार्यत्वोपदेशस्य देहविरक्तिनिवर्तनपर्यवसायित्वं भगवतो गूढाभिप्रेतमेव भवति । निवृत्तायां च देहविरक्तौ स्वाभाविक्येव प्राणिनां देहसंरक्षणे प्रवृत्तिः। अथ मृत्योरपरिहार्यत्वकथनेन देहविरक्तिः कथं निवर्तत इति चेत् । उच्यते—कारणविनाशात्कार्यविनाश इति हि न्यायः । देहाविरक्तेश्चात्र किं कारणमित्येवं तस्याः कारणेऽन्विष्यमाणे कारणत्रयमनुसंधीयते । तदुक्तमभियुक्तैः—

भोग्ये वस्तुनि वैराग्यं जायते दोषदर्शनात् ।
स्वीयशक्तेर्वाऽपचयात्तद्भोक्तुर्वा विनाशतः ॥ इति ।

वैराग्यमप्रीतिः । अत्रोदाहरणान्यपि संगृहीतान्यभियुक्तैः—

बुभुक्षितस्यापि चान्नमप्रियं कृमिदूषितम् ।
कठिनं यातयामं च भग्नदन्तस्य न प्रियम् ॥
स्त्रिया परिगृहीतं यद्वस्त्रपात्रासनादिकम् ।
स्त्रीविपत्तौ न तत्प्रायः प्रियं भवति तत्पतेः ॥ इति ।

स्त्रिया मुमूर्षत्वे जीवन्त्यामपि तस्यां तत्परिगृहीतेषु वस्त्रपात्रादिषु प्रियत्वमपचीयते किमुत तस्यां विपन्नायाम् । उक्तकारणत्रयान्यतमेन च कारणेन यद्वस्तु यस्य पुरुषस्याप्रियं भवति तादृशवस्तुविषये तस्य पुरुषस्य कृतिः स्वभावभेदेनानेकधा दृश्यते—उदास्ते पुरुषः कश्चित्सात्त्विकोऽन्यो ददाति वा ।

दूरे स्थापयते कश्चिद्राजसोऽपह्नुतेऽथवा ॥
क्षिपत्यन्यश्छिनत्त्यन्यो दहत्यन्यस्तु तामसः ।
गुणभेदाद्वृत्तिभेदादप्रिये बहुधा क्रियाः ॥ इति ।

प्रकृते चार्जुनस्य यत्स्वशरीरे वैराग्यं समुत्पन्नं तस्य कारणं दोषदर्शनं न संभवति । तदानीमर्जुनशरीरस्यादुष्टत्वात् । नापि स्वशरीरधारणे तस्यासामर्थ्यम् । परिशेषादत्र वैराग्यस्य तृतीयं कारणत्वमवसीयेत । तच्च तद्भोक्तुर्वा विनाशत इति । तस्यार्जुनशरीरस्य भोक्तारोऽर्जुनशरीरं प्रियत्वेनाऽऽलोकयन्तो ये भीष्मादयस्तेषां मृत्युसंभावनया तैः स्वीयत्वेन परिगृहीतं यदर्जुनशरीरं तत्तस्यार्जुनस्याप्रियमभूत् । एवं चार्जुनस्य स्वदेहविरक्तौ भीष्मादिमृत्युसंभावना निमित्तमिति सिद्धम् । किंतु 'जातस्य हि ध्रुवो मृत्युः' इति न्यायेन मृत्योरपरिहार्यत्वात्प्रत्यक्षतो जायमानो मृत्युरपि देहविरक्तौ कारणत्वेन नावलोकनीयः। किमुत मृत्युसंभावनेति भगवतोऽभिप्रायः । किंच स्वदेहः स्वस्य भोग्यः । तादृशदेहविशिष्टो देही चार्जुनः पौत्रत्वशिष्यत्वादिना भीष्मद्रोणादीनां पितामहगुर्वादीनां भोग्यभूतः। यदि च ते भीष्मद्रोणादयो युद्धे मृताः पुनः कदाचिदेतत्कुल एतत्संबन्धिकुलान्तरे वा गृहीतजन्मानः स्युश्चेत्तेषां यथासंबन्धं पितृपितामहपितृव्यमातुलाचार्यमित्रत्वादिनाऽयमर्जुनो भोग्यभूतः स्यादेवेति न सर्वथा भीष्मद्रोणादीनां भोक्तृत्वेन विनाश इत्यत इयं सपदि जायमानाऽर्जुनस्य स्वदेहे विरक्तिरज्ञानमूलिकैवेति भगवतो हृदयम् । एतच्च 'ध्रुवं जन्म मृतस्य च' इत्यनेन सूच्यते । किंचेयमिदानीमर्जुनस्य जायमाना देहविरक्तिर्वनवासदुःखपर्य-

वसायिन्येवेति न तथा कश्चिदैहिक उत्कर्षः । नापि पारलौकिकः । स्वधर्मस्य युद्धस्य त्यागादिति सर्वथाऽर्जुनस्य मोहविलसितमेवैतत् ।

अथ जातस्य हीत्यादेरर्थ उच्यते—शोकनिमित्तभूतः संभावितभीष्मादिमरणरूपो योऽर्थः सचापरिहार्यः केनापि च कारणेन परिहर्तुमशक्यः । तथा च तादृशं मरणरूपमपरिहार्यमर्थमपरिहार्यत्वाज्ञानेन निमित्तीकृत्य यस्त्वया शोकः क्रियते तं शोकं कर्तुं नार्हसीत्यर्थः । तत्रपूर्वार्धे जातस्य हि ध्रुवो मृत्युरिति प्रथमचरणेनापरिहार्यत्वमुपपादितम् । यो यो जायते स स म्रियत एवेति नियमः । यथा पाण्डुमाद्र्यादयः । भीष्मादयश्च जाता इति सिद्धमेव । अतस्ते मरिष्यन्त्येवेति । नन्वेवं तावतैवालम् । ध्रुवं जन्म मृतस्य चेति द्वितीयचरणः किमर्थमुक्तः । तेन हि मृतस्य जन्म नियतमेवेति नियमः प्रतिपाद्यते । तस्य तु न कश्चिदुपयोगो मरणस्यापरिहार्यत्वसाधने संदृश्यत इति चेदत्र केचित्—ध्रुवं जन्म मृतस्य चेत्ययमंशोऽत्र दृष्टान्तार्थतयोपन्यस्तः । यथा मृतस्य जन्म नियतं तथा जातस्य मरणं नित्यमेवेति । दृष्टान्तेन हि दार्ष्टान्तिकोऽर्थो निश्चितो भवतीति । एवं ये द्वितीयचरणं दृष्टान्तत्वेनोपन्यस्तं मन्यन्ते तैर्दृष्टान्तस्वरूपमेव न ज्ञातं भवति । दृष्टोऽन्तो निश्चयो येनेति दृष्टान्तशब्दनिर्वचनम् । अनेन निर्वचनेन दृष्टान्तस्यार्थनिश्चायकत्वं लक्ष्यते । यद्यपि प्रमाणमेवार्थनिश्चायकं तथाऽपि प्रमाणानुग्राहकत्वादयमर्थनिश्चायक इत्युच्यते । तथा हि—अर्थनिश्चायकं प्रमाणम् । तद्द्विविधम् । प्रत्यक्षं परोक्षं चेति । तत्र प्रत्यक्षं प्रमाणं यमर्थं निश्चिनोति तमर्थं निश्चितत्वेनानुभावयति । अतः प्रत्यक्षं प्रमाणं निश्चायकमनुभावकं च भवति । परोक्षं तु न तथा स्वयमनुभावकम् । तत्रानुमानं यमर्थं निश्चिनोति तमर्थं दृष्टान्तसहायेनानुभावयति । तमर्थं प्रत्यक्षं दर्शयन्निव हि तत्र भवति दृष्टान्तः । एतदेव च प्रमाणानुग्राहकत्वं दृष्टान्तस्य । स्वातन्त्र्येणार्थनिश्चायकत्वं तु दृष्टान्तस्य क्वापि नास्ति । एतेनाग्निः शीतो द्रव्यत्वाज्जलवदित्यत्र जलदृष्टान्ते सत्यप्यग्नौ शैत्यं कुतो न निश्चीयत इत्यपास्तम् । तदुक्तमभियुक्तैः—

न सिध्यति प्रमाणेन वह्नौ शैत्यद्रवादि यत् ।
केवलं तत्र दृष्टान्तस्तच्च साधयितुं क्षमः ॥ इति ।

दृष्टान्तो हि योग्ये समये निर्दिष्टश्चेन्निश्चितमर्थं निश्चितत्वेनानुभावयत्येव । योग्यः समयश्च—असंभावनाग्रस्तार्थविषयकप्रमाणजन्यज्ञानक्षणः । प्रत्यक्ष-

प्रमाणेन ज्ञातेऽर्थेऽसंभावनाग्रस्तेऽप्यसंभावना नोदेति । नहि दृष्टेऽनुपपन्नं नामेति न्यायात् । अतः प्रत्यक्षप्रमाणं दृष्टान्तं विनाऽप्यनुभावकं भवति । अनुमानप्रमाणेन तु निश्चितोऽर्थोऽसंभवनाग्रस्तश्चेत्तत्र दृष्टान्त आवश्यकः । तदुक्तम्—



प्रमाणादेव कुर्वन्ति साध्यस्यार्थस्य निश्चयम् ।
असंभवनिरासस्तु दृष्टान्ताधीन एव हि ॥ इति ।

तथा—सूचयन्ति हि दृष्टान्ताः साध्यस्यार्थस्य संभवम् ।
निश्चयस्तु तदर्थस्य प्रमाणाधीन एव हि ॥ इति ।

असंभावनाया अभावे तु भाव्यसंभावनोत्पत्तिप्रतिबन्धकत्वेनाऽऽवश्यकत्वं दृष्टान्तस्य बोध्यम् । तत्र साधारणधर्मवत्त्वेन पूर्वसिद्धो योऽर्थः स एव हि दृष्टान्तत्वेनोपादेयो भवति नासिद्धः । असिद्धोऽर्थस्तु स्वयमेवासंभावनाग्रस्त इति दार्ष्टान्तिकार्थविषयिणीमसंभावनां निवारयितुं कथं प्रभवेत् । एवं स्थिते यदिह ' जातस्य हि ध्रुवो मृत्युः ' इत्यत्र दृष्टान्तत्वेन ' ध्रुवं जन्म मृतस्य ' इति योज्यते तत्रेत्थमुच्यते—ध्रुवं जन्म मृतस्येति नियमः पूर्वसिद्धो न वा । न चेत्सिद्धः स्यात्तर्हि दृष्टान्तत्वेन कथमुपादेयः स्यात् । अथ सिद्धस्तर्हि येन श्रुतिप्रमाणेन स नियमः सिद्धः स्यात्तेनैव प्रमाणेन ' जातस्य हि ध्रुवो मृत्युः' इत्ययमपि तत्तुल्ययोगक्षेमो नियमः सिद्धोऽभूदेवेति तस्य दृष्टान्तापेक्षा न स्यात् । किंच वस्तुतो विचारे क्रियमाणे यथा 'जातस्य हि ध्रुवो मृत्युः' इत्यंशः सर्वेषां स्वपितृपितामहादीन्मृताञ्जानतामहर्निशं बहुशः प्राणिनो म्रियमाणानालोकयतां च सर्वेषां स्वानुभवसिद्धो न तथा ध्रुवं जन्म मृतस्येत्यंशः स्वानुभवसिद्धो भवति । अतः कथं स तत्र दृष्टान्तो योग्यो भवेत् । दृष्टान्ते हि—

प्रसिद्धार्थः स्वसादृश्यादसिद्धार्थानुभावकः ।
परोक्षमप्यसिद्धार्थं भावयत्यपरोक्षवत् ॥

किंच 'ध्रुवं जन्म मृतस्य च' इति नियमेन दृष्टान्तभूतेन ' जातस्य हि ध्रुवो मृत्युः ' इति नियमः कथं सिध्येत् । न हि धूमवत्यग्निर्नियत इत्येतावताऽग्निमत्यपि धूमेन नियतेन भवितव्यम् ।

ध्रुवं वह्न्याश्रये धूमो ध्रुवं धूमाश्रयेऽनलः ।
इत्युक्ते तथा—ध्रुवं गुणाश्रये कर्म ध्रुवं कर्माश्रिता गुणाः ।

इत्युक्ते तत्र द्वितीयचरणोक्तव्याप्तेः सत्यत्वेऽपि तया प्रथमचरणोक्ता वह्नौ धूमव्याप्तिर्गुणे वा कर्मव्याप्तिर्नैव सिध्यति। तस्मान्न केवलं दृष्टान्तार्थतया द्वितीयचरणोपन्यासः । किंच यदि केवलं दृष्टान्तार्थतयैव द्वितीयचरणोपन्यासः स्यात्तर्हि ययोः कयोरपि द्वयोरर्थयोर्विद्यमानो नियम उक्तः स्यात् । यथा जातस्य हि ध्रुवो मृत्युरित्यनन्तरं ध्रुवं दुःखं हि कामिनः। ध्रुवं मुक्तिर्विजानतः, इत्यादि । अत्र तु प्रथमचरणे जन्मानन्तरं नियतमेव मरणमिति नियममुक्त्वा तयोरेव वैपरीत्येन मरणानन्तरं नियतमेव जन्मेति यो विशिष्य नियम उक्तस्तत्र केनचिद्गूढाभिप्रायेण भवितव्यमभ्युच्चयवादेन वा । वयं त्वित्थं प्रतीमः- न केवलं जन्म मरणसंबद्धमेवेति नियमः किंतु मरणमपि जन्मसंबद्धमेव । एवमनयोरन्योन्यं दृढः संबन्धः । तेन च मृत्योरत्यन्तापरिहार्यत्वं बोध्यते । अयं भावः । पापिनो दुःखमपरिहार्यमेव । किंतु तादृशदुःखस्यापरिहार्यता भोगकालपर्यन्तैव नतु शाश्वतिकी । भोगोत्तरं तु नैव तस्य पापस्य तज्जन्यदुःखस्य वा संबन्धः । प्रकृते तु मरणस्यापरिहार्यता न तावत्कालपर्यन्तैव किंतु मरणोत्तरमपि । यतो मृतस्य पुनर्जन्म नैयत्येन पुनर्मरणसंबन्धस्यावश्यंभावित्वात् । अतश्च मृत्योरत्यन्तापरिहार्यत्वं सिध्यति । सामान्यतो यत्रापरिहार्यत्वं तत्रापि शोको नोचितः किमुतात्यन्तापरिहार्यमृत्युविषय इति भगवतो भावः ।

एतदुक्तं भवति । भीष्मादीनामात्मनां नित्यत्वेन शोककारणीभूतस्य मृत्योरभावाच्छोको न युक्त इति पूर्वमुक्तम् । अथेदानीं देवदत्तो जातो यज्ञदत्तो मृत इत्यादिलौकिकव्यवहाराज्जीवात्मनो मृत्युरस्तीत्यङ्गीकृत्य शोककारणीभूतस्य मृत्योः सत्त्वेऽपि शोको न युक्त एवेति जातस्य हीत्यनेनोच्यते। कृतेऽपि शोके मृत्युः परिहृतो नैव भवति । तथा च शोके कृतेऽकृते वा फले विशेषाभावाच्छोको निष्फल एव । तादृशं निष्फलं शोकं कर्तुं त्वं 'यद्यप्येते न पश्यन्ति' 'कथं न ज्ञेयमस्माभिः' इत्येवं कर्तव्याकर्तव्यविचारवान् सन् नार्हसि ।

ननु भीष्मादिमरणं त्वदर्जुनकृतशोकस्य निमित्तम् । तच्च सामान्यतो यदा कदाऽपि जायमानमथवा युद्धकालिकं युद्धनिमित्तकम् । आद्यस्यापरिहार्यत्वेऽपि तस्य शोककारणत्वं नास्ति । नहि भीष्मादयो यदा कदाऽपि मरिष्यन्तीति मत्वा सांप्रतमर्जुनेन शोकः क्रियते । द्वितीये तु युद्धकालिकतादृशमरणस्य शोककारणत्वेऽप्यपरिहार्यत्वं नास्ति । शोको हि शस्त्रत्यागद्वारा युद्धकालि-

मरणं परिहर्तुं प्रभवत्येव । तथा च कृते शोके तेन शस्त्रन्यासद्वारा युद्धनिमित्तकमरणपरिहारः । अकृते तु शोके युद्धनिमित्तकमरणसंभव इति विशेषसत्त्वान्न शोकस्य निष्फलत्वम् । अतः कथमेतदिति चेत् । उच्यते–भीष्मादीनां युद्धकाले मरणेऽन्यदा वा यदा कदाऽपि मरणे मरणस्वरूपे नैव कश्चन विशेषः। केवलं कालकृतो विशेषः । स चात्राकिंचित्करः । अप्रयोजकत्वात् । नहि तेन मरणोत्तरं प्राप्स्यमानायामवस्थायां कश्चन विशेषो दृश्यते । यदा कदाऽपि मरणं भवतु तदुत्तरं जन्मावश्यंभाव्येव । तदेतत् ' ध्रुवं जन्म मृतस्य च ' इत्यनेन सूच्यते । नहि युद्धनिमित्तमरणाभावेऽग्रे यदा कदाऽपि मृतौ जन्मबन्धविनिर्मुक्तो भवति । उभयत्रापि मृतस्य जन्माऽऽवश्यकमेव । प्रत्युत युद्धे मृतावेव श्रेयोविशेषप्राप्तिसंभवो दृश्यते । तदुक्तम्–

द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ ।
परिव्राड् योगयुक्तश्च रणे चाभिमुखो हतः ॥ इति ।

ननु युद्धे मरणाभावेऽग्रे यदा कदाऽपि मरणं यद्यपि स्यात्तथाऽपि तावत्पर्यन्तं तैर्भीष्मद्रोणादिभिः कतिपयैर्मान्यैः सहार्जुनस्य समागमे तेभ्यः सकाशात्सदुपदेशलाभेन श्रेयोविशेषप्राप्तिः स्यादिति विशेष इति चेत्–स्यादपि कदाचिदेवं यदि तथाविधे समये न्यस्तशस्त्रोऽर्जुनो जीवेत् । किंतु कुटिलमतयः केचिद्धार्तराष्ट्रास्तथाविधं तं घातयेयुः । संभावितं च तथाऽर्जुनेनापि प्रागेव ।

' यदि मामप्रतीकारमशस्त्रं० तन्मे क्षेमतरं भवेत् 'इति तदुक्तेः ।

नन्वेवं यदि क्षेमतरं स्यात्तर्हि शोकाभावे नैवेदृशं क्षेममिति शोकतदभावयोर्विशेषसद्भावेनाविशेषः कथमुक्त इति चेन्न। 'यदि मामप्रतीकार०' इत्यादिचरणत्रयप्रतिपादितस्य तर्कस्य यथा संभवो न तथा ' तन्मे क्षेमतरं भवेत् ' इति चतुर्थचरणप्रतिपादितस्य । क्षेमतरप्राप्तिकल्पनाया मोहमूलकत्वात्।

' धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यते '

इत्यनेन क्षत्रियस्य युद्धं विनाऽन्यस्य क्षेमसाधनस्य भगवता निषिद्धत्वात् । किंच कुटिलमतिभिः कौरवैः कदाचिदुपेक्षितस्य तथाविधस्य जीवतोऽप्यर्जुनस्य भीष्मद्रोणादिभ्यः सदुपदेशो दुर्लभ एव । स्वधर्मत्यागिन्यर्जुने भीष्मद्रोणादीनां पूर्ववत्प्रेमासंभवात् । यतो दयया न्यस्तशस्त्रमप्यर्जुनं भीष्मद्रोणादयो न बहु मन्येरन्निति । एवं द्वितीयादिपञ्चमान्तैश्चतुर्भिः प्रकरणैर्यत्कारणचतुष्टयं प्रतिपादितं तस्याऽऽवश्यकत्वं प्रदर्शितम् ।

प्रकृतमनुसरामः। तच्च पञ्चमं प्रकरणं 'एषा तेऽभिहिता सांख्ये (२। ३९) इत्यारभ्य 'तदा योगमवाप्स्यसि' (२।५३) इत्येतत्पर्यन्तं पञ्चदश-श्लोकात्मकं निष्कामकर्मयोगाख्यम्। चतुर्थे प्रकरणे यदुक्तं तस्य प्रकृतेऽर्जुन उपयोगो भवेदेवेति न निश्चयः। यतः पातकानुत्पत्त्यर्थं युद्धस्य धर्म्यत्वसंरक्षणाय यत्सुखदुःखादिद्वंद्वत्रयसमीकरणं प्रतिपादितं तद्वक्तुं सुकरमध्यवसाययितुं त्वतीव दुष्करम्। सुखस्वरूपेऽनुकूलत्वांशस्य तथा दुःखस्वरूपे प्रतिकूलत्वांशस्य च प्रमोषः सांख्यानामेव देहाभिमानशून्यानां सुलभो न त्वितरेषां देहाभिमानवतां प्राणिनाम्। अर्जुनस्तु नैव देहेऽहंभावशून्यः। 'कथं भीष्ममहं संख्ये' (२।४) इत्यादिश्लोकपञ्चकेन यदुक्तमर्जुनेन तस्मात्तस्य देहेऽहंभावस्य स्पष्टमेव प्रतिपन्नत्वात्। तादृशी देहाभिमानशून्यावस्थितिस्तु—

'अनेकजन्मसंसिद्धस्ततो याति परां गतिम्' (गी. ६।४५)

इत्युक्तरीत्या बहुतरकालसाध्या दुर्लभतरा च। न सांप्रतं युद्धारम्भे स्वल्पकालेन साधयितुं शक्या। अतस्तदपेक्षया सुलभं प्रकृतोपयोगिनं निष्कामकर्मयोगं प्रतिपादयितुमस्य पञ्चमप्रकरणस्याऽऽरम्भः। तदेतत्—

'एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु'

इत्यनेन सर्वं भगवता प्रदर्शितम्। अथ कः सांख्यपदार्थः। उच्यते—सम्यक् ख्यानं संख्या। चक्षिङ्धातुस्थानिकात्समुपसृष्टात्ख्याधातोर्भावे 'आतश्चोपसर्गे' (पा० सू० ३।३।१०६) इति सूत्रेणाङ्प्रत्ययः। स्त्रियामिति तत्राधिधिकारात्स्त्रीत्वम्। ख्याधातुर्ज्ञानार्थकः। यत्सांख्यैः प्राप्यते स्थानम् (गी० ५।५) इत्यत्र संख्याशब्दस्य ज्ञानार्थकतया दृष्टत्वात्' इति हि शब्देन्दुशेखरे यथासंख्यसूत्रे नागोजीभट्टैरुक्तम्। ज्ञाने च विषयतयाऽन्यस्य कस्यापि संख्याशब्दमात्रादनुपस्थितत्वाज्ज्ञातुरात्मस्वरूपमेव विषयतयाऽनुसंधीयते। तत्र समुपसर्गद्योत्यं सम्यक्त्वं च याथार्थ्यम्। अनौपाधिकात्मस्वरूपानुध्यानमिति यावत्। एतादृशसम्यग्ज्ञानार्थकसंख्याशब्दात्स्वार्थेऽण्प्रत्यये संख्यैव सांख्यमिति शब्दः सिध्यति। 'क्वचित्स्वार्थिकाः प्रत्ययाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते' इति न्यायेनापूकल्पमित्यत्रेव क्लीबता। ईदृश एव चाण्प्रत्ययान्तः सांख्यशब्दोऽत्र 'एषा तेऽभिहिता सांख्ये' इत्येवं निर्दिष्टः। 'एकं सांख्यं च योगं च' (गी० ५।५) इत्यत्राप्ययमेव। तस्माच्च सांख्यश-

ब्दान्मत्वर्थीयेऽर्शआदित्वादच्प्रत्यये तादृशज्ञानवदर्थकोऽपि सांख्यशब्दः सिध्यति सांख्यमस्ति येषां ते सांख्या इति । अयं च मत्वर्थीयाच्प्रत्ययान्तः सांख्यशब्दो ' यत्सांख्यैः प्राप्यते स्थानम् ' ( भ० गी० ५ । ५ ) इत्यत्र निर्दिष्टः । योगशब्दोऽप्येवं द्विविधः—मत्वर्थीयाच्प्रत्ययान्तस्तादृशाच्प्रत्ययप्रकृतिभूतश्च । तत्र प्रकृतिभूतो योगशब्दः प्रकृते ' योगे त्विमां शृणु ' इत्येवं निर्दिष्टः । कर्मणि सिद्ध्यसिद्ध्योः समत्वभावनारूपस्तादृशयोगशब्दस्यार्थश्चात्रैव ' सिद्ध्यसिद्ध्योः ' ( २ । ४८ ) इति श्लोके प्रतिपादितः । अयमेव च योगशब्दः ' एकं सांख्यं च योगं च ' ( गी० ५।५ ) इत्यत्रापि निर्दिष्टः । तादृशो योगोऽस्ति येषां ते योगा इत्येवं मत्वर्थीयाच्प्रत्ययान्तस्तु योगशब्दस्तादृशसमत्वभावनावदर्थकः ।

' यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते ' ( गी० ५ । ५ ) इत्यत्र निर्दिष्टः । तदयमर्थः—येषा ते बुद्धिरभिहिता सांख्ये । त्वन्मतिरीदृशी भाव्येत्येवं मदभीप्सिता या ' नत्वेवाहं जातु नाऽऽसम् ' ( २ । १२ ) ' नासतो विद्यते भावः ' ( २ । १६ ) ' न जायते म्रियते वा ' (२।२०) ' नैनं छिन्दन्ति शस्त्राणि ' ( २ । २३ ) ' आश्चर्यवत्पश्यति० ' ( २ । २९ ) ' सुखदुःखे समे कृत्वा० ' ( २ । ३८ ) इत्यादिना मयाऽभिहिता सा सांख्यसंबन्धिनी । अनौपाधिकात्मज्ञानिनः संभविनी । यथार्थाऽपि सा देहोपाधावहंभाववतस्तव दुर्लभा । योगे तु यथा त्वन्मतिरपेक्ष्यते तथा मयोच्यते तां शृणु । सा तव न तथा दुर्लभेत्याशयः । एवं योगबुद्धिश्रवणे सावधानमनसमर्जुनं कृत्वा सद्यो योगबुद्धिस्वरूपं वक्तव्यम् । किंतु ततः पूर्वं योगबुद्धेः फलं ' बुद्ध्या युक्तः ' इत्यनेनोक्त्वा ' नेहाभिक्रम० ' इत्यनेन तत्र सौकर्यं च प्रदर्श्य ' व्यवसायात्मिका ' इत्यनेन सत्यां योगबुद्धौ बुद्धिस्थैर्यं कर्मिणां च वेदानुसारेण कर्म कुर्वतामपि योगबुद्ध्यभावाद्बुद्धिचाञ्चल्यं च प्रदर्श्य सर्वेषां कर्मफलानां योगबुद्धौ संग्रहं च प्रदर्श्य ' कर्मण्येव० ' इत्यनेन कर्मणः फलं तथा कर्मणोऽकरणं चेति द्वयमपि पुरुषानधीनमिति तस्माद्द्वयान्निवर्त्य पुरुषाधीने केवले कर्मण्यर्जुनस्य दृष्टिनिक्षेपं विधाय तदनन्तरं ' योगस्थः कुरु० ' इत्यनेन भगवता योगबुद्धिस्वरूपं प्रदर्शितं तत्र को हेतुरिति चेत् । उच्यते—अयमत्राभिप्रायो भगवतोऽवगम्यते । यद्यपि 'योगे त्विमां शृणु ' इत्युक्त्या वक्तव्यार्थश्रवणेऽर्जुनस्यावधानं संपादितं तथाऽपि तस्यावधानदार्ढ्याय ' योगबुद्धेर्महत्फलम्, प्रयत्नश्च

न महान्' इत्युक्त्या तस्य योगबुद्धावभिरुचिरुत्पादिता । अभिरुचितोऽर्थश्च कदा श्रोष्यत इत्येवमुत्कण्ठयाऽवधानदार्ढ्यं संपादयति । सति चावधानदार्ढ्ये श्रुतोऽर्थः संस्कारातिशयमाधत्ते । तेन च तदनुरूपाचरणे मनुष्यस्य प्रवृत्तिः शैघ्र्येण सुलभा च भवतीति । अत्र योगबुद्धावभिरुच्युत्पादने च तत्र संभावितानां दोषाणां बन्धकत्वाभिक्रमनाशप्रत्यवायानां निरासं प्रथमं कृत्वा ततो भयात्त्राणं बुद्धिनिश्चयश्चेति गुणाभिधानं कृतं तद्युक्तमेव । 'दोषोऽपलापयविरञ्जकतां गुणानाम्' इति न्यायात् । नन्वत्र

'एषा तेऽभिहिता सांख्ये बुद्धिः' 'योगे त्विमां शृणु'

इति वाक्यरचनया तुशब्दघटितया सांख्यबुद्धियोगबुद्ध्योर्वैलक्षण्यं सूचितम् । उपपद्यते च तत् । अनौपाधिकात्मस्वरूपानुसंधानं हि सांख्यम् । समत्वं च योगः । 'समत्वं योग उच्यते (२ । ४८) इत्यत्रैवोक्तत्वात् । समत्वं च प्रकृतत्वात्सिद्ध्यसिद्ध्योश्चित्तवृत्तिसाम्यम् । कर्मफलस्य सिद्धौ जायमानायामपि न हर्षान्विता चित्तवृत्तिः । तथा कर्मफलस्यासिद्धावपि न शोकान्विता चित्तवृत्तिरिति यावत् । अयं च चित्तवृत्तिविशेषस्य निरोध एवेति 'योगश्चित्तवृत्तिनिरोधः' (पा० यो० सू० १।२) इति पातञ्जलसूत्रेण न विरोध उद्भावनीयः । एवं सांख्ययोगस्वरूपयोर्मिथो भेदे स्थिते यदग्रे—

'सांख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः' (गी० ५ । ४)

इत्येवं भगवता तयोः पार्थक्यं निषिद्धं तद्विरुध्यत इति चेन्न । भगवदाशयानवगमात् । न तत्र सांख्ययोगयोः स्वरूपतः पार्थक्यं निषिध्यते किंतु फलतः ।

'एकमप्यास्थितः सम्यगुभयोर्विन्दते फलम्' (५ । ४)

इति तदुत्तरार्धेन तथैवावगम्यते । प्रत्युत 'एकमपि' 'उभयोः' इत्यनेन सांख्ययोगयोः स्वरूपतो भेदस्तत्रानूदित एव । एवमेव तत्राग्रेऽपि—

'एकं सांख्यं च योगं च यः पश्यति स पश्यति' (५ । ५)

इत्यत्र फलत एव तयोरैक्यमभिप्रेतं भगवतः ।

'यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते' (५ । ५)

इति पूर्वार्धे सांख्यैर्योगैरित्यनेन सांख्ययोगयोः स्वरूपतो भेदं गृहीत्वैव केवलं ताभ्यां प्राप्यस्य स्थानस्यैक्यप्रतिपादनात् ।

अथ किं तत्स्थानं कथं च तद्द्वयोरपि प्राप्यं भवति तदुच्यते—मत्वर्थीयाच्प्रत्ययान्तैः सांख्यैर्योगैरिति शब्दैः स्थानप्राप्तेः कर्ता निर्दिष्टः। तादृशस्थानप्राप्तेः साधनं च तत्र यद्यपि न निर्दिष्टं तथाऽपि तत्र कर्तृविशेषणतया यदुपस्थितं तदेव प्रत्यासत्त्या साधनत्वेन तत्र संबध्यते। तच्च मत्वर्थीयाच्प्रत्ययप्रकृतिभूतसांख्यशब्दोपस्थितमनौपाधिकात्मस्वरूपानुध्यानं तादृशयोगशब्दोपस्थितं चित्तवृत्तिसाम्यं च। तत्रानौपाधिकात्मस्वरूपानुध्यानेन तादृशात्मस्वरूपसाक्षात्कारे सद्यो जीवन्मुक्तिः 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये' ( छा० ) इति श्रुतावुक्तत्वाद्देहपाते विदेहमुक्तिः। एवं च सांख्यप्राप्यं मोक्षरूपं स्थानं सिद्धम्। योगेनापि तदेव प्राप्यते। कर्मफलस्य सिद्धावसिद्धौ वेत्युभयथाऽपि चित्तवृत्तेः साम्यं हि योगः। ईदृशेन योगेनाऽऽक्रान्ते चित्ते भास्करेणाऽऽक्रान्ते भूतलेऽन्धकारस्येव न स्वल्पोऽपि कामादेर्दोषस्य संभवः। कामादेरभावे चासहायानीन्द्रियाणि स्वभावतः स्वच्छस्य चित्तस्याऽऽकर्षणे न पर्याप्तानीति स्वतन्त्रं चित्तं भवति। चित्तस्य च सवृत्तिकस्वभावत्वाद्वृत्तेश्च निरालम्बनाया अवस्थातुमशक्यत्वात्सा वृत्तिश्चित्ते प्रतिबिम्बितमात्मानमालम्बते। एवं सिद्धायां भूमिकायां ततोऽनौपाधिकात्मस्वरूपानुध्यानं ततस्तादृशात्मस्वरूपसाक्षात्कारः सद्यो जीवन्मुक्तिस्ततो विदेहमुक्तिश्चेत्येवं योगेनापि मोक्षरूपं स्थानं प्राप्यत इति सांख्ययोगयोः प्राप्तिस्थानमेकमेवेति सिद्धम्। यथा 'दिवैव भोक्तव्यम्' इति विध्यनुसारेण प्रवृत्तानां 'रात्रौ न भोक्तव्यम्' इति निषेधानुसारेण प्रवृत्तानां च भोजनकालः सम एव भवति। विधेर्निषेधगर्भितत्वान्निषेधस्य च विधिगर्भितत्वात्। तद्वदत्र बोध्यम्। तदुक्तम्—

निषेधगर्भो हि विधिर्निषेधो विधिगर्भितः।
एकस्यावस्थितिः पूर्णा नान्यसंबन्धमन्तरा॥ इति।

तत्र सांख्याः साधनचतुष्टयसंपन्नाः 'आत्मा वा अरे द्रष्टव्यः' इत्यादिविध्यनुसारेण प्रवृत्ताः। योगास्तु 'न ध्यायेत्' इत्यादिनिषेधानुसारेण प्रवृत्ताः। तत्र तृणारणिमणिन्यायेन परस्परनिरपेक्षता। अरणिमण्योरभावेऽपि केवलतृणेनाग्निः प्राप्यते। तथैवारणिमात्रेण मणिमात्रेण चाग्निः प्राप्यते। अत्र तु न तथा केवलेन योगेन केवलेन सांख्येन वा कार्यसिद्धिः किंतु–

भाभ्यामेव । एते सांख्या एते योगा इति व्यपदेशस्तु भूयसांऽशेन बोध्यः । प्राधान्येन व्यपदेशा भवन्तीति न्यायात् । सांख्या हि पूर्वं योगावस्थां स्वल्पकालमनुभूय ततः सांख्यावस्थां बहुकालमनुभूय मुक्ता भवन्ति । तथा योगा अपि बहुकालं योगावस्थामनुभूय ततः सांख्यावस्थां स्पृष्ट्वैव मुक्ता भवन्ति । इदं सांख्यावस्थास्पर्शमनुसंधायैव हि ' उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ' ( गी. ४।३४ ) इत्यग्रे भगवतोक्तम् । इमौ हि सांख्यमार्गयोगमार्गौ प्रत्येकं बहुभिः पर्वभिर्युक्तौ । बोधसौलभ्याय कतिचित्पर्वाणि प्रकल्प्यानीति प्रत्येकं पञ्च पर्वाणि कल्प्यते । ननु तया पञ्चत्वसंख्यया न्यूनाधिकसंख्याव्यवच्छेदेऽभिनिवेष्टव्यम् । तत्र प्रथमपर्वप्रभृत्यन्त्यपर्वपर्यन्तं गमनं बहुकालाभ्यासेन साध्यं भवति । एवमेतत्प्रत्येकं पञ्चपर्वयुतं निःश्रेणीद्वयं सांख्ययोगाख्यं तथा मिथः संगतं यथा सांख्यनिःश्रेण्याः प्रथमं पर्व योगनिःश्रेण्या द्वितीयेन पर्वणा संगतम् । सांख्यनिःश्रेण्या द्वितीयं पर्व योगनिःश्रेण्यास्तृतीयेन पर्वणा संगतम् । सांख्यनिःश्रेण्यास्तृतीयं पर्व योगनिःश्रेण्याश्चतुर्थेन पर्वणा संगतम् । सांख्यनिःश्रेण्याश्चतुर्थं पर्व योगनिःश्रेण्या अन्त्येन पञ्चमेन पर्वणा संगतम् । अत्र च येन यत्संगतं तयोर्द्वयोः पर्वणोरुन्नतिः समा । उन्नत्या समयोश्च पर्वणोर्मध्ये योगपर्वणः सकाशात्सांख्यपर्वणि गन्तुं शक्यते । तत्र च मुमुक्षुर्यथाशक्ति यथारुचि गच्छति । एवं च सांख्यनिःश्रेण्याः प्रथममपि पर्व नैव मुमुक्षुणा योगनिःश्रेणीपर्वसंबन्धमन्तरेण स्वातन्त्र्येणाऽऽरोढुं शक्यते । तथा योगनिःश्रेण्या अन्त्यपर्वण्यारूढोऽपि ततः सांख्यनिःश्रेण्या उपान्त्ये पर्वणि गन्तुं शक्नुयात् । ततः सांख्यनिःश्रेण्या अन्त्यपर्वरोहणद्वारैवाऽऽत्मसाक्षात्कारो न तु स्वातन्त्र्येण। एवं मुमुक्षोर्मोक्षप्राप्तय आवश्यक एवोक्तमार्गद्वयसंबन्धः । तत्र च योगमार्गात्सांख्यमार्गाक्रमणे चतस्रो विधाः— १ योगद्वितीयात्सांख्यप्रथमे २ योगतृतीयात्सांख्यद्वितीये ३ योगचतुर्थात्सांख्यतृतीये ४ योगपञ्चमात्सांख्यचतुर्थे इति । पूर्वप्रकल्पितपर्वपञ्चसंख्यानुरोधेनैतद्विधाचतुष्टयमत्रोक्तम् । पर्वसु न्यूनाधिकसंख्याप्रकल्पने तु विधानामप्यासां न्यूनाधिकत्वं स्यादित्यन्यत् । आसु च विधासूत्तरोत्तरं सौलभ्यमधिकम् । तदेतदुक्तं भगवता पञ्चमे—

संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ ।
तयोस्तु कर्मसंन्यासात्कर्मयोगो विशिष्यते ( ५ । २ ) इति ।

अत्र वैशेष्यं च सौकर्यमूलकम्। सांख्ये हि काम्यकर्मत्याग आवश्यकः। स च

प्रयत्नातिशयसाध्यः। कर्मशीलानां प्राणिनामनेकेषु जन्मसु कर्म कुर्वतां सहसा कर्मत्यागस्याशक्यत्वात्। तथा च सांख्ये कर्मसंन्यासो न सुकर इति न्यूनता। योगे तु सिद्ध्यसिद्ध्योश्चित्तवृत्तिसाम्याङ्गीकारेऽपि कर्मसंबन्धो न निषिद्ध इति सौकर्यमित्याधिक्यम्। अत एव न्यूनताया आधिक्यस्य च क्रमेण बीजभूतं सांख्ये कर्मसंन्यासं योगे कर्मसंबन्धं च प्रदर्शयितुं 'सांख्याद्योगो विशिष्यते' इत्यनुक्त्वा 'कर्मसंन्यासात्कर्मयोगो विशिष्यते' इत्येवं कर्मसंन्यासशब्देन सांख्यस्य कर्मयोगशब्देन च योगस्य निर्देशः कृतो भगवता।

ननु योगिनां सांख्ये प्रवेशं विना निःश्रेयसप्राप्तिर्नास्तीत्यनुपदमेवोक्तम्। तथा च योगानामपि पर्यवसाने कर्मसंन्यासस्याऽऽवश्यकत्वमेवेति कथं सौकर्यमिति चेन्न। योगनिःश्रेण्या अन्त्यपर्वारूढस्य काम्यकर्मत्यागे प्रयत्नातिशयानपेक्षणात्। संपूर्णां योगनिःश्रेणीमध्यारूढो हि योगी काम्येन कर्मणैव त्यज्यते न तु तेन तदानीं काम्यं कर्म त्यक्तुं प्रयत्यते। तथा च तदानीं काम्यकर्मत्यागो न क्रियते किंतु भवतीत्येव निद्रारम्भे यथा। यदा च काम्यकर्मत्यागः कर्तुं शक्यते तदा प्रयत्नाल्पत्वमहत्वविषयिणी चर्चा युक्ता न तु यदा निद्रारम्भ इव कर्मवियोगो भवति तदा सा युज्यते। एवं सांख्यापेक्षया योगे सौलभ्याद्योगः प्रकृतेऽर्जुनस्य साध्यो भविष्यतीत्यालक्ष्यास्मिन्निष्कामकर्मयोगाख्ये पञ्चमे प्रकरणे 'योगे त्विमां शृणु' इति योगः प्रस्तुतः। योगेऽर्जुनस्य प्रवृत्तौ शैघ्र्यसंपादनाय प्ररोचयति भगवानुत्तरार्धेन—

'बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि' इति।

यदि मामप्रतीकार० भवेत् (१।४६) इत्येवं निर्विण्णस्यार्जुनस्यैहिकामुष्मिकोत्कर्षप्रदर्शनेन नैव प्ररोचनं भवेत्। अतो यथाऽशोच्यत्वालोचनाख्ये द्वितीये प्रकरणे मात्रास्पर्शतितिक्षासिद्धये 'सोऽमृतत्वाय कल्पते' (१।१५) इत्येवं मृत्युविरहप्रदर्शनेन प्ररोचितस्तथाऽत्र योगबुद्धिप्राप्तये मृत्युकारणीभूतकर्मबन्धप्रहाणं प्रदर्श्य प्ररोचितः। कर्मबन्धप्रहाणे हि मृत्युविरह आवश्यक एव। तदेव हि तस्य द्वारभूतम्।

नन्वत्र बुद्धियोगे कर्म न निषिद्धम्। प्रत्युताऽऽवश्यकमेव। कर्मफलस्य सिद्धावसिद्धौ वा यच्चित्तवृत्तेः साम्यं योगाख्यं तत्कर्मणि सत्येव संभवति। कर्म च द्विविधं सत्कर्मासत्कर्म च। तत्रासत्कर्म लोके बन्धकर्मेति प्रसिद्धमेव। तदुक्तम्—

पार्थिवेन दुराचारी कारागारे निरुध्यते।
न दीक्षितः श्रोत्रियो वा सभायां स महीयते ॥ इति।

वस्तुतो विचारे क्रियमाणे तु सत्कर्मापि बन्धकमेव। कर्म कुर्वन् हि द्विविधस्यापि कर्मणः फलभोगाय भोगसाधनभूते शरीररूपकारागारे निरुध्यत एव। तथा च योगानामसत्कर्मण्यप्रवृत्तावपि सत्कर्मणि प्रवृत्तिरवर्जनीयैव। किंचासत्कर्मापेक्षया सत्कर्मणि बन्धकत्वं सातिशयं दृश्यते। यतोऽसत्कर्मफलभोगः पुनस्तादृशकर्मचिकीर्षां न जनयति। सत्कर्मफलभोगस्तु पूर्वापेक्षयाऽपि बलवतीं तादृशकर्मचिकीर्षां जनयति। तदुक्तम्—

विशेषो भोगयोरेष सदसत्कर्मजन्ययोः।
बीजमुत्थापयत्येको निवर्तयति चापरः ॥ इति।
न जातु कामः कामानामुपभोगेन शाम्यति।
हविषा कृष्णवर्त्मेव भय एवाभिवर्धते ॥ इति च।

अतः कथं तादृशं कर्म तेषां ब धकं न भवतीति चेदुच्यते। कर्म हीश्वरप्रेरितं स्वकर्तर्यदृष्टमुत्पाद्य स्वफलभोगानु णां योनिमापादयत्तादृशे शरीरे स्वकर्तारं प्रवेशयति। येन च प्रवेशितस्तदनुज्ञामन्तरेण तादृशं शरीरं हातुमन्यत्र गन्तुं च कथमप्यसमर्थस्तत्र निगडितः परतन्त्रोऽपि च भ्रान्त्या तदधिकारिणं स्वमात्मान मन्यते। तदुक्तम्—

कारागृहे शरीराख्ये दृढं बद्ध्वा प्रवेशितः।
भ्रान्त्याऽधिकारिणं मत्वा बन्दिनं स्वं न मन्यते ॥ इति।

कर्मजन्यमदृष्टं च तत्रव कतयुत्पद्यते यः स्वयं तत्कर्तेत्यभिमन्यते। तदुक्तम्—

व्यापाराश्रयम ंण न कर्तृत्वमिहेष्यते।
कर्तृत्वेनानुसंधत्ते यः स्वयं सोऽत्र गृह्यते ॥ इति।

नन्वेवमज्ञानतो जायमाने कर्मणि कर्तृत्वानुसंधानाभावेन तस्माददृष्टोत्पत्तिर्न स्यात्। न चेष्टापत्तिः।

'प्रायश्चित्तैरपैत्येनो यदज्ञानकृतं भवेत्' (या. स्मृ.        )

इतिवचनविरोधात्। तत्र ह्यज्ञानकृतादपि कर्मणः सकाशादेनस उत्पत्तिमङ्गीकृत्य प्रायश्चित्तेन निवारितेति चेदुच्यते। अज्ञानतो जायमाने कर्मणि कर्म-

कालेऽहमेतत्कर्म करोमीत्येवं कर्तृत्वानुसंधानाभावेऽपि तदुत्तरं 'मयैतत्कर्म कृतम्' इत्येवं कर्तृत्वानुसंधानस्य परोपदेशादिना शक्यत्वात् । यत्र क्वचित् पश्चादपि ज्ञानं न जायते तत्रापि कर्तृत्वानुसंधानयोग्यतायाः सत्त्वेनादृष्टोत्पत्तिर्निर्बाधैव । यदि केनचिदयमुपदिष्टः स्यात्तर्ह्ययं स्वस्मिंस्तादृशकर्मकर्तृत्वमनुसंदध्यादित्येवं संभावनायाः सत्त्वेन योग्यतायाः साम्राज्यात् । प्रकृते कर्मयोगिनस्तु न कर्मकाले नापि पश्चात्कर्मकर्तृत्वेनानुसंधानम् ।

योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनंजय ।
सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ( २ । ४८ ) ।

इत्यत्र योगस्थ इति पदेनैतदेव बोध्यते । तस्य ह्ययमर्थः—हे धनंजय सङ्गं त्यक्त्वा कर्मकाले कर्मकर्तृत्वेन स्वस्य यदनुसंधानं तत्परित्यज्य तत एव च सिद्ध्यसिद्ध्योः समो भूत्वा कर्मणः सिद्धौ साद्गुण्येन संपादने तथा कर्मणोऽसिद्धौ वैगुण्ये चेत्यवस्थाद्वयेऽपि चित्तवृत्तेः साम्यमास्थाय तादृशसाम्यरूपयोगस्थः सन्कर्माणि कुर्विति । अत्र कर्मकाले सङ्गं त्यक्त्वेत्यनेन कर्तृत्वानुसंधानस्य कर्मकाल एव निषेधेन बाधात्तत एव च पश्चात्परोपदेशादिनाऽपि तदुद्बोधस्यासंभवात्कर्मजन्यमदृष्टं तत्र नोत्पद्यते ।

अत्र च श्रीकृष्णो भगवान्स्वयमेव निदर्शनम् । एतच्च भगवता स्वयमेव चतुर्थेऽध्याये 'चातुर्वर्ण्यम्०' ( ४ । १३–१४ ) इत्यादिना श्लोकद्वयेन सूचितम् । चातुर्वर्ण्यमिति श्लोके भगवतो मुख्यत्वेन प्रतिपाद्यं स्वस्याकर्तृत्वम् । चातुर्वर्ण्यसृष्टिस्त्वानुषङ्गिकतयोपात्ता । न मां कर्माणीति द्वितीयश्लोके च तादृशाकर्तृत्वमूलकः कर्मलेपाभावः प्रतिपाद्यत्वेन विवक्षितः । प्रसङ्गादत्र तच्छ्लोकद्वयं व्याख्यायते लोकानां भ्रान्तिनिरासाय । यतोऽत्र भ्रान्ताः केचिच्चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागश इत्युक्तेस्तेन तेन कर्मविशेषेण ब्राह्मणत्वादिजातिः सद्य एव प्राप्यत इति मन्वाना 'ब्राह्मणकर्म शूद्रेण क्रियते चेत्तेन कर्मणा स सद्य एव ब्राह्मणो भवति' इति वदन्ति । तत्रोच्यते । आदौ तावद्व्याहतमेतद्वचः । यथा 'मूकोऽहमस्मि' इत्युक्तिर्व्याहता भवति तद्वत् । तदुक्तम्—

मूकोऽहमस्मीति वदन्स्यात्किं विश्वसनीयवाक् । इति ।

यदि मूकस्तर्हि मूकोऽहमस्मीति वक्तुमेव न शक्नोति । अथ यदि मूकोऽ-

हमस्मीति वदति तर्हि मूक एव न भवति । तथा च यदि 'ब्राह्मणकर्म' स्यात्तर्हि नैव शूद्रस्तत्कर्तुं शक्नुयात् । यच्च शूद्रः कर्म कर्तुं शक्नोति नैव तद्ब्राह्मणकर्मेति निर्दिष्टं भवति । यतो ब्राह्मणेतरासाध्यं ब्राह्मणमात्रसाध्यं यत्कर्म तदिह ब्राह्मणकर्मेत्युच्यते न तु ब्राह्मणाब्राह्मणसाध्यं साधारणमाहारविहारादिकं कर्मात्र 'ब्राह्मणकर्म' शब्देनोच्यते । एतादृशं ब्राह्मणासाधारणं ब्राह्मणत्वावच्छिन्नोद्देश्यताकं कर्म च संध्याब्रह्मयज्ञाग्निहोत्रादिकम् । तच्च शूद्रः कथमपि कर्तुं न शक्नोति । अधिकाराभावात् । यथा बालसंगोपनं तच्चाङ्के बालं गृहीत्वा सामृतेन पाणिना तच्छरीरे गानपूर्वकं स्तोभनम्—( थोपटणे ) । एतच्च स्त्रीपुरुषसाधारणम् । यच्चासाधारणं स्त्रीकर्म 'अन्ततः स्तन्यप्राशनपूर्वकं तदेव बालसंगोपनम्' तत्कथमपि पुरुषो नैव कर्तुं शक्नोति । किंच वन्ध्या स्त्री स्त्रीजातीयाऽपि स्तन्यदानासामर्थ्यान्नाधिकारिणी भवति ।

किंच ब्राह्मणत्वादिजातिप्राप्तिरीशसृष्टावन्तर्भवति न जीवसृष्टौ । यथा विप्रस्य हुतशेषातिरिक्तकपिलाक्षीरपाने पशुत्वप्राप्तिरुक्ता ( प्राय० शेख० पृ० ६२ ) नहि तत्पाने सद्य एव पशुर्भवति । किंतु मरणानन्तरं तज्जन्मप्राप्तिः । तथा च नैव तादृशी जीवसृष्टिर्भवति । जीवः केवलं तादृशकर्मकरणेन समर्थाचरणेनेश्वरं प्रेरयति । यत ईश्वरोऽपि कर्मसापेक्ष एव विषमां सृष्टिं निर्मिमीते । अत एव रथकाराधिकरणसंगतिः । रथकारत्वजातिप्राप्तेरीश्वराधीनत्वात् । तथा च यथा—शिखाग्रस्थापने चापि स्यात्किं श्मश्रूदयः स्त्रियाः ।

वेणीसंधारणे चापि स्यात्किं पुंसः स्तनोद्गमः ॥

किंतु—स्त्रीत्वपुंस्त्वादिसंप्राप्तिः साक्षादीश्वरनिर्मिता ।
तथैव ब्राह्मणत्वादिजातिरीश्वरनिर्मिता ॥ इति ।

किंच संकरजा उग्रत्वाभीरत्वाद्या मनुष्यत्वव्याप्या जातयः सर्वा जन्मत एव प्राप्नुवन्तीति प्रसिद्धमेव । तथैव ब्राह्मणत्वाद्याः । कस्तत्र विशेषः ।

अत्रैतदवधेयम्—'चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः' इति भगवता किमर्थमुक्तमत्र 'चातुर्वर्ण्यं केन सृष्टम्' इति नार्जुनस्य प्रश्नः । येन तस्य 'मया सृष्टम्' इत्युत्तरं स्यात् । तथा 'चातुर्वर्ण्यं कथं सृष्टम्' ( अन्ततो वर्णानां मिथो भेदकं कं धर्ममभिसंधाय सृष्टम् ) इत्यपि नार्जुनस्य प्रश्नः । येन

तस्य ' गुणकर्मविभागशः सृष्टम् ' इत्युत्तरं स्यात् । नापि तादृशप्रश्नोन्नयनमत्र संभवति । तथा पूर्वप्रसङ्गाभावात् । तथा च किमर्थमेतदुक्तमिति चेदुच्यते–

अस्मिन्नध्याये कर्मनिष्ठानामज्ञानां जनानां ज्ञानमार्गप्राप्तिः केन प्रकारेण स्यात्स प्रकारो मुख्यत्वेन वर्णनीयः । कर्मत्यागेन तु न ज्ञानमार्गप्राप्तिः । कर्मत्यागस्यासंभवात् । नहि केनापि कथमपि कदाचिदपि कर्म त्यक्तुं शक्यते । अन्ततः ' कर्म त्यक्तम् ' एतादृशवृत्तिरूपस्यान्तरकर्मणोऽवर्जनीयत्वात् । ज्ञानोत्तरं कर्मत्यागः संभवतीत्यपि न शक्यते वक्तुम् । न ज्ञानिना कर्म त्यज्यते किंतु कर्म स्वयमेव तत्र त्यागविषयो भवति । तथा च त्याग इव तत्र दृश्यते नतु वस्तुतस्त्यागः । एतदुक्तं भवति- ज्ञानी स्वयं कर्मत्यागाय लेशतोऽपि न प्रयतते । अपि तु कर्मैव तस्माद्वियुज्यते । 'तत्र कर्म न भवति' इत्येव, नतु स कर्म त्यजतीति । तथा च कर्मत्यागो न ज्ञानमार्गप्राप्तिसाधनम् । किंतु कर्मणोऽवर्जनीयत्वेन सत्येव कर्मणि ज्ञानमार्गप्राप्तिप्रकारः प्रदर्शनीयः । तत्र सत्कर्मापि यदि फलाभिसंधिपूर्वकं कृतं चेत्तन्नैव ज्ञानमार्गप्राप्तिसाधनम् । प्रत्युत तत्रान्तःकरणं कामरूपमलेन लिप्तम् । अत एवाशुद्धं सदात्मज्ञानपराङ्मुखमेव भवति । तथा च कर्म कर्तव्यमस्त, किंतु तत्फलमनभिसंधाय कर्तव्यमित्येव । तच्च चित्तशुद्धिद्वारा मोक्षेच्छां जनयति । पूर्वमेवोत्पन्नां वा दृढीं करोति । मुमुक्षाया दार्ढ्यं चाऽऽफलोदयमनवसादः । फलप्राप्तये प्रयत्नकरणं च ।

अथ निष्कामकर्म चित्तशुद्धेः कया विधया कारणं भवति, तथा चित्तशुद्धिः कया विधया मोक्षेच्छायाः कारणं भवतीति चेदुच्यते–आद्ये तावच्चित्तं हे स्वभावतः शुद्धमेव । केवलं कर्मजेन पुण्यपापरूपेण मलेन लिप्तं सदशुद्धमित्युच्यते । कर्म तु द्विविधं क्रियमाणं जायमानं च । बुद्धिपुरःसरं यत्क्रियते तत्क्रियमाणम् । अज्ञानत एव च यद्भवति तज्जायमानम् । द्विविधमपि पुनस्तद्द्विविधम्–विहितं निषिद्धं च । तत्र यन्निषिद्धं सद्यत्क्रियमाणं तत्सर्वथा त्याज्यमेव शुभार्थिना । तत्तु पापोत्पादनायैव भवतीति तेन मलिनमेवान्तःकरणं स्यात् । यच्च निषिद्धं सज्जायमानं तस्माद्यद्यपि पापमुत्पद्यते तथाऽपि तन्नित्येन नैमित्तिकेन ( प्रायश्चित्तेन ) च कर्मणा विनश्यति । अतो नित्यं नैमित्तिकं चेति द्विविधमपि विहितं कर्म चित्तशुद्धये प्रभवति । काम्यं तु विहितं कर्म क्रियमाणनिषिद्धवत्सर्वथा मलोत्पादकमेवेति त्याज्यमेव भवति। निषिद्धात्क्रियमाणात्कर्मणः सकाशाज्जायमानो मलः पापरूपः । काम्याद्विहितात्कर्मणः सकाशा-

ज्जायमानो मलस्तु पुण्यरूप इति विशेष इत्यन्यत् । यच्च प्रत्यवायपरिहारार्थं क्रियते तत्काम्यमपि निष्कामकर्मवदेव मलापसारणद्वारा चित्तशुद्धय एव भवति । यदपि च केवलमीश्वरप्रीत्यर्थं क्रियते तदपि चित्तशुद्धय एव भवति । प्रीतो हीश्वरः प्रीतिविषयीभूतस्य संरक्षणे यतते । संरक्षणं च—

' न देवा दण्डमादाय रक्षन्ति पशुपालवत् ।
यं हि रक्षितुमिच्छन्ति बुद्ध्या संयोजयन्ति तम् ' ॥

इति रीत्या मलावहकर्मण्यप्रवृत्तिप्रयोजिकया बुद्ध्या संयोजनम् । तेन भाविमलोत्पत्तिप्रतिबन्धः क्रियते । तथा प्रायश्चित्तकर्मप्रवृत्तिप्रयोजिकया बुद्ध्या संयोजनमपि संरक्षणम् । तेन च पूर्वमुत्पन्नस्य मलस्यापसारणम् । यत्र च कर्मणि प्रत्यवायपरिहारार्थमिति वा परमेश्वरप्रीत्यर्थमिति वा न निर्देशस्तत्र कस्या अपि कामनाया अभाव एव । किंतु तत्र तस्य कर्तव्यापराङ्मुखतामालोच्य परमेश्वरस्तुष्टो भवत्येवेति पूर्वोक्तरीत्या तत्र तादृशबुद्ध्या संयोजनं करोत्येवेश्वरः ।

इदं तु बोध्यम्—प्रत्यवायपरिहारार्थमीश्वरप्रीत्यर्थं वा क्रियमाणं यत्कर्म तद्यद्यपि मलापनोदकमेव भवति तथाऽपि यदि तत्र तादृशं कर्माहं करिष्य इत्येवं कर्तृत्वाभिमानस्तर्हि तत्र ' अहं करोमि ' इत्येवं या मनोवृत्तिस्तादृशमनोवृत्तिरूपमान्तरं कर्म मलोत्पादकं स्यादेवेति । अतस्तत्र तादृशकर्तृत्वाभिमानराहित्याय सावधानेन भवितव्यमिति ।

विहितं कर्म तु प्रायः सर्वत्र क्रियमाणमेव । जायमानं तु क्वचिदेव स्यात् । यथा जीवन्मुक्तस्य तादृशं कर्म कदाचित्संभवति । तदानीं विधिनिषेधातीतेन तेन ' विहितम् ' इति न क्रियते किंत्वभ्यासदार्ढ्यात्तद्भवतीत्येव । लोकसंग्रहार्थं तदानीं तेन क्रियमाणमपि जायमानकल्पमेव । कर्तृत्वाभिमानाभावात् । लेशतोऽपि स्वार्थस्याभावात् । तथा बद्धावस्थायां केनचिल्लीलयैव प्रक्षिप्तं बिल्वपत्रतुलसीपत्रपुष्पादिकं वायुगत्या काकतालीयन्यायेन शिवादिदेवतोपरि पतितं चेत्तज्जायमानं कर्म नैव निषिद्धं किंतु विहितसजातीयमेव । तदपि च पापापनोदनार्थमेव भवति । कर्तृत्वाभिमानेन च प्रतिष्ठाविशेषरूपः काम एवोद्बुध्यते भवतीति तेनापि कामेन तत्कर्म सकामं भवति । तथा मनोराज्यतया प्रसिद्धमान्तरं कर्मापि बाह्यकर्मद्वारा लेपकमेव । क्वचिद्बाह्यकर्माभावेन लेपाजनकमपि

तन्त्रोपायस्वरूपमान्तरं कर्म लेपदूरीकरणाय लेशतोऽपि नोपयुज्यते । अतस्त-त्सर्वथा परित्यक्तव्यमेव । लेपजनकबाह्यकर्मोत्पादनशक्तिमत्त्वात् । एतावता निष्कामकर्मणः सकाशात्कया विधया चित्तशुद्धिर्भवति तत्प्रतिपादितम् ।

अधुना चित्तशुद्धिर्मुमुक्षायां कथमुपयुज्यते तदुच्यते—यद्यपि चित्तशुद्धेः प्राग्बद्धावस्थायामपि मोक्षेच्छा दृश्यते तथाऽपि सोत्पन्नविनष्टद्रव्यवत्क्षणमव-स्थायिनीत्यनुपयुक्तैव । यथा यथा वैराग्यमधिकं स्यात्तथा तथा सा दृढा भवेत् । वैराग्यं च चित्तशुद्ध्यधीनम् । अतश्चित्तशुद्धिर्मुमुक्षायामुपयुज्यत इत्यु-च्यते । एतदेव प्रकारान्तरेण विशदी क्रियते । मुमुक्षा नाम मोक्षविषयि-णीच्छा । मोक्षश्च बन्धादेव । मोक्षस्य बन्धप्रतिद्वंद्वित्वात् । बन्धविषये चानेके प्रश्नाः प्रादुर्भवन्ति—( १ ) को बध्नाति । ( २ ) कं बध्नाति । ( ३ ) केन साधनेन बध्नाति । ( ४ ) कथं बध्नाति । बन्धस्वरूपे हि कार्त्स्न्येना-वगते तस्मान्मोक्षः सुसाध्यो भवति । अत्रोत्तराणि—( १ ) कर्म बध्नाति । ( २ ) जीवात्मानं बध्नाति । ( ३ ) मन आद्युपाधिभिर्बध्नाति । ( ४ ) उपाधयश्चोपधेयं स्वात्मसात्कृत्य तदविभागेनैव यथेच्छं नृत्यन्ति । एतच्च मन-आद्युपाधीनां यथेच्छं वर्तनं पुण्यपापोपलेपे सत्येव संजायते नान्यथा । उप-लेपानुसारिण्येव हि मनोवृत्तिः । यथा प्रदीपप्रभा प्रदीपावरककाचवर्णानुसा-रिण्येव दृश्यते ।

काचावृतप्रदीपस्य प्रसरन्त्यभितः प्रभा ।
स्वास्तित्वे दीपतन्त्रेऽपि वर्णे काचानुसारिणी ॥

एतदेवोच्यते—बुद्धिः कर्मानुसारिणीति । न च बुद्धिकर्मणोः कः संबन्धो येन बुद्धेः कर्मानुसारित्वं स्यादिति वाच्यम् । यतः कर्मपदेनात्र कर्मजन्यो लेप उच्यते । लेपश्च संस्कारविशेषः । स च मनसः । बुद्धिश्च मनसो वृत्तिः । एवं च मनसः संस्कारविशेषानुरूपा मनसो वृत्तिरुचितैव । लेपशब्दवाच्यः संस्का-रविशेषश्चायं क्षयिष्णुर्वर्धिष्णुस्तटस्थश्चेति त्रिविधः । यस्य फलभोगप्रारम्भः स क्षयिष्णुः, फलभोगाद्धि तस्य क्षयो भवति । तथा प्रायश्चित्तेन तपसा वा विनाश्यो लेपः क्षयिष्णुः । यस्य स्वाविरोधिलेपजनकं कर्म प्रारभ्यते स वर्धिष्णुः । तदितरस्तटस्थः । तत्र कर्मानुसारिणी बुद्धिर्हि कायिकव्यापार-द्वारा भोगसाधनानि संपादयति । ततश्च फलभोगप्रारम्भो तज्जनको लेपः

क्षयिष्णुर्भवति । काम्यकर्माभावे च प्रायो वर्धिष्णोर्लेपस्याभाव एव । तटस्थस्य च प्राय उक्तन्यायेन भोगारम्भे क्षयिष्णुत्वम् । क्षयिष्णोश्च भोगेन क्षय इत्ये-तादृश्यामवस्थायां मनोवृत्तिः किमनुसरेत् । तदानीं बाह्यविषयाचिन्तनाभावाद-न्तर्मुखतैव तस्या जायते । एवं क्रमेण चित्तशुद्धिर्ज्ञानमार्गप्राप्तय उपयुज्यते ।

प्रकृतमनुसरामः । उक्तरीत्या फलाभिसंध्यभावे कृतं कर्म बन्धकं न भवति । कृतमपि तदकृतवदेव । तादृशस्य कर्मणः कर्ताऽप्यकर्तैव । अत्र चाहमेव (भग-वाञ्श्रीकृष्णः ) निदर्शनमित्याशयेन—

'तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम्'

इति भगवतोक्तम् । एवमुत्तरार्धस्य प्रकरणसंगतिः । तत्रत्येन पूर्वपरामर्शकेन तस्येत्यनेन पूर्वार्धोक्तस्य परामर्श इत्येव पूर्वार्धस्य प्रकरणसंगतिः । अतः 'चातु-र्वर्ण्यं केन सृष्टम्' इति 'कथं सृष्टम्' इति च प्रश्नो यद्यपि न दृश्यते नाप्य-न्नोन्नेतुं शक्यते तथाऽपि न दोषः । उक्तप्रकारेण संगतेः सत्त्वात् ।

अथात्रेदं विचार्यते—उत्तरार्धे तस्येत्यस्य स्थाने जगत्पदं प्रक्षिप्य—

'जगत्कर्तारमपि मां विद्ध्यकर्तारमव्ययम्'

इत्येतावतैवाभिधित्सितार्थस्य सिद्धौ सत्यां 'चातुर्वर्ण्यम्' इति पूर्वार्धं किमर्थमुक्त-मिति । उच्यते—न तावता निदर्शनं प्रकृतोपयुक्तं सिध्यति । प्रकृते हि 'बुद्धि-पुरःसरं क्रियमाणेऽपि कर्माणि फलाभिसंध्यभावे सत्यकर्तृत्वमेव' इत्ययमर्थो निदर्शनेन साधनीयः । भगवतो जगत्कर्तृत्वं तु निःश्वसितवदिति तत्राकर्तृत्वं लोकतः सिद्धमेव । लोकेऽपि हि हस्तचालनादौ स्वाभाविके कर्माणि जायमानेऽ-कर्तृत्वं मन्यन्ते । तथा च निःश्वसितन्यायेन सामान्यतो जगदुत्पत्तावपि तत्र विशेषो बुद्धिपुरःसरमेव कर्त्रा साधनीयो भवति । अतश्चातुर्वर्ण्यं मया सृष्ट-मिति विशेषोक्तिरावश्यकी । तावतैव तु न सिद्धिः । सामान्यसृष्टौ 'निर्विशेषं न सामान्यम्' इति न्यायेन यदृच्छया विशेषसृष्टिसंभवात् । किंतु तेषु विशे-षेषु चतुर्षु वर्णेषु मिथो भेदकं यत्प्रतिस्वं नियमेन दृश्यते 'गुणकर्मविभागशः' इति तत्पूर्विका सृष्टिर्बुद्धिपुरःसरमेवेति । तथा च बुद्धिपुरःसरं क्रियमाणेऽपि कर्माणि फलाभिसंध्यभावेनाकर्तृत्वमेव ।

'न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा'

इत्यनेनोक्तमिति प्रकृतोपयुक्तनिदर्शनसिद्धिः । एवं चात्र बुद्धिपुरःसरकर्तृत्वासि-

द्ध्यर्थं 'गुणकर्मविभागशः' इत्युक्तमिति न तत्स्वार्थयुक्तं किंत्वन्यार्थमेव। अन्यार्थदर्शनं च द्विविधम्—प्राप्तिरहितं प्राप्तिसहितं च। आद्यं त्वसाधकमेव। तथा चोक्तमाचार्यपादैः शारीरभाष्ये—'अन्यार्थदर्शनस्य च प्राप्तिरहितस्यासाधकत्वात्' (  ) इति। युक्तं चैतत्। कस्यचिद्बलातिशयप्रदर्शनार्थं 'अपि गिरिं शिरसा भिन्द्यात्' इत्यर्थवादोक्तिः क्रियते। तत्र चैतामेवार्थवादोक्तिं प्रमाणीकृत्य वस्तुतो गिरिच्छिद्रकरणे न स नियुज्यते। शिरसा गिरिभेदनस्य प्रमाणसिद्धत्वाभावात्। तथा 'लत्ताप्रहारेणायं जलं निष्काशयेत्' इत्यर्थवादोक्तिं प्रमाणीकृत्य न कूपखनने नियुज्यते। तादृशार्थस्यान्यतः सिद्धत्वाभावेन प्राप्तिरहितत्वात्। अथ यद्यन्यार्थदर्शनं प्राप्तिसहितं तर्हि यतः प्रमाणात्सोऽर्थः सिध्यति तदेव प्रमाणतयोपन्यसनीयं भवति। नान्यार्थदर्शनस्य तत्र प्रमाणतयोपन्यासो युक्तः। एतेनाऽऽधुनिकाः केचन पण्डितंमन्याः 'ब्राह्मणस्य कर्म शूद्रेण कृतं चेत्तेन कर्मणा स सद्य एव ब्राह्मणो भवति' इत्येवमर्थं साधयन्तस्तत्र च—

'चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः'

इत्युक्तिं प्रमाणत्वेन प्रदर्शयन्तः प्रत्युक्ताः। अपि च चातुर्वर्ण्यसृष्टिः—गुणकर्मविभागोत्पादिका, गुणकर्मविभागश्चातुर्वर्ण्योत्पादक इति वा। कार्यकारणभावोऽस्माद्वाक्यान्न कथमप्यवगम्यते। शस्प्रत्ययान्तप्रयोगेण केवलं तयोः साहचर्यमवगम्यते। गुणकर्मविभागेन मिथो भिन्ना दृश्यमानाश्चत्वारो वर्णा यथा सृष्टा इत्यर्थः। अत्र तत्तद्वर्णनियतो गुणकर्मविभाग विशेष इति तत्रत्यः कश्चिद्विशेषः क्वचिद्दृश्यमानः स्वसहचारेण वर्णविशेषमनुमापयेत्। न तु पूर्वसिद्धं वर्णान्तरं परिवर्तयेत्। तादृशस्थलेषु स हेत्वाभासो भवति। न हि धूमभ्रान्त्या गृहीतेन धूलिपटलेनाग्न्यनुमाने तत्र वस्तुतोऽग्निर्लभ्यते। एवं यत्र ब्राह्मणस्य कर्मान्येन कृतमिति प्रतीयते तत्र नैव तद्ब्राह्मणस्य कर्म भवति। यतो ब्राह्मणतदितरसाधारणं कर्म न ब्राह्मणकर्मेति तत्रोच्यते किंतु ब्राह्मणासाधारणं ब्राह्मणमात्रसाध्यं ब्राह्मणमुद्दिश्य विहितं यत्कर्म तदेव ब्राह्मणकर्म भवति। अतो ब्राह्मणेतरेण कृतं कर्म यदि 'ब्राह्मणकर्म' इति गृहीतं स्यात्तर्हि तेन ब्राह्मणवर्णानुमानमप्रयोजकमेव भवति। यद्यनेन कृतं तर्हि नैव तद्ब्राह्मणकर्म। अथ यद्ब्राह्मणकर्म नैव तदन्येन कृतं भवेत्। तथा च 'ब्राह्मणकर्मान्येन कृतम्' इति वागश्रद्धेयैव।

'मूकोऽहमस्मीति वदन् स्यात्किं विश्वसनीयवाक्' इतिवदित्युक्तमेव । किंच ब्राह्मणेन कृतं यद् ब्राह्मणकर्म तदपि नैव सद्यो ब्राह्मणत्ववर्णोत्पादकम् । किंतु केवलं तत्र पूर्वसिद्धतादृशवर्णानुमापकं भवति । सर्वथा जन्मतः प्राप्ताया जातेः परिवर्तनं सुतरां न संभवति । किंच चातुर्वर्ण्यं० गुणकर्म० इति यदत्रोक्तं तद-न्यार्थमर्थवादतुल्यमुक्तम् । तस्यान्यतः कस्मात्प्रमाणात्प्राप्तिरिति विचारे क्रिय-माणे गीतास्थोक्तिरेव प्रथमतो बुद्धिमारोहति । तथा ह्यष्टादशाध्याये—

'न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः ।
सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैः ॥
ब्राह्मणक्षत्रियविशां शूद्राणां च परंतप ।
कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ॥
शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च ।
ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम् ॥
शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् ।
दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ॥
कृषिगोरक्ष्यवाणिज्यं वैश्यकर्म स्वभावजम् ।
परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम् ॥
स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः' ( गी० १८।४०–४५ )

अत्र प्रकृतिजैर्गुणैः, स्वभावप्रभवैर्गुणैः, स्वभावजं कर्म, स्वे स्वे कर्मणि, इत्यादिपदैर्गुणविभागः कर्मविभागश्च तत्तद्वर्णनियतः स्वाभाविक एवोक्तः । स्वाभा-विको जन्मसिद्धः । स्वे कर्मण्यभिरतस्यैव च संसिद्धिर्नान्यस्येति चोक्तम् । तथा च जन्मसिद्धवर्णानुरूप एव गुणकर्मविभागः । नतु विपरीतः । कर्मकरणात्पूर्व-मेव हि 'इदं कर्म स्वकीयम्' इति निर्धारयितव्यं किल । तत्र स्वपदेन को वर्णो ग्राह्य इति विचारे क्रियमाणे जन्मसिद्ध एव वर्णः संभवति नान्यः । एवं च 'ब्राह्मणस्य कर्म शूद्रेण कृतं चेत्तेन कर्मणा स सद्य एव ब्राह्मणो भवति' इत्य-यमर्थः कथमपि नावगम्यते । अथेदं विचार्यते——

'चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः'

इत्यस्यान्यार्थतयोक्तस्य मूलप्रमाणापेक्षायामष्टादशाध्यायस्था 'न तदस्ति' इत्यादयः पञ्चषाः श्लोकाः प्रदर्शिताः । तत्र वर्णभेदेन कर्मविभाग उक्तः ।

किंतु वर्णभेदेन गुणविभागस्तत्र न दृश्यते। न चापि संभवति। यतो वर्णाश्चत्वारो गुणास्तु त्रयः। एकैकस्य वर्णस्यैकैको गुण इति चेदेको वर्णोऽवशिष्यते। किंच 'न तदस्ति०' 'त्रिभिर्गुणैः' इति वदता भगवता प्रत्येकस्य गुणत्रयसंबन्ध उक्तः। स च नैकस्य नापि द्वयोः किंतु त्रयाणामेव। गुणैरित्येव सिद्धे त्रिभिरिति पृथक्शब्दनिर्देशात्। स च त्रयाणां संबन्धः सर्वत्रैव। पृथिव्यां दिवि देवेषु वेति निर्देशात्। स चाऽऽवश्यक एव। त्रिभिर्गुणैर्युक्तमिति वाच्ये 'मुक्तं न' इति नञर्थद्वयनिर्देशात्। स च सार्वदिक एव। प्रकृतिजैरिति गुणविशेषणात्। अतो वर्णभेदेन गुणविभागो नोपपद्यते। तथा च तत्र किं मूलमिति चेत्। उच्यते—

'कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः'

इत्येवं वर्णशः कर्मविभागः स्वाभाविकगुणविभागमूलक एवेति तत्रोक्तमिति तेनैव वर्णशः कथितेन कर्मविभागेन वर्णशो गुणविभागोऽपि सिद्धो भवति। तथा चोक्तप्राय एव सः। स यथा यद्यपि 'सत्त्वं रजः, तमः' इत्येवं त्रिधा यो गुणविभागः सोऽत्र न ग्रहीतुं शक्यते। 'न तदस्ति०' इत्युक्त्या सर्वेष्वेव प्राणिषु सर्वदैव सर्वत्रैव त्रयाणामेव च संबन्धस्याव्यभिचरितत्वात्। तथाऽपि मिथो भिन्नेष्वनेकेषु प्राणिषु विद्यमाना मिथो भिन्ना अनेकाः सत्त्वव्यक्तयः परिमाणतो विषमा या वर्तन्ते तासां मिथो भेदोऽत्र गुणविभाग इति गृह्यते। तथैवानेका रजोव्यक्तयोऽनेकाश्च तमोव्यक्तयः। तासां च मिथो यो भेदः सोऽत्र गुणविभाग इति गृह्यते। त्रयाणां च गुणानामेकत्रावस्थितिर्न साम्येन भवति। किंतु वैषम्येणैव। जगद्वैचित्र्यानुरोधात्। तथा हि—बुद्धिस्त्रिगुणात्मिका। तस्याश्च बुद्धेरेकमर्धमेकेन गुणेन व्याप्यते। अपरेऽर्धे भागत्रयात्मके भागद्वयमन्येन गुणेन व्याप्यते। अवशिष्टश्चैको भागोऽपरेण गुणेन व्याप्यते। इदं च साधारणं प्रमाणम्। तेन क्वचिन्न्यूनाधिक्येऽपि न क्षतिः। सर्वथा न क्वापि बुद्धौ गुणानां साम्यम्। तत्र यस्य प्राणिनो बुद्धेरर्धं येन गुणेन व्याप्यते तेन गुणेन स प्राणी व्यपदिश्यते। यथा सात्त्विकोऽयं राजसोऽयं तामसोऽयमिति। भूयसा हि व्यपदेश इति न्यायात्। तत्र बुद्ध्यर्धव्यापी गुणो मुख्यः। स एव च तत्र नृप इव प्राधान्येन कार्यकर्ता भवति। भागत्रयात्मकापरार्धगतभागद्वयव्यापी तु तत्सहायो मन्त्रिवत्। भागैकव्यापी तु मन्त्र्यनुसारी परिचारकवत्। तत्र कार्यकर्ताऽपि नृपो मन्त्रिणोऽनुमतिमपेक्षते। परिचारकानुमतिं तु नापेक्षते।

न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा ।
इति मां योऽभिजानाति कर्मभिर्न स बध्यते ॥ (गी. ४।१४)।

अत्र 'न मे कर्मफले स्पृहा' इति किमर्थमुक्तम्, अभिजानातीत्यत्राभीत्युपसर्गस्य किं प्रयोजनम्, तच्चाभिज्ञानं कर्मकृतबन्धाभावे साधनमुक्तम् । तत्साधनं दृष्टद्वाराऽदृष्टद्वारा वा कर्मकृतबन्धाभावरूपं साध्यं साधयति, कर्मभिरित्यत्र कर्मपदेन तादृशाभिज्ञानात्पूर्वकालिककर्मग्रहणमुत तदुत्तरकालिककर्मग्रहणमथवा द्विविधस्यापि, तथा 'बध्यते' इत्यत्र लिप्यत इत्येव कुतो नोक्तम् ? ।

अत्रोत्तराणि । प्रथमतः प्रासङ्गिकं किंचित्—अत्र

'नाहं करोमि कर्माणि नैव मे कर्मसु स्पृहा'

इत्येवं कर्मणः कर्मस्पृहायाश्च निषेधो नोक्तः । अर्जुनस्य पुरतः साक्षात्सारथ्यादिकर्मकर्तुर्भगवतस्तथोक्तेरसंभवात् । स्पृहाया अपि निषेधो न संभवति

'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते'

इति न्यायेन स्पृहाया असत्त्वे कर्मणोऽसंभवात् । यद्यपि भगवान्केवलं लोकसंग्रहार्थमेव कर्म करोति तथाऽपि स्पृहाऽवर्जनीयैव । लोकसंग्रहोऽपि हि स्पृहाद्वारैव कर्मणि प्रेरयति । यद्यपि फलाभिसंध्यभावेनाहंकाराभावेन च कृतमपि कर्माकृतप्रायमेवेति भगवदाशयस्तदनुसारेण 'नाहं करोमि कर्माणि' इति वक्तुं शक्यते तथाऽपि भगवता तथा नोक्तम् । यतो वक्त्रा श्रोतृबुद्ध्यनुसारेणैव वक्तव्यं भवति । अत्र 'न मां कर्माणि लिम्पन्ति' इति प्रथमचरणोक्तेऽर्थे हेतुप्रदर्शनार्थं द्वितीयचरण उपात्तः । यतो मे ( भगवतः ) कर्मफलस्पृहा नास्ति तत एव मां कर्माणि न लिम्पन्ति । अत्र 'न च कर्मफले स्पृहा' इत्येव सिद्धे निषेध्यकोटौ 'मे' इत्युक्तिरहंकारस्यापि निषेधार्था । न केवलं फलस्पृहाऽत्र निषिध्यते किंतु तदाश्रयीभूताहंभावविशिष्टा । अहंभाव एव नास्ति दूरे एव तस्य स्पृहा । पूर्वश्लोके विद्ध्यकर्तारमित्यनेनाहंकाराभावः सूचित एव । सत्यहंकारे कर्तृत्वस्यावर्जनीयत्वात् । अहंकाराभाव एव च कर्मलेपाभावस्य साक्षात्कारणम् । तद्द्वारा च फलस्पृहाविरहस्तत्कारणम् । इह 'नाहंकारोऽस्ति मे यतः' इत्येवं साक्षात्कारणे वक्तव्ये तदनुक्त्वा परम्पराकारणोक्तेः फलमनुपदमेव वक्ष्यते ।

ननु भगवतः कर्मफलस्पृहायाः साश्रयाया अभावात्कर्मलेपाभावोऽस्तु नाम । परंतु तादृशज्ञानवतोऽन्यस्य तादृशज्ञानमात्रेण कर्मबन्धाभाव उत्तरार्धोक्तो नोप-

पद्यते। नहि निर्मलं मणिं जानानस्य देवदत्तस्य तादृशज्ञानमात्रेण नैर्मल्यं जायते। न च 'न मां कर्माणि लिम्पन्ति०' इत्यादि जानानस्य तादृशज्ञानमपूर्वोत्पादनद्वारा कर्मबन्धाभावं जनयतीति वाच्यम्। अपूर्वकल्पनायां मानाभावात्। यजेत स्वर्गकाम इत्यादिश्रुतिरेव हि प्रमाणमूर्धन्यभूता यागस्वर्गयोः कार्यकारणभावस्यान्यथानुपपत्त्याऽपूर्वं कल्पयितुं प्रभवति। यत्र च स्मृत्युक्तकार्यकारणभावोपपत्तयेऽपूर्वकल्पनं तत्रापि तादृशस्मृतिमूलप्रमाणभूतश्रुतिबलादेवापूर्वकल्पनम्। 'न मां कर्माणि लिम्पन्ति०' इत्यस्य सिद्धार्थानुवादरूपत्वादयमर्थः प्रकारान्तरेणैव साध्यो भवति। किंच 'भगवन्तं कर्माणि न लिम्पन्ति' इति जानतां मादृशां तादृशज्ञानमात्रेण कर्मबन्धाभावो न दृश्यते। तथा च कथमस्यार्थस्योपपत्तिरिति चेत्।

उच्यते–'कर्मफलस्पृहाविरहप्रयुक्तो भगवतः कर्मलेपाभावः' इति ज्ञानं तादृशकर्माचरणद्वारा तादृशज्ञानवतः कर्मबन्धाभावं साधयति न त्वन्यथा। यदि तादृशज्ञानमपूर्वोत्पादनद्वारा कर्मबन्धाभावं साधयेत्तर्हि 'न मां कर्माणि लिम्पन्ति' इत्यत्र हेतुत्वेन 'न मे कर्मफले स्पृहा' इति यदुक्तं तद्व्यर्थं स्यात्। कस्यचिदर्थस्य हेतुकथनं हि तादृशहेत्वभावे तदर्थस्याभावं बोधयति। तथा च 'न मे कर्मफले स्पृहा' इति द्वितीयचरणोक्तिरेव "न भगवन्तं कर्माणि लिम्पन्ति० इति ज्ञानं कर्मबन्धाभावे कर्मफलस्पृहाविरहद्वारैव कारणं न त्वपूर्वद्वारा" इत्यत्र प्रमाणम्। दृष्टे संभवत्यदृष्टकल्पनाया अन्याय्यत्वाच्च।

नन्वेवं 'भगवतो न कर्मलेपः' इति ज्ञानात्प्राक्कृतकर्मभिः फलस्पृहायुतैर्जातो बन्धस्तदवस्थ एव स्यात्। अपूर्वद्वारा कारणेऽङ्गीक्रियमाणे तु पूर्वकृतकर्मबन्धस्याप्यपूर्वेण विनाशः संभवतीति चेत्सत्यम्। इष्टत्वात्। 'भगवतो न कर्मलेपः' इति ज्ञानेन नैव पूर्वकृतकर्मजन्यबन्धस्य नाशः। तन्नाशस्तु प्रायश्चित्तं, भोगः, आत्मैक्यसाक्षात्कारश्चेत्येतदन्यतमेनैव जायते।

अवश्यं चैतदपूर्वद्वारवादिनाऽप्यभ्युपेयम्। इतरथा भगवतो न कर्मलेप इति ज्ञानमात्रेणापूर्वद्वारा पूर्वकृतकर्मजन्यबन्धस्यापि विनाशे भूयसां प्राणिनामयत्नसिद्धो मोक्षः स्यात्। 'भवतु का तत्रासूया' इति चेन्न मेऽसूया, किंतु 'तमेव विदित्वाऽति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इत्येवमात्मविज्ञानस्यैव मोक्षसाधनत्वं नान्यस्येति प्रतिपादयन्ती श्रुतिर्व्याकुप्येत। किंच–

'इति मां योऽभिजानाति कर्मभिर्न स बध्यते'

इति प्रकृतवाक्यादपि तथाऽर्थो नावगम्यते । यतस्तत्र 'कर्मबन्धो विनश्यति' इति नोक्तम् । 'किंतु कर्मभिर्न स बध्यते' इति । तथा च प्राप्तस्य बन्धस्य निषेधोऽत्र प्रतीयते । न तु पूर्वजातस्य बन्धस्य विनाशः । वर्तमानकालिकक्रिया-संनिकृष्टेन नञा भूतकालिकसिद्धतत्क्रियाविनाशस्याप्रतीतेः । एवं च 'भगवतो न कर्मलेपः' इति ज्ञानं फलस्पृहाविरहद्वारैव कर्मबन्धाभावे कारणमिति सिद्धम् । द्वारं चैतत् 'न मे कर्मफले स्पृहा' इति द्वितीयचरणेन सूचितमित्युक्तमेव ।

नन्वेतत्सूचनापेक्षया स्पष्टप्रतिपत्तये लाघवाय च 'नैव स्पृहा फले यस्य कर्मभिर्न स बध्यते' इत्येतावदेव वक्तव्यम् । न च तत्र द्वारत्वेन प्रतीतस्यात्र लघुभूतन्यासे कारणत्वेन प्रतीतिः स्यादिति वाच्यम् । इष्टापत्तेः । तथा प्रतीतावपि बाधकाभावात् । न च तत्र कारणत्वेन प्रतीतस्य 'भगवतो न कर्मलेपः' इति ज्ञानस्यात्र कारणत्वेन प्रतीतिरेव न स्यादिति वाच्यम् । तादृशप्रतीत्यभावेऽपि दोषाभावात् । प्रत्युत 'भगवतो न कर्मलेपः' इति ज्ञानाभावेऽपि फलस्पृहाविरहमात्रेण कर्मबन्धाभावस्य दृष्टत्वेन तादृशकार्यकारणभावस्य व्यभिचरितत्वाच्चेति चेत्सत्यम् । 'फलस्पृहाविरहे सति कर्मबन्धाभावः' इत्यत्र स्वयमेव दृष्टान्त इति भगवत आशयः ।

'न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा'

इत्यनुक्तौ दृष्टान्तप्रतीतिर्न स्यात् । दृष्टान्तेन हि दार्ष्टान्तिकोऽर्थः शीघ्रं बुद्ध्यारूढः स्थिरपदश्च भवति । दृष्टोऽन्तो निश्चयो येन स दृष्टान्त इति दृष्टान्तशब्दनिर्वचनेनाप्येतत्सिध्यति । नन्वेवं दृष्टान्तप्रदर्शनमुपयुज्यतां किल । किंतु कार्यकारणभावस्य यो व्यभिचारोऽनुपदमेव प्रदर्शितस्तस्य का गतिरिति चेदुच्यते—'भगवतो न कर्मलेपः' इति ज्ञानरूपकारणस्याभावेऽपि कार्योत्पत्तिर्दृश्यत इत्यतः 'कारणाभावे कार्याभावः' इति व्यतिरेकस्य व्यभिचारस्तवाभिमतः । परंतु यत्रैकस्य कार्यस्य कारणानेकत्वं तत्रानेके कार्यकारणभावाः, इत्येकस्य कार्यकारणस्याभावेऽपि कार्यकारणभावान्तरस्य तत्र सत्त्वेन न व्यभिचारः । यथाऽग्नेस्तृणारणिमणयः कारणानीति तत्र तृणाद-

ग्नेरुत्पत्तावरणिमण्योः कारणभूतयोरभावेऽपि न व्यभिचारशङ्कोदेति तद्वत्। तर्हि किं तत्र कारणमिति चेत्तीव्रं वैराग्यमिति गृहाण। तीव्रवैराग्यादेव हि तत्र फलस्पृहाविरहः।

अत्रेदं तत्त्वम्—' भगवतः कर्मलेपस्य फलस्पृहायाश्चाभावः ' इति ज्ञानवान् यः स कर्मभिर्न बध्यत इत्युक्ते ' केन हेतुना न बध्यते ' इत्याकाङ्क्षायां स इत्यनेन पूर्वोक्तज्ञानवतः परामर्शेनोपस्थितत्वात्तादृशविशेषज्ञानं हेतुत्वेनान्वेतुमर्हति। अयमार्थोऽन्वयो न शाब्द इत्यन्यत्। तस्य च ज्ञानविशेषस्य हेतुभावः पुनः कया विधयेत्याकाङ्क्षायां तादृशज्ञानविशेषविषयत्वेनोपस्थितः फलस्पृहाविरहो द्वारत्वेन संबध्यते। यद्यपि फलस्पृहाविरहस्य भगवन्निष्ठत्वरूपविशेषाकारेण तादृशज्ञानविशेषविषयता तथाऽपि स फलस्पृहाविरहः सामान्याकारेणैव द्वारी भवति। योग्यताबलात्। एवं च 'भगवतः कर्मलेपस्य फलस्पृहायाश्चाभावः ' इति ज्ञानं फलस्पृहाविरहजनकत्वेन कर्मबन्धाभावस्य कारणमिति सिद्धम्। एतेन ' भगवतः कर्मलेपस्य फलस्पृहायाश्चाभावः ' इति ज्ञानवताऽपि यदि फलाभिसंधिपूर्वकं कर्म क्रियते तर्हि तद्बन्धकं भवत्येवेत्यतस्तत्र कारणसत्त्वेऽपि कार्याजननात्कार्यकारणभावो व्यभिचरित इत्यपास्तम्। तत्र कारणतावच्छेदकस्य फलस्पृहाविरहजनकत्वस्याभावात्।

अथवा तादृशस्थले ' भगवतः कर्मलेपस्य फलस्पृहायाश्चाभावः ' इति शाब्दज्ञानमात्रं न तु तदनुभवपर्यवसायि। प्रकृते त्विति मां योऽभिजानातीत्यत्राभिजानातीत्यनेनानुभवपर्यवसायि ज्ञानमुच्यते। अत एवाभीत्युपसर्गः प्रयुक्तः। तथा चानुभवपर्यवसायिज्ञानाभावेन कारणाभावादेव कार्याभाव इति न व्यभिचारशङ्का। यत्र च फलस्पृहाविरहस्तादृशज्ञानात्पूर्वमेवास्ति तत्र तादृशज्ञानं फलस्पृहाविरहस्य पोषकं स्यात्। पोषकस्य चातिशयजनकत्वात्। तादृशातिशयविशिष्टस्य फलस्पृहाविरहस्य जनकं तज्ज्ञानं भवत्येवेति न कारणतावच्छेदकस्य फलस्पृहाविरहजनकत्वस्य तत्राभावः शङ्कनीयः। ' अविशिष्टवस्तु तावदसत्कल्पम् ' इति न्यायेन विशिष्टस्यैव वस्तुनो जातत्वोक्तेश्च। अत्र तादृशज्ञानविशेषस्य हेतुत्वमप्रकल्प्य द्वारत्वेन प्रकल्पितः फलस्पृहाविरह एव यदि हेतुत्वेन प्रकल्प्यते तर्हि लाघवमुक्तव्यभिचारशङ्का च नोदेति।

अत्रेदमवधेयम्—कर्मजन्यलेपापेक्षया कर्मजन्यबन्धस्य स्वरूपं भिन्नमुत

तदेव । यदि लेपो बन्धश्चैक एव तर्हि ' न मां कर्माणि० ' इति प्रकृतश्लोके प्रथमचतुर्थचरणयोरेक एव धातुः ।

' न मां कर्माणि लिम्पन्ति० कर्मभिर्न स लिप्यते ' इति ।
न मां कर्माणि बध्नन्ति० कर्मभिर्न स बध्यते ' ॥

इति वा प्रयोक्तव्यः । न च लेपबन्धयोरेकत्वेऽप्यनवीकृतत्वदोषाभावाय पर्यायान्तरोपादानमिति वाच्यम् । यत्र पदद्वयप्रतिपादितार्थद्वयस्यैक्यप्रतिपत्तिर्विवक्षिता तदतिरिक्तस्थले हि पर्यायान्तरोपादानमस्तु नाम । ऐक्यप्रतिपत्तिविवक्षायां तु तस्यैव पदस्य निर्देश आवश्यकः । यथा—

' उदेति सविता ताम्रस्ताम्र एवास्तमेति च ।
संपत्तौ च विपत्तौ च महतामेकरूपता ॥ इति ।

अत्र ' उदेति सविता ताम्रो रक्त एवास्तमेति च '

इत्युच्यमाने पदान्तरप्रतिपाद्यमानः स एवार्थो भिन्न इव प्रतीयमानः प्रतीतिं व्यवदधाति । लेपबन्धयोरैक्ये तु प्रकृते ' न मां कर्माणि० ' इत्यत्र ज्ञानविषयान्तर्गतो निषेधप्रतियोगित्वेन निर्दिष्टो लेपः, तथा ज्ञानफलान्तर्गतो निषेधप्रतियोगित्वेन निर्दिष्टो बन्धश्चाभिन्न एवेति तयोरानुगुण्यसंपादनायैक्यप्रतिपत्तिर्भगवतो विवक्षिता स्यात् । तदर्थं च तत्र भेदानवभासाय लिम्पिं बन्धिं वैकमेव धातुमुभयत्र प्रयुञ्जीत । तादृशस्थले ह्येक एव धातुः प्रयोक्तुमुचितः । तस्मादत्र धातुद्वयं प्रयुक्तवतो भगवतो लेपबन्धयोर्भेद एवाभिप्रेत इत्यवगम्यते । चन्दनेन लिप्ता तनूः, गोमयेन लिप्ता भूः, इत्यादिभ्यः शृङ्खलया बद्धो नागो रज्ज्वा बद्धा नौरित्यादिषु भिन्न एवार्थः प्रतीयते । तत्र लिप्तस्य लेपनसाधनपारतन्त्र्यं नास्ति । बद्धस्य तु बन्धनसाधनपारतन्त्र्यं संदृश्यते । ननु चन्दनरज्ज्वादिवत्कर्मशब्दवाच्यो न मूर्तः कश्चन पदार्थः, येन तत्कृतलेपबन्धयोः पार्थक्यमुन्नेतुं शक्यं स्यादिति चेन्न । अमूर्तस्यापि लेपबन्धसाधनत्वदर्शनात् । यथा मदेन लिप्तः प्रेम्णा बद्ध इति । अस्त्वेवं तथाऽपि पार्थक्यं लेपबन्धयोः कथमवसेयम् । उच्यते । अत्र कर्मैव लेपकर्तृत्वेन बन्धनकर्तृत्वेन च निर्दिश्यते । यद्यप्येकस्य कर्मणो लेपबन्धकर्तृत्वं युगपद्विरुध्यते तथाऽपि कालभेदेनाविरोधः । तथा हि—कृतं कर्मादृष्टद्वारा प्रथमतः कर्तारं लिम्पति । पुण्यं पापं चादृष्टमित्युच्यते । यदा च तत्कर्म फलदानायोन्मुखं भवति तत्का-

लमारभ्य फलभोगावसानपर्यन्तं तत्कर्म तस्य बन्धकमित्युच्यते । बन्धनावस्थायां हि जीवस्तत्परतन्त्रो भवति। न तथा ततः पूर्वं लेपावस्थायां तत्कर्माधीनः । इत्थं कर्मजन्ययोर्लेपबन्धयोः स्वरूपं पार्थक्येन प्रदर्शितम् ।

अत्रेदमवधेयम्—'कर्मण्येवाधिकारस्ते' इति हि भगवतोक्तम् । तथा चावश्यं भाव्यपि कर्मार्जुनस्य मोक्षमार्गप्रतिबन्धकं यथा न भवेत्तथाऽत्रोच्यते । तत्र 'कर्मभिर्न स बध्यते' इति चतुर्थचरणे मोक्षमार्गप्रतिबन्धकस्य कर्मबन्धस्याभावः कार्यत्वेन निर्दिष्टः । 'इति मां योऽभिजानाति' इति तृतीयचरणे तत्कारणत्वेन ज्ञानविशेषो निर्दिष्टः । तादृशज्ञानविशेषस्य विषयो मामित्यस्मच्छब्दार्थो भगवान्स्वयमेव । इति शब्देन परामृष्टं च विषयतावच्छेदकम् । परामृश्यमानोऽर्थश्च—

'न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा'

इति पूर्वार्धेन निर्दिष्टः । तत्र कर्मलेपाभाववत्त्वं कर्मफलस्पृहाविरहवत्त्वं च धर्मद्वयं भगवद्वृत्ति प्रतीयते । तच्च धर्मद्वयमपि पार्थक्येन विषयतावच्छेदकमथवा मिथोऽनुषक्तमेव । तच्च कर्मलेपाभावविशिष्टकर्मफलस्पृहाविरहवत्त्वमित्येकमथवा कर्मफलस्पृहाविरहविशिष्टकर्मलेपाभाववत्त्वम् । द्वयोरन्यतरेणैकेनैव तु कार्यसिद्धिः । तथा हि—कार्यं चात्र कर्मजन्यबन्धाभावः । तत्साधनं च भगवद्विषयकं ज्ञानम् । ज्ञानं च स्वविषयरूपानुगुण्येनैव स्वकार्यं साधयति । तथा च 'न मे कर्मफले स्पृहा' इत्यनुच्चार्य केवलं 'न मां कर्माणि लिम्पन्ति' इत्येवं कर्मलेपाभाववत्त्वमेकमेव विषयतावच्छेदकं निर्दिश्यते तर्हि तादृशभगवद्विषयकज्ञानेन ज्ञानिनः कर्मबन्धाभावः कथं सिध्येत् । कर्मबन्धाभावो हि कर्मफलस्पृहाविरहेण निष्पाद्यते । फलस्पृहाया बन्धकारणत्वेन स्पृहाविरहस्य बन्धाभावसाधनत्वं युज्यते । तथा च 'भगवतो न फलस्पृहा' इति ज्ञानं ज्ञानिनि फलस्पृहाविरहं समुत्पाद्य तद्द्वारा तस्य कर्मबन्धाभावं साधयितुं प्रभवति । 'भगवतो न कर्मलेपः' इति ज्ञानमात्रेण ज्ञानिनि फलस्पृहाया अनिवारणात् । यदि तु 'न मां कर्माणि लिम्पन्ति' इति नोच्चार्यते तर्हि 'भगवतः फलस्पृहाविरहः' इति ज्ञाने सत्यपि ज्ञानिना यावत् 'भगवति फलस्पृहाविरहेण किं साधितम्' इति न ज्ञायते न तावत्तस्मिञ्ज्ञानिनि फलस्पृहाविरहः पदमादध्यात् । तथा च कर्मबन्धो दुष्परिहरः स्यात् । अतो

'न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा'

इति द्वयमपि विषयतावच्छेदकतयोपात्तम् । अत एव च कर्मलेपाभावस्य फलस्पृहाविरहस्य च न पार्थक्येन विषयतावच्छेदकत्वम् । कर्मबन्धाभावरूप-कार्यानुगुण्याय तयोर्मिथः संबन्धस्यावश्यकल्प्यत्वात् । विषयतावच्छेदकत्वं प्रत्येकं स्वीकार्य ततस्तयोरन्योन्यं संबन्धं प्रकल्प्य कार्यानुगुण्यसंपादने गौर-वात् । तदपेक्षया फलस्पृहाविरहस्य कर्मलेपाभावे स्वकारणीभूताहंकाराभाव-मूलकत्वरूपो यः संबन्धस्तदन्तर्भावेण विशिष्टस्यैकस्य विषयतावच्छेदकत्वक-ल्पने लाघवं स्पष्टमेव। तदपि चैकं फलस्पृहाविरहविशिष्टकर्मलेपाभाववत्त्वमेव न तु तद्विपरीतं कर्मलेपाभावविशिष्टफलस्पृहाविरहवत्त्वम् । भगवद्विषयकं ज्ञानं हि ज्ञानिनि फलस्पृहाविरहं समुत्पाद्य तद्द्वारा तस्य कर्मबन्धाभावं साधयतीति प्रागुक्तमेव । भगवतश्च कीदृशं रूपं ज्ञायमानं सज्ज्ञानिभिः फलस्पृहां त्याजये-दिति विचारे यद्यपि भगवतः फलस्पृहाविरहवत्त्वं कर्मलेपाभाववत्त्वं चेति रूप-द्वयमुपस्थितं भवति तथाऽपि तत्र प्राधान्यं कर्मलेपाभावस्यैव । भगवतः फल-स्पृहाविरहो ज्ञायमानो हि 'भगवतो न कर्मलेपः' इति ज्ञानं पुरस्कृत्यैव हि ज्ञानिनि फलस्पृहात्यागं संपादयति । तथा च ज्ञानिनः फलस्पृहात्यागस्य तज्ज्ञा-नविषयीभूतो 'भगवतो न कर्मलेपः' इत्यर्थः संनिकृष्यते । विप्रकृष्यते तु ततः पूर्वं तत्कारणीभूतो भगवतः फलस्पृहाविरहः । तथा च भगवन्निष्ठफलस्पृहाविर-हापेक्षया तन्निष्ठकर्मलेपाभावस्य ज्ञानद्वारा ज्ञानिनिष्ठफलस्पृहाविरहोत्पादनक-र्मणि प्राधान्येन विषयतावच्छेदकं फलस्पृहाविरहविशिष्टकर्मलेपाभाववत्त्वमेवेति सिद्धम् ।

अत्र वदन्ति—यद्येवं तर्हि कर्मलेपाभावस्य प्राधान्यं शाब्दं निर्देष्टुमुचितं

'न मां कर्माणि लिम्पन्ति फलेच्छाया अभावतः'

इति । यतश्च भगवता कर्मलेपाभावस्य फलस्पृहाविरहस्य च शब्दतः कार्यका-रणभावमनिर्दिश्य पार्थक्येन द्वयोर्निर्देशः कृतस्ततोऽवगम्यते विधाभेदेन द्वयो-रपि प्राधान्यं भगवतोऽभिप्रेतमिति । तत्र कर्मलेपाभावस्य प्राधान्यं पूर्वं प्रदर्शितम् । इदानीं तदपेक्षया फलस्पृहाविरहस्य प्राधान्यं येन प्रका-रेण गम्यते तदुच्यते । बृहदारण्यक इत्थं पठ्यते—'अथो खल्वाहुः काममय एवायं पुरुष इति । स यथाकामो भवति तत्क्रतुर्भवति, यत्क्रतुर्भवति तत्कर्म कुरुते, यत्कर्म कुरुते तदभिसंपद्यते' (बृ. ४ । ४ । ५) इति । काम

इच्छा । क्रतुः संकल्पः । भावनेति यावत् । तत्क्रतुरित्यस्य सः—कामानुसारी क्रतुः संकल्पो यस्येत्यर्थः । तदभिसंपद्यत इत्यस्य तत्कर्मानुगुणं फलं प्राप्नोतीत्यर्थः ।

भावनानुगुणः कामो भावनानुगुणा गतिः ।
भावनानुगुणं कर्म पुरुषो भावनामयः ॥

इत्यभियुक्ता वदन्ति । तथा च ज्ञानिनि फलस्पृहाविरहः साध्यश्चेत्तत्कारणीभूतज्ञानविषयोऽपि प्राधान्येन तदनुगुण एवोचितः । अतश्च कर्मलेपाभावविशिष्टफलस्पृहाविरहवत्त्वं विषयतावच्छेदकमङ्गीकार्यमिति ।

अत्राऽऽहुः—लेपबन्धयोः कर्मजन्ययोः स्वरूपं प्राक् प्रदर्शितम् । किंतु प्रकृतश्लोके प्रथमचरणे 'लिम्पन्ति' इत्यस्य स्थाने 'बध्नन्ति' अथवा चतुर्थचरणे 'बध्यते' इत्यस्य स्थाने 'लिप्यते' इति निर्दिश्यते चेत्किं स्यादिति प्रश्नो विचारपथमवतरति । तत्र पूर्वपक्षी प्रत्यवतिष्ठते—साधनफलयोरैकरूप्यायोभयत्रैक एव धातुर्लिपिर्बन्धिर्वा निर्देष्टुमुचितः । प्रथमचरणे लिपिर्निर्दिष्टश्चेत्तादृशलेपनाभावज्ञानफलत्वेन लेपनाभाव एव निर्देष्टुमुचितः । तथा चतुर्थचरणे बन्धिर्निर्दिष्टश्चेत्तादृशबन्धनाभावकारणीभूतज्ञानविषयत्वेन बन्धनाभाव एव निर्देष्टुमुचित इति ।

अत्राऽऽहुर्गुरुचरणाः । जीवो द्विविधः—बुभुक्षुर्मुमुक्षुश्च । मुक्तस्तु त्यक्तजीवभाव इति न जीवभेदेषु गणनामर्हति । तत्र बुभुक्षुर्जीवोऽङ्कुरिताहंभावः सांसारिको न मोक्षमार्गीयः । मुमुक्षुश्च द्विविधः—गलिताङ्कुराहंभावो गलिताहंभावश्च । द्वावप्येतौ मोक्षमार्गीयौ । द्वयोरप्यनयोः कर्म न बन्धकम् । आद्यस्याहंभावसत्त्वेऽपि गलिताङ्कुरस्य तस्याहंभावस्याकिंचनकारित्वेन कर्मणि फलाभिसंधिशून्यत्वात् । केवलं कर्मणि कर्तृत्वाभिसंधिसत्त्वेन कर्मलेपो जायते । नतु कथंचिदपि तस्य कर्मबन्धः । फलाभिसंधिपूर्वकफलभोगाभावात् । गलिताहंभावस्य तु कर्मलेपोऽपि न संभवति । तस्य कर्मणि कर्तृत्वानुसंधानाभावात् । श्रीकृष्णावतारस्तु गलिताहंभावकोटिस्थः । तथा च तेन भगवता 'तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम्' ( गी० ४ । १३ ) इत्युक्तम् । अत्राकर्तारमिति वस्तुगत्योक्तम् । विधेयकोटिप्रविष्टत्वात् । कर्तारमिति तु लोकदृष्ट्यनुवादः । उद्देश्यकोटिप्रविष्टत्वात् । अत एव स भगवान् 'न मां कर्माणि

बध्नन्ति ' इत्यनुक्त्वा ' न मां कर्माणि लिम्पन्ति ' (गी० ४ । १४) इत्युक्तवान् । ' इति मां योऽभिजानाति ' इति तदुत्तरार्धे यदभिज्ञानमुक्तं तादृशाभिज्ञानवांस्तु न सर्वो गलिताहंभावकोटिस्थ एव । किंतु कश्चिद्गलिताङ्कुराहंभावकोटिस्थोऽपि स्यात् । अतस्तत्र गलिताहंभावगलिताङ्कुराहंभावेति द्विविधमुमुक्षुसाधारण्येन ' कर्मभिर्न स बध्यते ' इत्युक्तं न तु ' कर्मभिर्न स लिप्यते ' इति । एवं च चतुर्थाध्यायस्थेन चातुर्वर्ण्यमिति श्लोकद्वयेन 'कर्मणि कर्तृत्वानुसंधानाभावे कथमपि कर्मलेपो न भवति ' इति सिद्धं भवति ।

प्रकृतमनुसरामः । ननु 'योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनंजय' इत्यत्र सङ्गं त्यक्त्वेति नोपपद्यते । सङ्गः संबन्धः । स च केन सहेत्यपेक्षायां प्रकृतत्वात्कर्मैव तत्र प्रतियोगित्वेन संबध्यते । तथा च कर्मणा सह यः कर्तुः संबन्धः स सङ्गशब्दार्थः । स संबन्धो जातश्चेत्तस्य त्यागो न संभवति । भुक्तवन्तं प्रति मा भुङ्क्था इति ब्रूयात्किं तेन कृतं स्यादिति न्यायविरोधात् । अथ स संबन्धो नैव जातश्चेत्तर्ह्यपि तस्य त्यागो न संभवति । त्यागस्य संबन्धपूर्वकत्वात् । तत्र हि सङ्गस्यानुत्पत्तिरेव वक्तव्या भवति न तु त्यागः । सङ्गशब्दस्य सङ्गजन्यकर्तृत्वानुसंधानरूपेऽर्थे लक्षणास्वीकारेऽपि त्यागो दुर्निरूप एव भवतीति चेत्—

अत्र वदन्ति । कर्मयोगिनो देहाद्युपाधिसंबन्धस्य विद्यमानत्वेन कर्मसङ्गोऽवर्जनीय एव । तत्त्यागस्तु त्याग इव त्यागः । विद्यमानस्यापि तस्याकिंचनकारित्वात् । तदानीं कर्मणः सङ्गो हि सामान्येन कर्मत्वमात्रेण न तु कर्मविशेषरूपेण केनापि । विशेषरूपाणि तु कर्मणः साद्गुण्यं वैगुण्यं सत्कर्मत्वमसत्कर्मत्वं तद्द्वारा चेष्टफलदातृत्वमनिष्टफलदातृत्वं तथा यागत्वं दानत्वं तपस्त्वमित्यादीनि । तथा चात्र सामान्यरूपेण संबन्धो विशेषरूपेण तु विशेषरूपानालोचनरूपस्त्याग इत्येवं त्यागशब्दार्थ उपपद्यते । अत एव तत्र ' सिद्ध्यसिद्ध्योः समो भूत्वा ' ( २ । ४८ ) इत्युक्तम् । सिद्धावसिद्धौ च चित्तवृत्तेर्यत्साम्यं तत्कर्मविशेषरूपत्याग एव संभवति । तथाऽग्रेऽपि ' बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते' ( २ । ५० ) इत्यत्र त्यागशब्दार्थ उपपादनीयः । कर्मस्वभावाददृष्टोत्पत्तावपि न तद्विशेषरूपेण सुकृतत्वेन दुष्कृतत्वेन तत्संबन्धमहं पुण्यवानहं पापीयानित्येवं न मन्यते कर्मयोगी । तथा ' कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा ' ( २ । ५१ ) इत्यत्रापि फलत्यागो विशेषरूपेणैव फलसंबन्धेऽपि न ' अहं सुखी '

अहं दुःखी ' इत्येवं विशेषरूपेण कर्मयोगी मन्यते । सर्वत्र तद्बुद्धेरेकविधत्वात् । ' क्रियत इति कर्म ' इत्येवं यत्कर्मणः सामान्यं व्यवसायात्मकं स्वरूपं तत्सर्वविधेष्वपि कर्मस्वस्त्येवेति तन्निश्चयात्मकं नित्यं च । विशेषरूपाणि त्वनेकानि मिथो व्यभिचारीणि । तेषु च व्यष्टिशः क्वचिन्निश्चितत्वेऽपि स निश्चयो न सार्वदिकः किंतु क्षणिकः । कर्मविशेष एव च क्रमविशेषनियमः; व्युत्क्रमेणानुष्ठाने तथा कस्यचिदङ्गस्याननुष्ठाने प्रत्यवायश्च तत्रैव नतु सामान्यस्वरूपे । तदुक्तम्—' नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते ' ( २ । ४० ) इति । व्युत्क्रमेऽङ्गानां कस्यचिदननुष्ठाने विशेषस्वरूपं नश्यति नतु कर्मणः सामान्यं स्वरूपम् । तच्च तत्राविनाशीति । अतोऽनिश्चितस्वरूपस्य कर्मविशेषस्यासंकल्पे यावानंशोऽनुष्ठितो भवति तावताऽप्युपयोगश्चित्तशुद्धिरूपो भवत्येव । शुद्धे च चित्ते दोषाणामभावाद्भीतिर्लेशतोऽपि तत्र नावतिष्ठते । तदुक्तं—

' स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ' ( २ । ४० ) इति ।

अनिश्चितस्वरूपस्य कर्मविशेषस्य संकल्पे त्वङ्गानां व्युत्क्रमे कस्यचिदङ्गस्याननुष्ठाने वा दोषः स्यादेव । तदुक्तम्—

काम्ये क्वचिदपि स्याच्चेद्दोषः कर्माखिलं वृथा ।
न केवलं वृथैव स्यात्प्रत्यवायस्ततोऽधिकः ॥ इति ।

नित्ये कर्मणि यत्रांशे दोषस्तत्रैव दुष्टता ।
न साऽभितः प्रसरति विषबिन्दुरिवाम्भसि ॥ इति च ।

विषबिन्दुरिवेति वैधर्म्येणोपमा बोध्या । कर्मसामान्यस्वरूपस्य त्वेकत्वेन निश्चितत्वात्तत्र बुद्धिस्थैर्यरूपो महान्गुण इत्याह—' व्यवसायात्मिका बुद्धिरेका ' ( २ । ४१ ) इति । एवं कर्मयोगे गुणं प्रदर्श्य व्यतिरेके दोषं प्रदर्शयति—

' बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम् ' ( २ । ४१ ) इति ।

एवं चास्थिरबुद्धयः कर्मविशेषनिष्ठाः पुरुषा निःश्रेयसमार्गानभिमुखत्वाज्जघन्या एवेति सिद्धम् । यद्यपि तेऽधीतवेदा वेदविहितकर्मानुष्ठातारश्च ' स्वर्ग एव भोगैश्वर्यातिरेकपूर्णः परमपुरुषार्थो नान्यः कश्चनेतोऽधिकोऽस्ति ' इत्येवंवादिनः प्रतिपदं वेदवाक्यं प्रमाणत्वेन प्रदर्शयन्तश्च लोके मान्यतां लभन्ते तथाऽपि ते ' ज्योतिष्टोमेन स्वर्गकामो यजेत, स्वाराज्यकामो राजसूयेन यजेत,

वायव्यं श्वेतमालभेत भूतिकामः, इत्यादिवाक्येषु दृश्यमानैः स्वर्गस्वाराज्यभूत्यादिभी रम्यैः पुष्पैः सुपुष्पितां वेदवाणीमालोचयन्तस्तादृशपुष्पामोदभरेणापहृतचेतसोऽत एवाविपश्चितो वेदगूढाभिप्रायमन्यमसंभावयन्तः स्वर्गादिपुष्पेभ्योऽधिको न कश्चन लाभ इत्येवं मन्यमानाः कामस्वरूपा एव किंतु ते यागादिकर्मविशेषासक्ता मोक्षमार्गानभिमुखा एव ज्ञेयाः।

नन्वेवं यदि वेदविहितकर्मानुष्ठातारोऽपि मोक्षमार्गानभिमुखास्तर्हि किं वेदेन वञ्चितास्ते। मैवम्। वेदेन ते निःश्रेयसमार्गावेक्षणस्थानं प्रापिताः। तत्र स्थिता अपि यदि ते स्वर्गादिफललुब्धास्तावतैव कृतार्थमात्मानं मन्यमाना निःश्रेयसमार्गं नाऽऽलोचयेयुः किंतु तत्र पृष्ठं कृत्वा संसारमार्गमालोचयेयुस्तर्हि त एव तत्र दोषभागिनो नतु लेशतोऽपि वेदस्तत्र दोषास्पदम्। न च ते तत्र गता अपि कुतो निःश्रेयसमार्गं न पश्यन्तीति वाच्यम्। स्वर्गादिभोगमत्तानां तेषां तदानीमन्धत्वात्। अत एव च कर्मविशेषविधायकस्यापि वेदस्य गूढाभिप्रायस्तदानीं तैर्न ज्ञायते। तथा हि—सांसारिका बद्धा जनास्त्रिविधाः—तामसा राजसाः सात्त्विकाश्च। प्राधान्येन चायं व्यपदेशः। वस्तुतः सर्वेऽप्येते गुणत्रययुक्ता एव। यदा यो गुणः प्रधानं तदा तदितरद्वयं स्वस्वानुगुण्येन प्रधानस्य साहाय्यं करोति। तत्र तामसानां बाहुल्येन सत्कर्मण्यसत्कर्मणि वा न प्रवृत्तिः। राजसानां बाहुल्येनासत्कर्मणि प्रवृत्तिः। सात्त्विकानां तु प्रायेण सत्कर्मणि प्रवृत्तिः। तत्र च—

'ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः।
जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः (१४।१८)॥

तत्र संसारदृष्ट्या राजसानां तामसानां च वृत्तिरमार्गगामिनी। तत्र राजसानां प्रायो नैमित्तिकी तामसानां तु नैसर्गिकीत्यन्यत्। तस्याः परिवर्तनं चैवम्—

अमार्गगामिनी वृत्तिः स्याच्चेन्नैमित्तिकी यदि।
सा निमित्तवियोगेन पूर्ववन्मार्गगा भवेत्॥
अमार्गगामिनी वृत्तिः स्याच्चेन्नैसर्गिकी यदि।
दुःशका मार्गमानेतुं प्रयत्नातिशयं विना॥ इति।

तत्र कर्मविशेषबोधकेन वेदेन स्वर्गादिफलैः प्रलोभ्यामार्गगामिन्या वृत्तेः

सकाशात्तान्प्रच्याव्य कर्मद्वारोर्ध्वगमनं संपादितमिति किमिव नोपकृतम् । ऊर्ध्वं गता एव च निःश्रेयसमार्गावेक्षणस्थानं प्राप्नुवन्ति । तत्र च स्थिता ये दूरत एव निःश्रेयसमार्गमवेक्षन्ते ; निष्कामकर्मयोगेन(ण) शुद्धचित्ताः केवलसात्त्विकाः स्थिरप्रज्ञा भवन्ति । यत्र च विद्यमानावपि रजस्तमोगुणावकिंचनकारिणौ न सत्त्वस्य साहाय्यं जनयतः स केवलसात्त्विक उच्यते । अयमेव निस्त्रैगुण्यः । अङ्गाङ्गिभावापन्नानां त्रयाणां गुणानां कार्यकारित्वाभावान्निस्त्रैगुण्यत्वम् । विद्यमानयोरपि रजस्तमसोः कार्यकारित्वाभावान्नित्यसत्त्वस्थत्वम् । एतेन निस्त्रैगुण्य इति नित्यसत्त्वस्थ इति च मिथो विरुद्धं भगवता कथमुक्तमित्यपास्तम् । निर्द्वंद्वः सुखदुःखशीतोष्णादिद्वंद्वातीतः। द्वंद्वातीतत्वं च द्वंद्वसत्त्वेऽपि द्वंद्वघटकयोः सुखदुःखाद्योर्यद्वैषम्यं तन्मूलकस्य चित्तवृत्तौ परिणामस्याभावः । निर्योगक्षेमः– योगक्षेमानुषक्तचित्तवृत्तिशून्यः । आत्मवान्–आत्मैकप्रवणचित्तवृत्तियुतः ।

अत्रेदं बोध्यम्–कर्मविशेषबोधकेन यजेत स्वर्गकाम इत्यादिना वेदेन बोधितो मार्गः सांसारिकदृष्ट्या यद्यप्यमार्गो न भवति तथाऽपि मुमुक्षुदृष्ट्याऽमार्ग एव सः । कर्माणि च प्रवृत्तिः प्राणिनां बहुकालसिद्धा नैसर्गिक्येवेति ततो निवृत्तिर्महता प्रयत्नेन साधनीया । तदुक्तम्–

अमार्गगामिनी वृत्तिः स्याच्चेन्नैसर्गिकी यदि ।
दुःशका मार्गमानेतुं प्रयत्नातिशयं विना ॥ इति ।

प्रयत्नातिशयश्च तत्र 'एषा तेऽभिहिता सांख्ये बुद्धिः' ( २।३९ ) इत्युक्तो ज्ञानयोगः । स च न सर्वेषां सुलभः । अतश्चामार्गगामिन्या अपि वृत्तेरविरोधेन कश्चन श्रेयोमार्गोऽन्वेषणीयो भवति । स चामार्गस्थकण्टकपीडापरिहाररूपः । तदुक्तम्–

यद्यमार्गेण गमनमगत्या स्वीकृतं भवेत् ।
कण्टकास्तत्र संप्रेक्ष्या महती हानिरन्यथा ॥ इति ।

कण्टकसंप्रेक्षणं च द्विविधम् । तदप्युक्तम्–

प्रक्षेप्याः कण्टका दूरं तेभ्यो वा दूरतः स्वयम् ।
गन्तव्यमेवं दोषज्ञैर्द्विधा संप्रेक्षणं स्मृतम् ॥ इति ।

ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादिना वेदेन यः प्रकाशितो मार्गस्तत्र काम्यत्वेन प्रदर्शिताः स्वर्गादयः कण्टकाः । तेषां दूरतः प्रक्षेपश्च मनसा तेषामसंकल्पः ।

कामानसंकल्प्यैव ज्योतिष्टोमाद्यनुष्ठानम् । तच्च प्रत्यक्षं भावनामयं वेत्यन्यत् । एतदाद्यं कण्टकसंप्रेक्षणम् । द्वितीयं तु तेभ्यो दूरतो गमनम् । कण्टकितमार्गपार्श्ववर्तिन्या पद्यया( बाजूची पाऊलवाट ) गमनम् । संध्याग्निहोत्रादिनित्यकर्ममात्रानुष्ठानामिति यावत् । कण्टकेनैव कण्टकसंशोधनं कार्यमिति तृतीया विधा लोके प्रसिद्धा । साऽप्यत्र संभवति । स्वर्गलोभेन ज्योतिष्टोमे प्रवर्तमानो नरस्तावदेव तत्र प्रवर्तेन्न यावत्स्वर्गभूतिकीर्तिपशुपुत्रादयः सर्वे एव कामा यत्रैकदैव प्राप्नुवन्ति तादृशो मार्गः स्वस्य गन्तुं शक्यश्च दृष्टिपथमागतो भवेत् । अत्र च सर्वकामसमष्टिर्महान् कण्टकः । तदनुसंधाने सति स्वर्गादिव्यष्टिफलसाधनीभूतज्योतिष्टोमादिकर्मविशेषमार्गान्निवृत्तिरनयासेनैव भवति । तदेतत्प्रदर्शितम्—

' यावानर्थ उदपाने सर्वतः संप्लुतोदके ।
तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ( २ । ४६ ) ।

इत्यनेन । अस्यार्थष्टीकाकारैः—अत्र यावत्तावच्छब्दद्वयमपरमध्याहृत्य प्रदर्शितः। परे त्वत्रैवं वर्णयन्ति—अर्थः प्रयोजनम् । उदकं पीयतेऽस्मिन्नित्युदपानं प्रपा ।

अनायासत एवाम्बु यथेच्छं यत्र पीयते ।
तृषार्तैरागतैः पान्थैः प्रपा सा परिकीर्त्यते ॥

प्रपायाः प्रयोजनं च निर्जले दुर्लभजले वा प्रदेशे भवति नतु जलप्राये प्रदेशे। तत्र यत्र क्वचिदपि जलस्य सुलभत्वात् । तथा च सर्वतः संप्लुतोदके जलप्राये प्रदेश उदपानस्य यावत्प्रयोजनमभावप्रतियोगिभूतं लेशतोऽपि नास्तीत्यर्थः। तथा विजानतो ब्राह्मणस्य सर्वत्राऽऽत्मैक्यं पश्यतो ज्ञानिनो यजेत स्वर्गकाम इत्यादिभ्यः सर्वेभ्यो वेदवाक्येभ्यो न किंचिदपि प्रयोजनम् । अज्ञे जने तादृशवेदवाक्योपयोगो नतु ज्ञानिनीति । एवं युगपत्सर्वकामावाप्तिमालोचयतः स्वर्गादिव्यष्टिफलके कर्मविशेषमार्गे प्रवृत्तिर्नैव भवति । एतदेव च कण्टकेन कण्टकसंशोधनम् । महति फले दृश्यमाने को ह्यल्पे प्रवर्तेत । सर्वकामावाप्तेः स्वरूपं चेत्थम्—सर्वत्राऽऽत्मैक्यं भावयतो न किंचिदप्यनवाप्तमवाप्तव्यं भवति । ननु च व्यष्टिशः स्वर्गादिफलमुपभुज्यमानं बन्धकं भवति चेत्फलसमष्टिरुपभुज्यमाना बन्धकतरा स्यादिति चेन्न । फलसमष्टिर्हि स्वाभेदेनैवानुभूयते । युगपत्सर्वफलानुभवस्यान्यथा संभव एव नास्ति । तथा च तत्र बध्यबन्धकभाव एव नास्ति कुतो बन्धकतरत्वम् । लोके कण्टकेन कण्टकसंशोधनस्थलेऽपि संशोधकः कण्टको नैव स्वातन्त्र्येण वेधान्तरं जनयति । नन्वेतदसंबद्ध-

मिव प्रतीयते । एतत्सर्वकामावाप्तिरूपं फलमात्मैक्यज्ञानिनः सांख्यस्य । प्रकृते तु ‘ एषा तेऽभिहिता सांख्ये बुद्धिः ’ (२।३९) इत्यनेन सांख्यबुद्धिमुपसंहृत्य ‘ योगे त्विमां शृणु ’ इत्येवं योगबुद्धिः प्रस्तुता । तत्र च सर्वकामावाप्तिः कथं स्यादिति चेदुच्यते । कर्मयोगस्य पर्यवसानं ह्यात्मैक्यज्ञान एव । तत्र चोक्तरीत्या सर्वकामावाप्तिरस्त्येवेति न किंचिदप्यत्रासंगतं भवति । ननु ‘ यावानर्थ० ’ इत्येतच्छ्लोकोक्तं सर्वकामावाप्तिरूपं फलं सांख्यस्याऽऽत्मज्ञानिनः साक्षात्संभवतीति सांख्यबुद्धिप्रकरण एवास्य श्लोकस्योपन्यासो युक्तः । स तु तत्र भगवता कुतो न कृत इति चेदुच्यते–‘ अशोच्यान्० ’ ( २ । ११ ) इत्युपक्रम्य ततः ‘ न त्वेवाहम् ’ ( २।१२ ) इत्यारभ्य ‘ नैवं पापमवाप्स्यसि ’ ( २। ३८ ) इत्यन्तं यत्सांख्यबुद्धिप्रकरणं भगवतोक्तं तन्मुख्यत्वेन ज्ञाननिष्ठाप्राप्तये नैवोक्तं किंत्वशोच्यानित्युपक्रमानुरोधेन ‘ भीष्मादयः शोच्याः ’ इत्यर्जुनस्य बुद्धिनिरासाय तादृशबुद्धिमूलकस्य शोकस्य निवृत्त्यै पूर्ववद्युद्धाभिमुख्याय चेति प्रयोजनत्रयोद्देशेनोक्तम् । तादृशप्रयोजनत्रयसिद्ध्यर्थं च यावदवश्यं वक्तव्यं तावदेवावान्तरप्रकरणत्रयेण तत्रोक्तम् । तावतैव च तत्र यदृच्छयाऽर्जुनस्य मनोवृत्तौ–

ज्ञानभूमिः शुभेच्छाख्या प्रथमा परिकीर्तिता ।

इत्येवं लक्षिता प्रथमा ज्ञानभूमिः सिद्धाऽभूत् । यदि च तत्सांख्यबुद्धिप्रकरणं मुख्यत्वेन ज्ञाननिष्ठाप्राप्त्युद्देशेन भगवतोक्तं स्यात्तर्हि तत्र प्ररोचनार्थं ‘ यावानर्थ० ’ इति श्लोकोपन्यासो योग्यः स्यात् । यदि वा तस्मिन्प्रकरणे प्रासङ्गिकतया काम्यकर्मत्यागः साध्यत्वेन वक्तव्यः स्यात्तर्ह्युक्तश्लोकोपन्यासो योग्यः स्यात् । उक्तश्लोकार्थानुसंधानेन प्ररोचितस्य हि ज्ञाननिष्ठाप्राप्तये काम्यकर्मत्यागे वा प्रवृत्तिः सुलभा भवति । न तु तद्द्वयं तत्र वक्तव्यत्वेन भगवताऽनुसंहितम् । प्रत्युत तदानीं राज्यलोभेन युद्धे प्रवृत्तस्यार्जुनस्य पूर्ववत्प्रवृत्तिर्जायेत चेद्भगवता सा तदानीं कथमपि नैव निषिद्धा भवेत् । युद्धारम्भकाले हि युद्धात्परावृत्तस्यार्जुनस्य युद्धे पुनः प्रवृत्तिर्भगवत इष्टा । सा च केनापि प्रकारेण भवतु राज्यलोभेन वा कौरवद्वेषेण वा स्वपराक्रमप्रदर्शनोद्देशेन वाऽन्येन वा केनापि कारणेन भवतु तत्र भगवतो मनसि न कश्चिद्विशेषः। तदर्थमेव च भीष्मादीनामशोच्यत्वं शोकस्यायोग्यत्वं स्वधर्मावेक्षणं चावान्तरप्रकरणत्रयेण प्रदर्शितम् । ‘ तावता च युद्धे पुनः प्रवृत्तिः स्यादेवेति न निश्चयः । सुखदुःखादिद्वंद्वसमीकरणस्यासुलभत्वात् ’ इत्येवं मन्वानेन भगवता

सौलभ्येन साध्यं निष्कामकर्मयोगं वक्तुमिदं प्रकरणमारब्धम् । अस्मिन्प्रकरणे तु कण्टकेन कण्टकसंशोधनाय ' यावानर्थ० ' इति श्लोक उपयुक्तो भवतीति प्रागावेदितमेव । प्ररोचनार्थमप्यस्यात्रोपयोगो भवति । कर्मयोगस्याऽऽत्मज्ञान एव पर्यवसानेन तद्द्वारा कर्मयोगस्य सर्वकामावाप्तिरूपफलसंभवात् । एवं कर्मयोगं प्रशस्य तत्फलितमुपदिशति भगवान्—

कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।
मा कर्मफलहेतुर्भूर्मा तेऽसङ्गोऽस्त्वकर्मणि ॥ (२।४८) इत्यादिना ।

एतदेव चास्मिन्निष्कामकर्मयोगाख्ये पञ्चमे प्रकरणे मुख्यत उपदेष्टव्यम् । अधिकारो योग्यताविशेषः । एवशब्दव्यवच्छेद्यं भगवता स्वयमेव स्पष्टमुक्तं ' मा फलेषु कदाचन ' इति द्वितीयपादेन । कर्मकरणमात्र एवेदानीं तव योग्यता न तु तत्फलभोग इत्यर्थः । एवं च ते भोगा रुधिरप्रदिग्धा इत्येवं यस्तव दृष्टिप्रक्षेपः स व्यर्थ एवेति भावः ।

ननु कर्म कृतं चेत्—

' नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि '

इति न्यायेन तत्फलोपभोगः स्यादेवेति चेदस्तु । न तु तत्र तव योग्यता । योग्यतां विना तु भवन्नुपभोगो निष्फल एव । तदुक्तम्—

गुणकर्मादिसंबन्धो जातश्चेद्योग्यतां विना ।
निरर्थकः स विज्ञेयः क्वचित्प्रत्युत बाधकः ॥ इति ।

अथात्रैव क्वचित्प्रत्युत बाधक इत्युच्यते तथा बाधकोऽत्र कुतो न भवति । किंच सत्कर्मजन्यो भोगो बीजोत्थापकत्वाद्बाधकः स्यादेव । तदुक्तम्—

विशेषो भोगयोरेष सदसत्कर्मजन्ययोः ।
बीजमुत्थापयत्येको निवर्तयति चापरः ॥ इति ।

बीजं वासनाविशेषः पुनस्तादृशकर्मचिकीर्षाहेतुः । तथा च फलभोगे योग्यताया अभावेन किं कृतं स्यादिति चेत्—यथाऽत्र फलभोगो बाधको नैव भवेत्तथा प्रदर्शयितुमाह—' मा कर्मफलहेतुर्भूः ' इति । स एव हि कर्मकर्ता कर्मफलहेतुर्भवति यः फलभोगलिप्सया फलोद्देशेन तादृशं संकल्पं कुर्वन्कर्म करोति । ननु कर्मकर्तुस्तादृशः संकल्पोऽस्तु मा वा भूत् । स्वभावादेव हि कर्म फलं जनयेदिति

चेत्–स्यादेतदेवं यदि कर्म चेतनं स्यात् । ईश्वरो हि कर्मानुरूपं फलं ददाति । ‘फलमत उपपत्तेः’ (ब्र. सू. ३ । २ । १८) इति न्यायात् । स चासंकल्पितं फलं कर्मकर्तुः कथं दातुमुत्सहेत । ननु कर्मसापेक्षो हीश्वरः फलं ददाति इति ‘वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति’ (ब्र. सू. २ । १ । ३४) इति सूत्र उक्तम् । तथा च चेतनस्यापीश्वरस्य तत्र न स्वातन्त्र्यमिति चेत्–अस्वातन्त्र्याद्धीश्वरः कर्माननुरूपं फलं कदाऽपि न दद्यात् । कर्मानुरूपं तु दद्यादेवेति न नियमः । कर्मणः साद्गुण्यं वैगुण्यमधिकारमनधिकारं चाऽऽलोच्य दद्यान्न दद्याद्वा । तत्र स प्रभुरेव । यथा राज्ञा नियुक्तो देशविशेषाधिकारी राजपरतन्त्रो राजाज्ञामन्तरेण देशान्तरं गन्तुमसमर्थोऽपि तस्मिन्देशे स्वातन्त्र्येण यथेच्छं यथायोग्यं संचरत्येव तद्वत् ।

नन्वेवं फलोद्देशेन संकल्पमकृत्वा कर्म कर्तव्यं चेत्तदपेक्षया तदकरणमेवास्तु । अलं श्रमेण । किंच कृते कर्मणि तत्र बन्धकत्वाभावाय तत्फलाभिसंधानं तत्कर्तृत्वाभिसंधानं च त्याज्यं भवति । तदपेक्षया कर्म नैव क्रियते चेद्बन्धकत्वशङ्काऽपि नोदेति । तथा च–

‘प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्’

इति न्यायेन माऽस्त्वेव कर्म । एवं युद्धस्याकरणे स्वजनवधजन्यपातकभीतिरेव नास्तीत्यपरमनुकूलमिति चेत्तत्राऽऽह–‘मा ते सङ्गोऽस्त्वकर्मणि’ इति । ईदृशं यत्त्वदभिमतमकर्मणः स्वरूपं तत्र ते सङ्गो माऽस्त्वित्यर्थः । यतो नैतदकर्मणः स्वरूपम् । वस्तुतो विचारे क्रियमाणे कर्मैवैतदान्तरं भवति । ‘न योत्स्ये’ इत्याकारिकाया मनोवृत्तेरान्तरकर्मरूपत्वात् । आन्तरं च कर्म बन्धकं भवत्येव । आत्मभेदभावनायाः सत्त्वात् । त्वयाऽपि च–

‘यदि मामप्रतीकारमशस्त्रं शस्त्रपाणयः ।
धार्तराष्ट्रा रणे हन्युस्तन्मे क्षेमतरं भवेत् ॥’

इत्युक्तवता युद्धाकरणात्क्षेमसंभावनाऽभ्युपेतैव । अङ्गीकृतस्वधर्मत्यागादपि च युद्धाकरणं बन्धकं भवतीति–

‘ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि’ (२।३३)

इत्युक्तमेव । एतदेव च ‘अकर्मणि च कर्म यः पश्येत्’ (४ । १८) इत्येवं भगवताऽग्र उक्तम् । किंच त्वदभिमतमेतदकर्मस्वरूपमालोचयतामज्ञानां जनानां बुद्धिभेदो भवेत् । अत ईदृशेऽकर्मणि ते सङ्गो मा भूदिति भावः ।

अत्रेदमवधेयम्—'कर्मण्येवाधिकारस्ते' इति 'मा फलेषु कदाचन' इति च वाक्यद्वयमस्तिक्रियाध्याहारेण पूरणीयम् । अन्ततोऽस्तिक्रियायाः सर्वत्र सत्त्वात् । तदुक्तम्—

अनिर्दिष्टाऽप्यन्ततोऽस्तिक्रिया सर्वत्र गम्यते ।
उपस्थितस्तत्र कालो वर्तमानो न चेतरौ '॥ इति ।

तथा च तत्र भूतकालो भविष्यत्कालो वा प्रमाणान्तरावसेयो भवति । तुल्यन्यायाद्विध्याद्यर्थोऽपि प्रमाणान्तरावसेय एव । एवं च कर्मण्येवेदानीं तेऽधिकारोऽस्ति तथा फलेषु त इदानीमधिकारो नास्तीत्यर्थः । न तु 'कर्मण्येव त इदानीमधिकारोऽस्तु, इति तथा 'फलेषु त इदानीमधिकारो माऽस्तु' इत्येवं विध्यर्थगर्भः । प्रमाणाभावात् । न चोत्तरार्धे 'मा भूः' 'माऽस्तु' इत्येवं विध्यर्थकपदप्रयोगात्तदनुसारेण पूर्वार्धेऽपि विध्यर्थगर्भ एवार्थोऽस्त्विति वाच्यम् । तथा सति 'मा फलेषु कदाचन' इत्यनेनैव सिद्धौ 'मा कर्मफलहेतुर्भूः' इत्यस्य वैयर्थ्यापत्तेः ।

ननु यद्ययं सिद्धानुवादस्तर्ह्यर्जुनस्येदानीं कर्मण्येवाधिकारः फलेषु नाधिकार इत्यर्थः कथं भगवता सिद्धवद्गृहीतः किमर्थं चानूदितः कुतो वा पूर्वस्मिन्स्वधर्मावेक्षणप्रकरणे नानूदित इति चेदुच्यते—यद्यपि राज्यलिप्सया युद्धकर्मणि प्रवृत्तोऽर्जुनस्तथाऽपि भीष्मादीन्पुरोवस्थितान्प्रत्यक्षं दृष्ट्वा सद्य एव निर्विण्णोऽभूत् । तथा च तेनोक्तम्—

एतान्न हन्तुमिच्छामि घ्नतोऽपि मधुसूदन ।
अपि त्रैलोक्यराज्यस्य हेतोः किं नु महीकृते ( १।३५ ) इति ।

तथा च फलेषु त इदानीमधिकारो नास्तीति सिद्धम् । नन्वेवं द्वितीयचरणार्थस्य सिद्धावपि प्रथमचरणार्थो न सिद्धो भवति । प्रत्युत 'एतान्न हन्तुमिच्छामि' ( १ । ३५ ) इति 'न योत्स्ये' इति च तदुक्तेः कर्माभाव एव प्रतीयत इति चेत्सत्यम् । तत्र 'न हन्तुमिच्छामि, न योत्स्ये' इत्येवं कर्मविशेषस्य युद्धस्य निषेधेऽपि कर्मसामान्यस्यानिषिद्धत्वात् । अत एवात्र 'कर्मण्येवाधिकारस्ते' इत्युक्तं न तु युद्ध एवाधिकारस्त इति । फलविषये तु 'अपि त्रैलोक्यराज्यस्य हेतोः' इत्युक्तेः कस्यापि च कर्मणस्त्रैलोक्यराज्यापेक्षयाऽधिकस्य फलस्याभावात्फलसामान्यं निषिद्धं भवतीति तन्मालिका

मा फलेषु कदाचनेति सामान्योक्तिः संगच्छते। एवं च कर्मण्येवाधिकार इत्यादि पूर्वार्धे सिद्धानुवादः। उत्तरार्धे तु साध्यार्थप्रतिपादकमिति सिद्धम्। तत्र चोत्तरार्धे निषेधद्वयं साध्यम्। तत्रापि मा कर्मफलहेतुर्भूरिति निषेधः 'मा फलेषु कदाचन' इत्येतत्सिद्धार्थमूलकः साध्यतया विवक्षितः। 'मा ते सङ्गोऽस्त्वकर्मणि' इति निषेधस्तु 'कर्मण्येवाधिकारस्ते' इत्येतत्सिद्धार्थमूलकः साध्यतया विवक्षितः। साध्यतया विवक्षायाः प्रयोजनं त्वर्जुनस्य तत्र प्रवृत्तिनिश्चयः।

अत्र च विचारे क्रियमाणे वाचोयुक्तिपटोर्भगवत उक्तिचातुरी सविशेषा दृश्यते। यद्भीष्मादीन्दृष्ट्वा क्षणमात्रेण विपर्यस्ताऽर्जुनस्य मनोवृत्तिः क्षणमात्रेण परावर्तितुमशक्याऽस्मिन्द्वितीयेऽध्याये पञ्चभिरवान्तरप्रकरणैः प्रतिप्रकरणमल्पशस्तस्याः परावृत्तिं संपाद्य पूर्ववन्मार्गमानीता। एतच्च कृत्यं भगवन्तमन्तरेण न कोऽपि साधयितुं शक्नुयात्। यथा—

किंचिन्निमित्तमासज्य रोगः प्रविशति क्षणात्।
निवर्तते तु यत्नेन तथा कालेन भूयसा॥

तथैवैतत्। तदुक्तम्—

उदात्तचेतसां मोहः सहसा नव जायते।
जातश्चेन्न तमुच्छेत्तुं प्रभुः साधारणो जनः॥
युक्तिप्रयुक्तिदृष्टान्तप्रमाणानि प्रयोजयन्।
श्रीकृष्ण एवार्जुनस्य शक्तो मोहापसारणे॥ इति।

तथा—उपदेशः कृतो यश्च प्राज्ञं प्रति महात्मभिः।
अल्पेनैव स कालेन प्रायः सफलतां व्रजेत्॥

अत्र तु भगवाञ्श्रीकृष्ण एव प्रत्यक्षत उपदेष्टा। अतः—

उपदेशो भगवता प्राज्ञं प्रति कृतश्च यः।
सद्यः सफलतां याति नात्र कार्या विचारणा॥

यद्यपि चात्र सर्वशक्तिर्भगवान् किंचिदलौकिकं सामर्थ्यं प्रदर्श्य तावन्मात्रेणैव चार्जुनस्य मनसि श्रद्धातिशयमुत्पाद्य तस्य मनोवृत्तिं पूर्ववद्युद्धाभिमुखीं मार्गं आनेतुं सद्यः प्रभवति यथा महात्मा साधुर्ज्ञानेश्वरो व्याघ्रारूढमाकाशमार्गेण समायान्तं चाङ्गदेवमालक्ष्य स्वालौकिकसामर्थ्येन स्वाश्रयीभूतभित्तिचालनेन

तमभ्युद्गच्छंस्तेनालौकिकसामर्थ्यमात्रेण तस्य मनोवृत्तिं सन्मार्गं आनीतवान् । तद्वदत्रापि साधयितुं शक्नुयादेव प्रभुः । तथाऽपि तदानीं न तथा कर्तुमियेष भगवान् । अलौकिकसामर्थ्यालोचनं ह्यर्जुनस्य मनसि श्रद्धातिशयमुत्पादयेन्नतूत्साहातिशयम् । प्रकृते च युद्धकर्मणि शूराः स्वजनाश्च भीष्मद्रोणकर्णादयो विनाश्या इति तत्रोत्साहातिशयोऽवश्यमपेक्ष्यते । तदुक्तम्—

अश्रद्धोऽपि च सोत्साहः प्रकुर्यात्कर्म यादृशम् ।
न तादृशं निरुत्साहः श्रद्धालुरपि पूरुषः ॥ इति ।

उत्साहातिशयोत्पादनं चार्जुनस्य मनसि प्रतीता युद्धकर्मणि तस्या शक्यताऽयोग्यता च न यावत्समूलमुत्पाटिता तावन्न सुकरम् । अतः प्रथमतो युक्तिप्रयुक्तिदृष्टान्तप्रमाणादिभिरर्जुनमनोगतामशक्यतामयोग्यतां च स्थूलमूलसहितामुत्पाट्य पश्चात्सूक्ष्ममूलोत्पाटनमलौकिकसामर्थ्येन विराट्स्वरूपप्रदर्शनेन भगवता कृतम् ।

तत्र प्रथमेन मोहप्रकाशनाख्यानेन प्रकरणेनाशक्यता निराकृता । कुतस्त्वा कश्मलमिदमित्यादिना ‘ तवायं मोहः, स चास्थाने ’ इत्येतावन्मात्रमुक्तं भगवता नत्वीदृशो मोह इत्येवं मोहस्वरूपं विशदीकृतम् । मोहस्वरूपाज्ञानेऽपि ‘ ममायमस्थाने मोह एव ’ इत्येतादृशनिश्चयमात्रेणार्जुनस्य मनोवृत्तिः किंचिद्द्रुता सती वेपथुरोमहर्षप्रभृतीन्विकाराञ्शारीरान्निरासयन्ती रथोपस्थोपवेशनविरुद्धाभ्युत्थानानुकूला क्लैब्यप्रतिगामिनी चाभूत् । तदनुगुण एव च तत्र विधिः ‘ हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ’ ‘इति निषेधश्च तथैव ‘क्लैब्यं मा स्म गमः’ इति । द्रवश्चात्र विपरितानुचितविषयप्रवेशेन संजातकाठिन्याया मनोवृत्तेः शैथिल्यापादनम् । अत्र च दौर्बल्यत्यागपूर्वकोत्थानस्य विधानेऽपि तादृशविधेः पर्यवसानं दौर्बल्यत्याग एव । उत्थानस्य पूर्वसिद्धत्वात् । उत्थानमन्तरेण ‘ कैर्मया सह योद्धव्यम् ’ ( १ । २२ ) इति प्रश्नानुपपत्तेः । एवम् ‘ इदानीं युद्धमशक्यम् ’ इत्येतादृशस्वरूपाऽशक्यता निराकृता । अशक्यतायाः स्थूलं मूलं च मोह एव । सोऽपि च प्रकाशनमात्रेण निराकृतप्राय एव । अज्ञातस्यैव मोहस्य कार्यकारित्वदर्शनात् । ततः ‘ इदानीं युद्धमयोग्यम् ’ इत्येतादृशस्वरूपामयोग्यतामर्जुनमनासि स्थितां प्रकरणचतुष्टयेन दूरी चकार भगवान् । तत्रायोग्यताबुद्धेः कारणानि चत्वारि संदृश्यन्ते । १ भीष्मादिदेहिविनाशसंभावना । (२) भीष्मादिदेहवियोगसंभावना । (३) पातकसंभावना । ( ४ ) लघि-

रप्रदिग्धभोगसंभावना चेति । तत्रैकैकं कारणमेकैकेन प्रकरणेन क्रमेण निराकृतं भगवता । तत्र द्वितीयेनाशोच्यत्वानुसंधानाख्येन प्रकरणेन युद्धकरणायोग्यतायाः प्रथमं कारणं भीष्मादिस्वजननाशसंभावनारूपं निरासितम् । तत्र चाऽऽत्मनो नित्यत्वेन सर्वेषां सदा सत्त्वं दुःखदायकानामिन्द्रियविषयसंयोगानां क्षणिकत्वं च प्रतिपादितम् । तेन चार्जुनस्य मनोवृत्तिः पूर्वापेक्षयाऽप्यधिकं द्रुता भीष्मादिविनाशसंभावनां दूरे प्रक्षिपन्ती 'न योत्स्ये' इतिवृत्तिविरुद्धयुद्धकरणस्य भीष्मादिविनाशरूपार्थेन्द्रियसंयोगजन्यदुःखसहनस्य चानुकूला भीष्मादिविनाशसंभावनाप्रतिगामिनी च स्यादिति मन्वानो भगवांस्तदनुगुणमेव 'युध्यस्व' इति मात्रास्पर्शांस्तितिक्षस्व' इति च विधिं तथा 'नानुशोचितुमर्हसि' इति निषेधं च प्रोक्तवान् । ततस्तृतीयेन शोकराहित्याख्येन प्रकरणेन युद्धकरणायोग्यताया द्वितीयं कारणं स्वकीयजननमरणसंभावनारूपं निरासितम् । तत्र च मृत्योरपरिहार्यत्वं प्रतिपादयता भगवताऽर्जुनमनोवृत्तौ संजाताया द्रवीभूतावस्थायास्तादवस्थ्यं संपादितम् । तेन च साऽर्जुनमनोवृत्तिः शोकप्रतिगामिन्युत्साहानुकूला च स्यादिति मन्वानो भगवांस्तदनुगुणमेव 'न शोचितुमर्हसि' इति निषेधं प्रोक्तवान् । निषेधश्चायं तत्र श्लोकपञ्चकात्मके प्रकरण आदौ मध्येऽन्ते चेति त्रिवारं प्रतिपादितो दृश्यते—'अथ चैनम्' (२।२६) इत्युपक्रम एवैकः । ततः 'जातस्य हि' (२।२७) इत्यत्र तादृशप्रकरणप्रधानप्रतिपाद्यं यन्मृत्योरपरिहार्यत्वं तत्प्रदर्शनकालिको द्वितीयः । 'तस्मात्सर्वाणि भूतानि' (२।३०) इत्युपसंहारगतस्तृतीयः । प्रधानप्रतिपाद्यस्य मृत्योरपरिहार्यत्वस्योपोद्बलके 'अव्यक्तादीनि' (२।२८) इति श्लोके शोककार्यवाग्विलापरूपपरिदेवनायाः 'तत्र का परिदेवना' इत्येवमाक्षेपं कृतवता भगवता दृढीकृतश्च स निषेधः । अनेन दृढीकरणेन त्रिवारोक्त्या च शोकस्यात्यन्तानुचितत्वं संसूचयता 'सर्वथा शोकं त्यज' इति विधिस्तथा शोकविरोधिभूतं धैर्यं धारयेति विधिश्च सूचितो भवति । ततश्चतुर्थेन स्वधर्मावेक्षणाख्येन प्रकरणेन युद्धकरणायोग्यतायास्तृतीयं कारणं पातकसंभावनारूपं निरासितम् । तत्र च धर्म्ययुद्धादन्यच्छ्रेयःसाधनं नास्तीत्युक्त्या 'इदमेव श्रेयःसाधनम्' इति सिध्यति । तथा च तत्र लेशतोऽपि पातकसंभावना नास्तीति चार्थादेव सिद्धं भवति । तेन चार्जुनमनोवृत्तौ संजाताया द्रवीभूतावस्थाया दार्ढ्यसंपादनद्वारा तस्या अवस्थाया मनसः सकाशात्तादात्विकोऽप्रच्यवः साधितः । तेन च साऽर्जुनमनोवृत्तिर्युद्धोद्देश्यकाभ्युत्थाना-

नुकूला तथा 'अथ चेत्०' (२ । ३३) इत्यादिश्लोकचतुष्टयेन युद्धाकरणे प्रत्यवायोक्त्या च युद्धानभिमुखत्वरूपविकम्पनप्रतिगामिनी च स्यादिति मन्वानो भगवांस्तदनुगुणमेव 'युद्धायोत्तिष्ठ' 'युद्धाय युज्यस्व' इति विधिं 'न विकम्पितुमर्हसि' इति निषेधं च प्रोक्तवान् । अत्र च युद्धोद्देश्यकोत्थानं विधीयते नतु युध्यस्वेत्येवं युद्धं विधीयते। युद्धोद्देश्यकाभ्युत्थानमात्रेणापि स्वधर्महान्यभावस्य साधनात् । युद्धानभिमुखस्य हि स्वधर्महानिः स्यान्नत्वपराङ्मुखस्य कथंचिदिति । ततो युद्धकरणायोग्यतायाश्चतुर्थकारणस्यावशिष्टस्य रुधिरप्रदिग्धभोगसंभावनारूपस्य निरासाय निष्कामकर्मयोगाख्यस्य पञ्चमप्रकरणस्याऽऽरम्भः । तत्र च कर्मणि फलाभिसंधिराहित्यं कर्तृत्वाभिमानशून्यता बुद्धिस्थैर्यं च प्रतिपादितम् । फलाभिसंधिराहित्येन च भाविन्यां परिस्थितावर्जुनस्य दृष्टिप्रक्षेपो गर्भस्रावेणैव गतार्थोऽभूत् । तेन चार्जुनस्य मनोवृत्तौ संजाताया द्रवीभूतावस्थायाः प्ररूढमूलत्वरूपदार्ढ्यातिशयसंपादनद्वारा तस्या अवस्थाया मनसः सकाशात्कदाऽप्यप्रच्यवः साधितः । ततश्च साऽर्जुनमनोवृत्तिर्निश्चयात्मिका त्रैगुण्यमूलकचाञ्चल्यानभिमुखी कर्तव्यैकतत्परा संभविभाव्यवस्थासमालोचनस्य कर्माकरणस्य च प्रतिगामिनी स्यादिति मन्वानो भगवांस्तनुगुणमेव 'निस्त्रैगुण्यो भव' 'योगस्थः कुरु कर्माणि' 'योगाय युज्यस्व' इति च विधिं तथा 'मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि' इति निषेधं च प्रोक्तवान् ।

अयमाशयः—एतच्च रुधिरप्रदिग्धभोगसंभावनारूपं कारणं विनाशयितुं न सुकरम् । तथा हि—युद्धस्यायोग्यता हि पराजयदृष्टयाऽस्त्येव । तत्र सर्वथैहिकानुत्कर्षस्यैव सत्त्वात् । जयदृष्टयैव हि युद्धे प्रवृत्तिरिति केवलं जयदृष्टया युद्धस्य योग्यता वक्तव्या । जये च संभाविनि या भाव्यवस्थाऽर्जुनेन समालोचिता तत्र भाव्यवस्थासमालोचनमार्गे चत्वारः कण्टकास्तदीयदृष्टिपथं प्रविष्टा यैश्च युद्धस्यायोग्यतैव तन्मतिमारोहति । अत्र संग्रहः—

भीष्मादिदेहिनां नाशो मरणं स्वजनस्य च ।
पापं भोगा रक्तदिग्धा युद्धायोग्यत्वहेतवः ॥ इति ।

उक्तकारणचतुष्टयमध्ये प्रथमं तृतीयं च कारणं मिथ्याभूतमेव केवलं कल्पनामयम् । कल्पितस्य च वस्तुनो ज्ञानमात्रेणैव विनाशः । तत्र प्रथमे कारणे भीष्मादीनां विनाशः कल्पितः । स चाऽऽत्मनो नित्यत्वं प्रज्ञाप्य निवारितः ।

तथा तृतीये कारणे युद्धे स्वजनवधात्पातकं कल्पितम् । तच्च युद्धस्य धर्म्यत्वे स्वजनवधेऽपि नैव पातकोद्भव इति प्रज्ञाप्य निवारितम् । द्वितीयं चतुर्थं च कारणं न मिथ्याभूतं कल्पनामयम् । मृत्युसंभावनाया रुधिरप्रदिग्धभोगसंभावनायाश्च मिथ्यात्वाभावात् । तत्र द्वितीयस्य कारणस्य सत्यत्वं गृहीत्वैव मृत्योरपरिहार्यत्वात्तन्निवारितम् । अकृतेऽपि युद्धे भीष्मादीनां स्वजनानां मृत्युरवश्यं भाव्येव । चतुर्थं तु नापरिहार्यम् । अकृते युद्धे रुधिरप्रदिग्धभोगानामसंभवात् । तथा च रुधिरप्रदिग्धभोगा नासत्या नाप्यपरिहार्या इति रूढमूलस्यास्य चतुर्थस्य कण्टकस्य विनाशो न सुकरः । दुष्करोऽपि चास्य विनाशः कया विधया संभवेदिति विचारे क्रियमाणे विधाद्वयं संभवति । तदुक्तम्—

> कण्टका रूढमूलाश्चेद्भवेयुर्मार्गरोधकाः ।
> अन्वेष्टव्योऽपरो मार्गो न कुर्याद्गतिमेव वा ॥ इति ।

अस्मिंश्च विधाद्वये प्रथमा विधाऽत्रावकाशं न लभते । ऐहिकजयपक्षीयभाव्यवस्थासमालोचनमार्गस्य रुधिरप्रदिग्धभोगरहितस्यान्यस्यासंभवात् । तथा च ' न कुर्याद्गतिमेव वा ' इति द्वितीयैव विधाऽत्र समाश्रयितव्या भवति । प्रकृते गतिश्च भाव्यवस्थासमालोचनरूपा । सा यथाऽर्जुनेन न क्रियेत तथा प्रयत्नोऽत्रावश्यं कर्तव्यो भवति । अकृते च भाव्यवस्थासमालोचने संभविनोऽपि रुधिरप्रदिग्धा भोगाः किं कुर्युः ।

> गृह एवावस्थितस्य विध्येत्किं मार्गकण्टकः ।
> सर्वथाऽनश्नतो जन्तोर्विषबाधा भवेत्कथम् ॥

रुधिरप्रदिग्धा भोगाश्च ज्ञाता एव युद्धकरणायोग्यतामतिं जनयेयुः । अज्ञातानां तेषां कार्याजनकत्वात् । भाव्यवस्थाया असमालोचन एव हि रुधिरप्रदिग्धभोगानामज्ञानं भवेत् । तदर्थं प्रयत्नश्च निष्कामकर्मयोगमन्तरेणान्यो न संभवति । अतस्तदर्थं ' योगे त्विमां शृणु ' इत्यादिना पञ्चमं प्रकरणं निष्कामकर्मयोगाख्यमारब्धम् । अनेनैव च चतुर्थकण्टकोद्धारार्थं कृतेन प्रयत्नेन पूर्वे त्रयोऽपि कण्टका हेलयैवोन्मूलिता भवन्ति ।

नन्वेवमर्जुनस्योत्पन्नो मोहो यावता स्वल्पेन कालेन निवारितो भवेत्तथाऽत्र प्रयतितव्यं भगवता । युद्धारम्भे वृथाकालक्षेपस्य कर्तुमशक्यत्वात् । तथा च निष्कामकर्मयोगाख्येनैव प्रयत्नेन युद्धायोग्यतायाश्चत्वारोऽपि कण्टका निरसितुं शक्याश्चेत्किमर्थं भगवता ' अशोच्यानन्वशोचः० ' इत्यादिप्रकरणान्त-

थमारब्धमिति चेदुच्यते । नात्र भगवता क्षणस्यापि कालस्य वृथा क्षेपः कृतः । अर्जुनमनोवृत्तौ निष्कामकर्मयोगस्य सम्यक्प्रवेशाय प्रकरणत्रयस्याऽऽवश्यकत्वात् । यथा हि खण्डशर्करा पयसि प्रविष्टा सर्वांशेन पयो व्याप्नोति सैन्धवशकलानि वा जले प्रविष्टानि सर्वांशेन जलं व्याप्नुवन्ति पयसो जलस्य च द्रवीभूतत्वात् । न तथा धान्ये प्रविष्टानि शर्कराखण्डानि सैन्धवशकलानि वा धान्यं सर्वांशेन व्याप्नुवन्ति धान्याद्बहिर्निष्काशयितुं च शक्यन्ते । तथाऽत्र प्रकरणत्रयेण द्रवीभूतायां मनोवृत्तौ निष्कामकर्मयोगशर्करायाः सर्वांशेन प्रवेशो भवति । मनोवृत्तेः सकाशाद्बहिर्निष्काशयितुं च न शक्यन्ते । अत्र हि युद्धसमाप्तिपर्यन्तमर्जुनमनोवृत्तौ प्रविष्टस्य निष्कामकर्मयोगस्य स्थैर्यमपेक्ष्यते । इतरथा हि मध्य एव कदाचिदर्जुनमनसि पुनः शोकोद्भवे दुरवस्था स्यात् । अद्रुते हि धान्ये प्रविष्टानि शर्कराखण्डानि सैन्धवशकलानि वा शूर्पव्यापारेण चालनीव्यापारेण वा स्वल्पेनैव प्रयत्नेन पृथग्भवन्ति तद्वत् । अत एव च निष्कामकर्मयोगेनार्जुनमनोवृत्तावन्ततः सर्वांशेन व्याप्तायां तत्र प्रवेशमलभमान इवाभिमन्युवधश्रवणेन संजायमानः शोको बहिःस्थित इव युद्धान्निवर्त्य शस्त्रन्यासाय न पर्याप्तोऽभूत् । प्रत्युतोत्साहातिरेकेण जयद्रथवधप्रतिज्ञायां पर्यवसितोऽभूत् । अन्यथा यथा महाप्रभावोऽपि द्रोणाचार्योऽश्वत्थामनिधनं श्रुत्वा शोकाकुलः सञ्शस्त्रन्यासं कृतवांस्तथाऽर्जुनोऽपि पुनः शस्त्रन्यासाय प्रवृत्तः स्यादिति दिक् ।

अत्रेदमवधेयम् । सात्त्विकस्यार्जुनस्य मनोवृत्तिः प्रकृत्यैव द्रुता प्रहारोद्यतभीष्मादिप्रत्यक्षदर्शनेन सहसा कठिनाऽभूत् । सा च शनैः शनैर्यथाकालेन प्रयत्नमन्तरैव पुनः पूर्ववत्प्रकृतिं प्राप्स्यत्येव । तदुक्तम्—

प्रकृत्या यस्य यो भावो जले द्रव इव स्थितः ।
कथंचिदन्तरा छन्नः पुनर्दृश्येत पूर्ववत् ॥ इति ।

किंतु युद्धारम्भकाले क्षणमपि विलम्बमसहमानां तादात्विकीं परिस्थितिं निरीक्षमाणो भगवांस्तदीयां मनोवृत्तिं युक्तिप्रयुक्तिदृष्टान्तादिभिरावश्यकैः स्वल्पेनैव कालेन पुनः पूर्ववत्प्रकृतिमापाद्य तस्य युद्धाभिमुख्यं संपादयामास । तदुक्तम्—

कृत्यमेतत्कातिमहत्क कालो न क्षणाधिकः ।
भगवन्तं विना चैनत्कोऽन्यः साधयितुं क्षमः ॥ इति ।

एवं चानेन निष्कामकर्मयोगाख्येन पञ्चमेन प्रकरणेन युद्धकरणायोग्यतायाश्चतुर्थं कारणं रुधिरप्रदिग्धभोगसंभावनारूपं कथं निरासितं तत्प्रदर्शितम्। निष्कामकर्मयोग एव च योगबुद्धिपदेन बुद्धियोगपदेन चोच्यते। योगविषयिका बुद्धिर्यत्र बुद्धिविषयीभूतो योगो यत्रेति वा निरुक्तेः। बुद्धिर्निश्चयात्मिका वृत्तिः। तत्प्राधान्याभिप्रायेण निष्कामकर्मयोगे योगबुद्धिपदं शक्तम्। तत्र योगनिश्चयस्य सत्त्वात्। योगश्च चित्तवृत्तिनिरोधः। स चात्र विद्यत एव। अस्मिन्निष्कामकर्मयोगे 'कर्म करोमि' इत्येवं कर्तृत्वानुसंधानात्मिकायास्तथा 'कर्म न करोमि' इत्येवमकर्मात्मिकायास्तथैव फलभोगानुसंधानात्मिकायाश्च चित्तवृत्तेर्निरोधात्। योगप्राधान्याभिप्रायेण च बुद्धियोगपदमपि तत्र शक्तम्। ईदृशं च निष्कामकर्मयोगस्वरूपं 'कर्मण्येवाधिकारस्ते' (२।४७) 'योगस्थः कुरु कर्माणि' (२।४८) इति श्लोकद्वयेन सूचितम्। ततोऽमुं निष्कामकर्मयोगं प्रशंसति—'दूरेण ह्यवरं कर्म' (२।४९) इत्यादिना। अत्राऽऽहुः—कर्मशब्दो यद्यपि सत्कर्मासत्कर्मेत्युभयकर्मबोधकस्तथाऽप्यसत्कर्मणो हिंसाचौर्यादेर्निकृष्टतरत्वस्य लोके प्रसिद्धत्वादत्र कर्मपदेन यज्ञदानादिकं सत्कर्म गृह्यते। नतु केवलमसत्कर्मात्र कर्मपदेन गृह्यते। तत्रावरत्वस्य लोकतः सिद्धत्वात्। न च सिद्धस्यैवायमनुवादोऽस्तु। अपूर्वविध्यपेक्षयाऽनुवादे लाघवादिति वाच्यम्। अनुवादस्य प्रकृतनिष्कामकर्मयोगप्रशंसायां कथमप्यनुपयोगात्। फलमुखगौरवस्यादूषकत्वेनोपयुक्तार्थग्रहणस्यैवोचितत्वात्। सामान्यमुखप्रवृत्तस्य कर्मशब्दस्यासत्कर्ममात्रार्थकत्वेन संकोचे मानाभावाच्च। ननु त्वयाऽपि कथमत्र कर्मशब्दस्य सत्कर्ममात्रार्थकत्वं गृहीतमिति चेत्—भ्रान्तोऽसि। न वयमत्र कर्मशब्दस्य शक्तिसंकोचं प्रतिपादयामः। द्विविधस्यापि कर्मणोऽत्र कर्मशब्देन प्रतिपादनात्। नापि च 'उद्देश्यतावच्छेदकावच्छिन्नव्यापकत्वं विधेयार्थस्य' इति नियमोऽस्माकं विरुध्यते। द्विविधस्यापि कर्मणो निष्कामकर्मयोगापेक्षया निकृष्टत्वस्यास्माकमिष्टत्वात्। कथं तर्हि 'अत्र कर्मपदेन यज्ञदानादिकं सत्कर्म गृह्यते' इत्यनुपदमेवोक्तमिति चेत्—न तच्छक्तिसंकोचाभिप्रायेणोक्तं किंतु प्रकृतोपयोगाभिप्रायेणेति गृहाण। यज्ञदानादिकं हि कर्म लोके प्रशस्तमिति गीयते। तादृशकर्मकर्तारश्च लोके पूज्यतां यान्ति। स्वयमपि च ते 'वयं लोकमान्याः' इति मन्यन्ते। तादृशमपि च तत्सत्कर्म निष्कामकर्मयोगापेक्षया दूरेणावरमतीव निकृष्टम्। किं बहुना हिंसाचौर्यादिकर्मणो यादृशमनुचितत्वमवद्यत्वं त्याज्यत्वं

च लोके प्रतीयते तादृशकर्मकारिणां च नाऽऽदरः सभासु, तदपेक्षया नाल्पेनाप्यंशेन हीनमनुचितत्वमवद्यत्वं त्याज्यत्वं च यज्ञदानादिकर्मणां तथा तत्कर्मकारिणां श्रोत्रियाणामपि तत्त्वज्ञानिसमवाये नाऽऽदरः । एतच्चात्र सदसत्साधारणार्थबोधकेन कर्मशब्देन सूचितम् ।

'बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते' ( २ । ५० )

इत्युक्त्या स्पष्टीकृतं भगवता । तत्र हि 'सुकृतदुष्कृते' इति द्वंद्वनिर्देशेन द्वयोः सहविवक्षाऽवगम्यते । तथा च यथा हिंसाचौर्यादिदुष्कृतकर्मकारिणः सात्त्विकैः सद्भिः शोच्यन्ते—'कथमेतेषामीदृशे कर्मणि प्रवृत्तिरभूत् । कश्चानेषां लाभः स्यात् । परैर्वैते कथमत्र प्रवर्तिताः । सर्वथैतानाधिकारिणो निरुध्य पीडयेयुः । निगडितांश्च कृत्वा कारागारे प्रक्षिपेयुः । का गतिः । स्वेन कृतं कर्म स्वेनैव भोक्तव्यम् । यादृशी भवितव्यता तादृशी बुद्धिः । लिखितमिह ललाटे प्रोज्झितुं कः समर्थः' इत्यादि । तथैवैते सत्कर्मकारिणः श्रोत्रियाः स्वर्गादिफलहेतवो नित्यसत्त्वस्थैर्निष्कामकर्मयोगिभिः शोच्यन्ते । एतावानेव हि तत्र विशेषः—तत्राधिकारिणो राज्ञा नियुक्ता अत्र त्वीश्वरेण नियुक्ताः । तथा तत्र कारागृहं लोकप्रसिद्धमत्र तु शरीरमेव तथेति । अन्यत्सर्वं समानमेव । तदेतत्सर्वं 'कृपणाः फलहेतवः' इत्यनेनोक्तम् । एवं च लौकिकयज्ञदानादिसत्कर्मापेक्षयाऽतीवोत्कृष्टतरोऽयं निष्कामकर्मयोग इत्युक्तं भवति ।

नन्वियं प्रशंसा किमर्थं कृता । प्रशंसा हि प्ररोचनार्था । अत्र च प्रकरणे निष्कामकर्मयोगस्वरूपप्रदर्शनात्पूर्वमारम्भ एव 'बुद्ध्या युक्तो०' ( २ । ३९ ) इत्यादिना श्लोकद्वयेन कर्मबन्धप्रहाणादीनि फलानि प्रदर्श्य प्ररोचना कृता । तथा च दूरेण ह्यवरमित्याद्युक्तिर्व्यर्थेति प्रतिभातीति चेन्मैवम् । नैव भगवदुक्तावेकमप्यक्षरं व्यर्थं स्यात् । कस्तर्ह्यत्र भगवतोऽभिप्रायः । उच्यते—इयं हि प्रशंसा नैव प्ररोचनार्था । प्ररोचना नाम प्रीत्युत्पादनम् । प्रीतिश्च कर्तव्येऽर्थे स्पृहां जनयति । स्पृहा च सा मनस्यौत्सुक्यसंपादनद्वारा प्रवृत्तिं जनयति पूर्वसिद्धां वा प्रवृत्तिमुपोद्बलयति । इयं हि यज्ञदानादिकाम्यकर्मणां निन्दा नैव निष्कामकर्मयोगे प्रीतिमुत्पादयितुं प्रभवति । किंत्वकरणे प्रत्यवायश्रवणवत्संभावितभयात्परित्राणाय कर्तव्येऽर्थे प्रवृत्तिं जनयति पूर्वसिद्धां वा प्रवृत्तिं निश्चितां करोति । यथा संप्रति लोके विद्यार्थिनां परीक्षायां प्रवृत्तिर्दृश्यते तद्वत् ।

तथा हि—परीक्षिताः समुत्तीर्णा लभन्ते पारितोषिकम् ।
नानुत्तीर्णा न्यूनगुणास्तथा नाप्यपरीक्षिताः ॥
ते तु प्रत्युत दण्डार्हा भवेयुरनुपस्थिताः ।

एष एवार्थः प्रकारान्तरेणान्यत्रोक्तः—

विद्यार्थी नियताभ्यासी लभते पारितोषिकम् ।
परीक्षायां गुणाधिक्याल्लोके याति च मान्यताम् ॥
क्रीडासक्तस्त्वनभ्यासी व्रजेत्प्रत्युत दण्ड्यताम् ॥ इति ।

एवं च यथा पारितोषिकस्पृहा परीक्षायां प्रवृत्तावुत्साहं जनयति दण्डभीतिस्तु परीक्षायां प्रवृत्तौ निश्चयं जनयति तद्वदेवात्र बोध्यम् । एवं चात्र न किमपि भगवद्वाक्यमनर्थकम् ।

यश्चात्र भगवता क्रमः स्वीकृतः सोऽपि युक्ततर एव । उत्साहजनिका फलश्रुतिः ‘ बुद्ध्या युक्तो ’ ( २ । ३९ ) इत्यादिना पूर्वमुक्ता । निश्चयजनिका लौकिककर्मनिन्दा च ‘ दूरेण ह्यवरम् ’ ( २ । ४९ ) इत्यादिना पश्चात्कृतेति । यथा हि किंचिद्व्रतं नित्यं काम्यं च भवति । अकरणे प्रत्यवायश्रवणान्नित्यं फलश्रवणात्काम्यं च यथैकादशी व्रतम् । किंचिच्च व्रतं केवलं नित्यमेव । अकरणे प्रत्यवायश्रवणात् । नतु काम्यं फलाश्रवणात् । यथा संध्योपासनादि । तत्र कर्मणि फलश्रुत्या प्रोत्साहिते मनसि तत्र निश्चयः स्वयमेव प्रविशति । प्रविष्टं च तं पश्चात्केवलं स्थिरी करोति । अकरणे प्रत्यवायश्रुतिः । केवले नित्ये तु फलाश्रवणेन प्रोत्साहनाभावात्स्वयमविशन्तं निश्चयं प्रवेश्य स्थिरी करोत्यकरणे प्रत्यवायश्रुतिरिति तत्रातिभारः स च तत्रागत्या सह्य इत्यन्यत् । तथा च नित्यं काम्यं च यद्व्रतं तत्र पूर्वं फलमभिधायैव पश्चादकरणे प्रत्यवायोऽभिधेयो भवति । अन्यथा वृथाऽतिभारः स्यात् । तद्वदेव प्रकृते बोध्यम् । यच्चात्र निष्कामकर्मयोगस्वरूपप्रदर्शनात्प्रागेव तत्फलं प्रतिपादितं तदवधानदार्ढ्यायेति तदभिप्रायः प्रागुक्त एव ।

अस्मिंश्च निष्कामकर्मयोगाख्ये पञ्चमे प्रकरणे सिद्ध्यसिद्ध्योः समत्वरूपो योगः प्राधान्येन विधित्सितः । स च कर्मण्येवेति तदप्यत्र विधेयं भवति । यद्यपि तद्वस्तुतः सिद्धमेव । ‘ नहि कश्चित्क्षणमपि ० ’ (३।५) इत्युक्तेः । तथाऽप्यर्जुनाभिमतां ‘ न योत्स्ये ’ (२।९) इत्येतादृशीमकर्मावस्थां दूरीकर्तुं

तदप्यत्र विधित्सितम् । तच्च (मा ते सङ्गोऽस्त्वकर्मणि, योगस्थः कुरु कर्माणि) (२।४८) इति विहितमेव । तत्र च विशेषणतया 'योगस्थः' इति पदेन योगोऽपि विहितः । तं च प्रकरणप्रतिपाद्यतया प्राधान्येन विधित्सन्नुपसंहरति तस्माद्योगाय युज्यस्वेति । योग एव कर्मसु कौशलं नान्यत् । लोकानां हीत्थं मतिः कौशलं नाम यथाविध्यनुष्ठानजनको मानसो धर्मविशेषः । यस्मिंश्च सति कर्ता क्षणमप्यनवहितो न भवति कर्मणि वैगुण्यं च लेशतोऽपि न भवति कर्मफलं च पूर्णं यथायोग्यं प्राप्यत इति । एतल्लोकाभिमतं कौशलं मन्वन्तां नाम लोकाः । वस्तुतः कर्मसु कौशलं योग एवेत्यर्थः । ननु लोकाभिमतेन कौशलेन स्वर्गादीन्यभिमतानि फलानि प्राप्यन्ते । योगेन तु न तदपेक्षयाऽधिकं किंचित्प्राप्यते प्रत्युत तान्यखिलानि फलानि निवर्त्यन्ते । तथा च किमस्य कृत्यं येन कौशलत्वं वर्ण्यत इति चेत्—'प्रत्युत तान्यखिलानि फलान्यनेन निवर्त्यन्ते' इति यत्त्वयोच्यते तदेवास्य कृत्यम् । एतत्प्रकरणारम्भ एवैतत्प्रदर्शितं 'कर्मबन्धं प्रहास्यसि' (२।३९) इति । एतच्च योगकृत्यं नेतरसाधारणम् । किंत्वमृतत्वप्राप्तिद्वारत्वादसाधारणं योगमात्रसाध्यम् । तथा चास्य महत्त्वं किमु वर्णनीयम् । नन्वमृतत्वं मरणराहित्यम् । मरणं च जन्मवतोऽवर्जनीयमेवेति जन्मबन्धप्रहाणमावश्यकमिति चेत्सत्यम् । कर्मबन्धप्रहाणमेव हि जन्मबन्धप्रहाणम् । जन्मनः कर्माधीनत्वात् । तदेतद्दर्शयति भगवान्—

'कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ।
जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम्' ॥ (२।५१) इति ।

अनामयं पदममृतत्वम् । आमयो हि मरणस्य पूर्वावस्था तद्राहित्ये मरणाभावस्य नान्तरीयकत्वात् । मोक्ष इति यावत् । ननु तदानीमर्जुनेनाप्रार्थितमेतत्पदं कथं भगवता प्रदर्शितमिति चेन्न । उक्तोत्तरत्वात् । तदन्तरेणार्जुनमोहस्यानिवार्यत्वात् ।

नापृष्टः कस्यचिद्ब्रूयान्न प्रदद्यादयाचितः ।
तत्रोक्तोऽर्थस्तथा दत्तो न यास्यत्युपयुक्तताम् ॥

इति तु भगवद्व्यतिरिक्तविषयम् । सूक्ष्मतरार्थदर्शिनि त्रिकालज्ञे विचारपरिप्लुते भगवति तस्याप्रवृत्तेः । अत एव—

दातारः प्रार्थितार्थानां भूयांसो भुवनत्रये ।
अप्रार्थितानामर्थानां दातैकः परमेश्वरः ॥

इत्यभियुक्तोक्तिः संगच्छते । नन्वर्जुनस्य तदानीं कर्मविशेषे युद्धे प्रवृत्तिर्भगवत इष्टा । साऽनेन कर्मयोगेन कथं स्यात् । सिद्ध्यसिद्ध्योः समत्वरूपस्य योगस्योपस्थितेषु सर्वेषु कर्मस्वावश्यकत्वेऽप्यन्येषु कर्मसु तत्संभवात् । न च युद्धमारब्धमेवेत्युपस्थितत्वात्तदपि ग्राह्यं भवतीति वाच्यम् । तदानीं निर्विण्णेनार्जुनेन 'न योत्स्ये' ( २ । ९ ) इत्येवं तस्य त्यक्तत्वात् । न च साऽर्जुनस्याकर्मावस्था 'मा ते सङ्गोऽस्त्वकर्मणि' ( २ । ४७ ) इत्येवं भगवता निषिद्धा । तथा च 'न योत्स्ये' इत्यस्यापवादस्याभाव उत्सर्गस्य युद्धस्योपस्थितिः स्यादेवेति वाच्यम् । युद्धादन्येन केनचित्कर्मान्तरेणापि तस्या अकर्मावस्थाया निषेधसिद्धेः । भगवद्दृष्ट्या तस्या अकर्मावस्थात्वाभावाच्च । या हि 'न योत्स्ये' इत्याकारिकाऽर्जुनस्य तदानीं मानसी वृत्तिस्तद्रूपस्याऽऽन्तरकर्मणस्तदानीं सत्त्वात् । ततश्च भगवदिष्टाऽर्जुनस्य युद्धे प्रवृत्तिः कथमनेन निष्कामकर्मयोगकथनेन सिध्यतीति चेत् । मैवम् । अर्जुनाभिमतायास्तूष्णींभावरूपाया अकर्मावस्थाया यो निषेधो भगवता 'मा ते सङ्गोऽस्त्वकर्मणि' इत्येवं कृतस्तस्य निर्वेदे सत्यसंभवेन निर्वेदनिषेधेऽपि तत्तात्पर्यस्याऽऽवश्यकत्वात् । एवं सति च मोहे निर्वेदनिषेधस्यासंभवेन मोहनिषेधपर्यन्तमपि तत्तात्पर्यं भगवतोऽत्राभिमेतम् । न च सिद्ध्यसिद्ध्योः समत्वरूपस्यास्य योगस्य निर्वेद उपकारक एवेति कथं तन्निषेधे तात्पर्यं भगवतः कल्प्यत इति वाच्यम् । मोहमूलकस्य प्रकृतस्य निर्वेदस्य योगोपकारकत्वाभावात् । एवं च मोहे तन्मूलकनिर्वेदे च निषिद्धे युद्धस्योपस्थितिरवश्यंभाविनीत्युपस्थितं युद्धं निष्कामकर्मयोगस्याऽऽश्रयत्वेन प्रकृते ग्राह्यं भवत्येवेति सिद्धम् ।

अथ कीदृशस्तर्हि निर्वेदो योगस्योपकारकः । कदा च स प्राप्स्यते यदर्थमिदानीं प्रयतितव्यमित्येवमर्जुनस्य मनस्युद्भवन्तमाक्षेपं परिहरति—

यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति ।
तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च ॥ ( २।५२ ) ।

स्थायिनो निर्वेदस्य लक्षणमुक्तं रसगङ्गाधरे ( पृ० ३२ )—नित्यानित्यवस्तुविवेकजन्मा विषयविरागाख्यो निर्वेदः । गृहकलहादिजस्तु व्यभिचारीति ।

तथा च प्रकृते महारोद्यतभीष्मादिस्वकीयजनप्रत्यक्षदर्शनजन्यो निर्वेदो व्यभिचारीति स नैव योगमुपकरोति किंतु नत्वेवाहमित्यादिना यदात्मनो नित्यत्वं देहादेश्चानित्यत्वमुक्तं तादृशविवेकजन्यः । तादृशो विवेकश्च देहादिष्वात्मभ्रमजनकं मोहं दूरीकृत्य विषयविरागरूपं निर्वेदं जनयति । गन्तासीत्यनद्यतने लुट्प्रत्ययप्रयोगेण नाद्येदानीं तादृशी तवावस्था प्राप्स्यतीति द्योतितम् । केवलमिदानीं तादृशयोगप्राप्त्यर्थं यत्नः करणीयः । अत एव 'योगाय युज्यस्व' इत्युक्तम् । योगप्राप्त्यर्थं बद्धपरिकरो भवेति तदर्थः ।

अत्रेदं बोध्यम्—बुद्धेर्वस्तुतः करणत्वात् 'यदा त्वं मोहकलिलं बुद्ध्या व्यतितरिष्यसि' इति वक्तव्यम् । तथाऽनुक्त्वा यत् 'यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति' इत्युक्तं तत्र युष्मच्छब्दवाच्यस्य कर्तृत्वाविवक्षया तस्यास्वातन्त्र्यं बुद्धेः कर्तृत्वविवक्षया तस्याः स्वातन्त्र्यं च सूच्यते । तेन त्वं बुद्ध्यधीनो नतु त्वदधीना बुद्धिरिति च सूचितं भवति । बुद्धिरन्तःकरणविशेषः । सा चेदानीमुक्तप्रकारेण स्वतन्त्रा मोहेन चाऽऽक्रान्तेतीयमवस्था तेऽतीव शोचनीया दृश्यते । तदुक्तम्—

स्थान एव यदाक्रम्य बुद्धिं मोहः प्रनृत्यति ।
स्वातन्त्र्यं यत्र नारीणां शठास्तत्र न दुर्लभाः ॥ इति ।

तद्विपर्ययेण च स्वकीयं स्वातन्त्र्यमास्थितवता त्वया प्रेरिता बुद्धिर्यदा मोहमाक्रामेत् । न केवलं तदाक्रमणमात्रं किंतु तं मोहमाक्रम्य पश्चात्तत्संबन्धो यथा न भवेत्तथा तस्मात्परतो गच्छेत्तदा योगोपकारकं निर्वेदं प्राप्स्यसि । तॄधातुश्च तरणवाची । प्रकृते मोहतरणं च मोहाक्रमणम् । अत्युपसृष्टतॄधातुबोधितमतिक्रमणं च तस्मान्मोहात्परतो गमनम् । तत्र विशेषो वीत्युपसर्गेण द्योत्यते । विशेषश्चाऽऽक्रान्तवस्तुनः पश्चाल्लेशतोऽप्यसंबन्धः । सांप्रतं मोहेन बुद्धिराक्रान्ता किल । किंतु स मोहस्तादृशबुद्धिसंबन्धेनैव तदाश्रयेण स्वकार्यं साधयति न तु तस्याः परतो गत्वा तदसंबन्धेन । नैवं यदा बुद्धिर्मोहमाक्रामेत्तदा । किंतु तादृशमोहाक्रमणपूर्वकं तस्मान्मोहात्परतो गत्वा तत्संबन्धं सर्वथा परित्यजेत् । तदैव च योगोपकारकनिर्वेदप्राप्तिः । निर्वेदस्वरूपं च नित्यानित्यवस्तुविवेकजन्माविषयविराग इत्यनुपदमेव प्रदर्शितम् । विषया इन्द्रियार्थाः शब्दस्पर्शादयो भोग्याः । तेषु विरागोऽप्रीतता । तेषां प्रीतिविषयत्वाभाव इति यावत् । प्रीतिविषयीभूता इन्द्रियार्थास्तु मोहपक्षीया एव । ते च भूता भाविनश्चेति

द्विविधाः। तत्र भूता अनुभूताः संस्कारद्वारा मोहसहाया भवन्ति बुद्ध्याक्रमणे। भाविनस्तु कल्पनामया अपि तर्कद्वारा साहाय्यकमाचरन्त्येव मोहस्य। मनोराज्यादौ तथा दृष्टत्वात्। ते च पुनरिन्द्रियार्था इन्द्रियपञ्चकभेदेन पञ्चविधाः। तत्र भाविनोऽर्था आघ्रेयास्वाद्यद्रष्टव्यस्पृश्यश्रोतव्यभेदेन पञ्चविधाः। भूता अर्थाश्चाघ्रातास्वादितदृष्टस्पृष्टश्रुतभेदेन पञ्चविधाः। तेषु च प्रमाणमूर्धन्यया श्रुत्या स्वर्गकामादिपदैर्बोधिताः स्वर्गकीर्तिपुत्रपशुभूत्यादयोऽर्थाः सर्वतो बलिष्ठाः। तेषां च केषांचिच्छ्रुतानां केषांचिच्छ्रोतव्यानां सर्वेषां प्रीतिविषत्वाभावे साधिते प्रधानमल्लनिबर्हणन्यायेनेतरे सर्वेऽपि विषया अर्थादेवाप्रीता भवन्ति।

नन्वेवं वेदप्रतिपादितेषु ज्योतिष्टोमादिकाम्यकर्मसु प्रवृत्तिर्न स्यादिति चेत्– मा भूत्प्रवृत्तिर्न नः किंचिच्छिद्यते। प्रत्युतेष्टापत्तिरेव। नैव चात्र वेदाप्रामाण्यापत्तिरिति भ्रमितव्यम्। सत्यां कामनायां तदर्थमयमुपाय इत्येतावन्मात्रं वेदेन बोध्यते। न त्वयमुपायः करणीय एवेति वेदतात्पर्यम्। तथा च सत्यामपि कामनायां शारीरशक्तेर्द्रव्यस्य वाऽभावेन ज्योतिष्टोमाद्यकरणेऽपि न तद्बोधकवेदाप्रामाण्यशङ्का किमुतासत्यां कामनायामिति न कश्चिद्दोषः।

अत्रेदं बोध्यम्। मोहकलिलमित्यत्र कलिलशब्देन मोहे गतेऽपि तदवशेषभूतः कालिमोच्यते। ( सारा, चट्टा, डाग इति भाषायां प्रसिद्धः )। तस्याप्यतिक्रमोऽत्रापेक्ष्यते निर्वेदस्य कार्त्स्न्येन सिद्धये। अन्यथा तदवशेषतः कदाचिदभिमन्युवधश्रवणादिकारणान्तरादपि भ्रमोदये शस्त्रन्यासप्रसङ्गः स्यात्। तदुक्तम्–

मनोवाक्कायदोषाणामवशेषः सुदुःसहः।
संतिष्ठते यावदायुः गृहायं मृगयन्निव॥ इति।

यथा पूर्णकुम्भाज्जलेऽपसृते आर्द्रता, भोगेन कर्मणि नष्टेऽपि तदनुशयः। त्वचि व्रणे विरोपितेऽपि तच्चिह्नम्। यथा च–

विनाशितेऽपि बालस्य मात्रा रोदनकारणे।
हुंदकारं ददात्येव क्षणं तदवशेषतः॥ इति।

अयमेवार्थः प्रकारान्तरेण प्रतिपादितो दृश्यते–

खाद्याभावा रुदन्बालस्तल्लाभेन परोदनात्।
विरतोऽपि क्षणान्द्वित्रान्हुंदकारं ददाति सः॥ इति।

हुंदकारः 'हुंदका' इति भाषायां प्रसिद्धः । स च स्वयं विनशनशीलः कियताचित्कालेनोपायान्तरं विनैव विनङ्क्ष्यत्येव । किंतु यादृशं रोदनकारणं क्षुद्रत्वाद्रोदनमुद्भावयितुं न पर्याप्तं भवति तादृशं क्षुद्रमपि कारणं हुंदकारावस्थायां समुत्पन्नं चेत्तदानीं तादृशाविनश्यदवस्थस्यापि हुंदकारस्य सहायेन रोदनमुद्भावयितुं पर्याप्तं भवतीति दृश्यते । तद्वत्प्रकृते मोहावशेषो बाधकः स्यादिति तस्यापि बुद्ध्याऽतिक्रम आवश्यकः । अतस्तदर्थं कलिलपदमुपात्तं भगवता । यद्यप्यतिक्रम्य पर्वतं नदीत्युक्ते पर्वतपुत्रिकाया उपत्यकाया अपि नदीकृतातिक्रमः सिध्यति । यथा च नदीमतिक्रम्य ग्राम इत्युक्ते नद्या इव तत्सैकतस्याप्यतिक्रमोऽवगम्यते न तदर्थं तत्र पदान्तरापेक्षा दृश्यते । तथाऽपि योग्यताबलात्तत्र तथा न तु सर्वत्र तथैवातिक्रम इति नियमः । अतिक्रम्य पर्वतमवतिष्ठातिक्रम्य नदीमवतिष्ठेत्युक्त उपत्यकायामपि पुलिनेऽपि चावस्थानसंभवात् । तस्मात्प्रकृते मोहकृतस्तदवशेषकृतो वा बुद्ध्यतिक्रमो लेशतोऽपि नास्तीति सिद्धम् । यद्यपि व्यतीत्युपसर्गद्वयं कर्मव्यतिहारद्योतकमन्यत्र दृश्यते । प्रायोदर्शनन्यायेन च सोऽर्थोऽत्र बुद्धिमारोहति । तथाऽपि बुद्धिकृतमोहातिक्रमविपरीतस्य मोहकृतबुद्ध्यतिक्रमस्य लेशतोऽप्यत्र प्रकृतार्थानुपयोगान्नात्र कर्मव्यतिहाराभिप्रायेण व्यतीत्युपसर्गद्वयमुपात्तं भगवता । अत एवात्र व्यतितरिष्यतीति परस्मैपदमुपात्तं भगवता । अन्यथा 'कर्तरि कर्मव्यतिहारे' (पा० सू० १।३।१४) इत्यनेनाऽऽत्मनेपदप्रसङ्गात् । एवं निर्वेदप्राप्तियोग्यं कालं प्रदर्श्य तदुत्तरं योगप्राप्तिकालं प्रदर्शयति—

श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला ।
समाधावचला बुद्धिस्तदा योगमवाप्स्यसि ॥ ( २ । ५३ ) ।

बुद्धिरन्तःकरणविशेषः । सा च प्रकृत्या चञ्चला न क्षणमपि निर्विषयाऽवतिष्ठते । विषयाश्च शब्दस्पर्शरूपरसगन्धभेदेन पञ्चविधाः । तेषां च पुनर्बुद्धिव्यापारविषयीभूता बहवः प्रकारा आनुकूल्यप्रातिकूल्यौदासीन्यभेदेन स्वकीयपरकीयभेदेन भुक्तभुज्यमानभोक्ष्यमाणभेदेनाऽऽन्तरबाह्यभेदेन स्थूलसूक्ष्मभेदेन शक्याशक्यभेदेनार्हानर्हभेदेन चानेकविधत्वात् । श्रुत्या च स्वर्गकीर्तिपुत्रपशुभूत्यादयः स्वर्गकामादिपदैः प्रदर्शिताः ।ताननूद्य चानेकविधानि कर्माणि प्रतिपादितानि । तेषु च पुनरनुकूलप्रतिकूलाद्यैः पूर्वोक्तैरनेकैः प्रकारैर्बुद्धिर्व्यापृता भवति कस्मै फलाय प्रयतितव्यमिति । तदुक्तम्—

प्रकृत्या चञ्चला बुद्धिर्विषयाभिमुखी ध्रुवम् ।
धावतीतस्ततोऽजस्रमष्टमे मासि गर्भवत् ॥ इति ।

एवंविधाया बुद्धेर्निश्चलावस्थितिः समाध्यर्थमपेक्षते । नैश्चल्यं चैकविषयप्रवणत्वम्। एकविषयप्रवणा हि बुद्धिः समाधियोग्या भवति । नैश्चल्यं च तस्याः शनैः शनैरभ्यासेन साधयितुं शक्यते । ननु यदि बुद्धिः प्रकृत्यैव चञ्चला तर्हि तद्विरुद्धं नैश्चल्यमभ्यासेनापि कथं साधयितुं शक्यं भवेत् ।

प्रकृत्या यस्य यो दोषस्तथा यस्य च यो गुणः ।
न प्रयत्नशतेनापि निवर्तेताऽऽश्रये सति ॥

इत्युक्तेरिति चेत् । उच्यते—बुद्धिर्हि प्रकृत्या नैव चञ्चला । किंतु तत्र प्रविशतां विषयाणां चाञ्चल्येन बुद्धौ चाञ्चल्यं प्रतीयते । विषया ह्यनेके प्रत्येकमनेकप्रकारा अनेकैश्च प्रकारैरहमहमिकया बुद्धौ प्रविशन्ति । प्रविशन्तं प्रविष्टं वैकमपसार्य बलिष्ठोऽन्यः सहसा प्रविशति । तमप्यपसार्य क्षणादेवापरः प्रविशति । तत्रेदृशप्रवेशक्रियाकृतं विषयाणां चाञ्चल्यं बुद्धौ प्रतीयते । विषयचाञ्चल्यस्य बुद्धावनवस्थानरूपत्वात् । बुद्धिर्हि सदा सविषयैवावभासते । तत्रान्तर्गतविषयात्पृथगपि बुद्धेः स्वरूपं ततः पार्थक्येन लोका न प्रतियन्ति । किंत्वन्तर्गतविषयविशिष्टमेव बुद्धेः स्वरूपं मन्यन्ते लोकाः । तन्मूलक एव च बुद्धिः प्रकृत्या चञ्चलेति लोकप्रवादः । यथा क्वचिद्गृहेऽवस्थितानां भूयसां जनानामन्योन्यमुच्चैस्तरां प्रवादे संजायमाने ‘ गृहं कलहायते ’ इति लोकानां प्रवादस्तद्वत् । तथा च वस्तुतो बुद्धेर्विषयतः पार्थक्येन बुद्धौ चाञ्चल्यस्य च नैसर्गिकस्याभावेन तत्र निश्चलत्वमभ्यासेन साधयितुं शक्यत इति सिद्धम् । निश्चलत्वमपि चाप्रवेशमूलकमेव यत्रानेके विषया मुहुर्न प्रविशन्ति किंत्वधिकाधिककालपर्यन्तमेकविषयप्रवणतैव बुद्धेर्दृश्यते तत्र बुद्धिर्निश्चलेति व्यवह्रियते । एवं च ‘ न बुद्ध्या विषया अनुवर्त्या विषयैर्हि नाम बुद्धिरनुवर्त्या ’ ईदृश्यवस्थितिरभ्यासेन साधनीया । इयं हि निश्चला बुद्धेरवस्था समाधियोग्या। समाधिर्नामोद्दिष्टैकविषयप्रवणता । समाधौ च पुनरचला बुद्धिरपेक्ष्यते ।अचला चलाविरोधिनी । अनुद्दिष्टविषयाणामान्तरप्रवेशं रुन्धन्तीति यावत् । स्वोद्दिष्टस्वप्रविष्टविषयवियोगमकुर्वाणा स्वानुद्दिष्टस्वाप्रविष्टविषयसंयोगं निरुन्धाना चेत्यर्थः । इयं निश्चलाऽचला चेत्येतत्पदद्वयेन बोध्यते । पूर्वं ये

प्रीतिविषयीभूता विषया आसंस्तेऽपि समाधौ निरोद्धव्या एव भवन्ति। ईदृश्य-वस्थितिश्च येन साधिता तेन बुद्ध्यधीना विषयाः कृता नतु पूर्ववद्विषयाधीना तस्य बुद्धिः। तया च बुद्ध्या यदि कदाचिन्निरोधो दूरीकृतः स्यात्तेन च सर्वे विषयास्तत्र प्रविशेयुस्तर्ह्यपि ते विषयास्तस्यां बुद्धौ परिणामविशेषमापादयितुं नैव प्रभवेयुः। प्रविश्यमानान्विषयानियं नैवानुकूलत्वेन नापि प्रतिकूलत्वेन प्रवे-शयति। इयं हि या साम्यावस्था स एव योग इत्युच्यते। एतदेवोक्तं तदा योगमवाप्स्यसीति।

एवं भगवतोक्तां निष्कामकर्मयोगावस्थामाकर्ण्य भगवद्वचसि श्रद्धालोरर्जु-नस्य मतिरित्थमासीत् 'इयं हि भगवदुक्ता कर्मयोगावस्थाऽतीव दुर्घटा दुःसंपादा च सर्वथाऽनुपपद्यमानेव दृश्यते। भगवदुक्तत्वान्नात्रानुपपत्तिः काचित्स्यात्। प्रत्युत भगवानत्र मामेवोद्दिश्योपदिशति योगस्थः कुरु कर्माणीति। अतः साऽनुपपत्तिर्मम मनसि प्रतीयमाना मयैव कथमपि निवारणीया। अथेदृशो योगी यदि कश्चित्क्वचिद्दृश्येत तर्हि 'नहि दृष्टेऽनुपपन्नं नाम' इति न्यायेन तं सूक्ष्मतया निरीक्ष्य तदुपपत्तौ यत्नः कर्तुं शक्येत। किंतु 'ईदृशो योगी कथं स्यात्' इति मयोच्यते चेत् 'अविश्वासेनायमित्थं वक्ति' इति भगवतो मतिः स्यात्। सा तु सुतरां नेष्यते। निदर्शनं त्वावश्यकमेवेति। युक्ता चेयमर्जुनस्य मतिः। यथाऽऽहुः सायणाचार्याः सर्वदर्शनसंग्रहेऽन्तिमे शांकरदर्शने (पृ. ४१५)— 'नहि वेदप्रतिपादितेऽर्थेऽनुपपन्ने वैदिकानां बुद्धिः खिद्यते। अपि तु तदुपपाद-नमार्गमेव विचारयति' इति। तथा प्रकृते भगवदुक्तेऽर्थेऽनुपपन्नतया प्रतीतऽपि नैव श्रद्धालोरर्जुनस्य मतिः खिद्येतापि तु तदुपपादनमार्गमेव विचारयेत्। अत-स्तादृशीं मतिमास्थाय भगवदुक्तावनुपपत्तिं निराचिकीर्षुः पृच्छति—अर्जुन उवाच—स्थितप्रज्ञस्य का भाषेत्यादि। एतच्च षष्ठं स्थितप्रज्ञप्रकरणं निष्कामक-र्मयोगाख्यस्य पञ्चमप्रकरणस्य शेषभूतमेव न सर्वथा ततो भिन्नम्।

यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः।
इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः॥ (२।६०)।

यथा देवतोत्सवादिषु रात्रौ जागरण आवश्यकप्रबोधरक्षणाय 'इयं निद्रा मे प्रबोधमपहरेत्' इत्येवं विजानतोऽत एव च तादृशनिद्राविरुद्धं नस्याघ्राणादिकं यत्नं कुर्वतोऽपि द्वित्रवारं यत्नस्य साफल्येऽपि च पर्यवसाने निद्रा स्वार्थं साध-

यत्येव तथा निःश्रेयसमार्गे आवश्यकात्मस्वरूपाभिव्यक्तये 'इमानि विषयाभिमुखानीन्द्रियाण्यात्मज्ञानोन्मुखत्वमपहरेयुः' इत्येवं विजानतोऽत एव तादृशेन्द्रियविषयग्रहणरूपव्यापारविरुद्धं—

'तच्चिंतनं तत्कथनमन्योन्यं तत्प्रबोधनम्।
एतदेकपरत्वं च ब्रह्माभ्यासं विदुर्बुधाः॥'

इत्युक्तरीत्याऽभ्यासरूपं यत्नं कुर्वतोऽपि द्वित्रवारं यत्नस्य साफल्येऽपि च पर्यवसाने विषयोन्मुखत्वरूपं स्वार्थं साधयन्त्येवेन्द्रियाणि प्रायः। पुरुषस्येति पदेन ज्ञानशक्तिक्रियाशक्त्योराधिक्यं सूच्यते। स्त्रीणां यादृशी ज्ञानशक्तिः क्रियाशक्तिश्च तदपेक्षया पुरुषे साऽधिकेति प्रसिद्धम्। विपश्चित इत्यनेन ज्ञानशक्त्यतिशयः सूच्यते। यतत इत्यनेन क्रियाशक्त्यतिशयः सूच्यते। अवहितचित्तत्वं च सूच्यते। इन्द्रियाणि—इन्द्र आत्मा तस्य लिङ्गम्। करणेन कर्तुरनुमानात्। आत्मानुमापकत्वं च तेषां विषयाभिमुख्यद्वारा। मृतवत्स्थितेन मनुष्येण यदीतस्ततोऽवलोक्यते हस्तादि चाल्यते वा तर्ह्यत्राऽऽत्माऽस्तीत्येवं समीपस्थाः प्रतिपादयन्ति। बहुवचनेन तेषां बाहुल्यं सूच्यते। ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि च पञ्चेति। तथा चाऽऽत्मज्ञानविघातिनां बाहुल्यं सूचितं भवति। प्रमाथीनि स्वविरुद्धव्यापारविघातकानि। ताच्छील्ये णिनिना विरुद्धव्यापारविघातकत्वं स्वभाव एव तेषामिति सूच्यते। हरन्ति—आत्मसात्कुर्वन्ति। मनः—मननशीलम्। मननशीलस्य मनस इन्द्रियैरात्मसात्करणं चेत्थम्—यथाऽग्निसाद्भवति शस्त्रमित्यत्राग्निः शस्त्रस्य नाऽऽकारं विनाशयति। अविरुद्धत्वात्। किंतु केवलं तस्य शस्त्रस्य कृष्णवर्णमाच्छाद्य तच्छस्त्रं स्वकीयवर्णेन प्रदर्शयति। तथेन्द्रियाणि न मनसः स्वरूपं (मननशीलत्वं) विनाशयन्ति किंतु तस्य मनस इन्द्रियनियामकत्वं स्वातन्त्र्यमाच्छाद्य स्वपरतन्त्रं तदिति प्रदर्शयन्ति। अग्ने रोहितो वर्णः शस्त्रस्य कृष्णेन वर्णेन विरुद्धः। इन्द्रियाणां स्वातन्त्र्यं मनसः स्वातन्त्र्येण विरुध्यते। एवं चेन्द्रियाणि ज्ञानशक्तिक्रियाशक्त्याधिक्ययुतस्यापिस्वमनोविरुद्धं चोरभूतेन्द्रियव्यापारं जानतोऽप्यप्रमत्तस्यापि तादृशचोरविरुद्धं यत्नं कुर्वतोऽपि च मनो हरन्ति चेत्—यत्नमकुर्वतस्तत्राप्यनवहितस्य तत्राप्यज्ञस्य तत्रापि ज्ञानशक्तिक्रियाक्त्याधिक्यहीनस्य मनो हरन्तीति किमु वक्तव्यमिति तात्पर्यम्। तथा चैवंभूतस्यापि पुरुषस्य विपश्चितो यततश्चापि मनोहरणं यत इन्द्रियाणि कुर्वन्ति तत आत्मज्ञानस्य दुर्लभत्वं द्योत्यते।

इदं च बोध्यम्—एतादृशस्यापि सतः पुरुषस्य मनोहरणं येन व्यापारेण ...न्त्यीन्द्रियाणि तत्र व्यापारे न तेषां लेशतोऽपि यत्नापेक्षा किंतु स व्यापारस्तेषां स्वाभाविकः। इन्द्रियत्वं ह्यात्मानुमापकत्वं तच्चात्र विषयग्रहणद्वारेति तेनैव व्यापारेण मनोहरणं कुर्वन्ति। स व्यापारोऽपि हेलयैव नु जायते। प्रमथनशीलत्वात्। स्वाभाविकं विषयग्रहणरूपं व्यापारं कुर्वत्स्विन्द्रियेषु तादृशव्यापारसत्तामात्रेणैव तद्विरुद्धस्य विपश्चित्पुरुषकृतस्य ब्रह्माभ्यासस्य विघातो भवति। एतदेव प्रमथनशीलत्वम्।

इदं चापरमत्र बोध्यम्—'विपश्चितो नेत्रेऽञ्जनं प्रक्षिप्य दिदृक्षोस्स्वहितार्थं यतमानस्यापि च सतो यन्मनोहरणमिन्द्रियाणि कुर्वन्ति तद्...कं स्यान्नतु समक्षमसंभवादिति न मन्तव्यम्। अतः प्रसभमित्युक्तिः। प्रसभं प्रसह्येत्यर्थः। नतु गुप्तमिति तात्पर्यम्।

नन्विदमनुपपन्नम्। नहि चोरकृतापहारो मा भूदित्येतदर्थं यतमानस्य पश्यतः समक्षं चोरास्तदीयं वस्त्वपहर्तुं शक्नुवन्ति, लोके तथा काप्यदर्शनादिति चेत्सत्यम्। यद्यपि सर्वत्र न दृश्यते तथाऽपि निद्रया मनोहरणं तथा दृश्यते। किंच स्वामिना स्वकीयवस्तुसंरक्षणार्थं कोशागारस्याभितः संचारे नियोजितः प्रेष्य एव यदि चोरैरुपदादिप्रदानेन स्वीयः कृतः स्यात्तर्हि सुलभ एव चोराणां वस्तुलाभः। तथा च विपश्चिताऽऽत्मज्ञानाय तच्चिन्तनतत्कथनादिव्यापारे नियोजितं मन एवेन्द्रियैर्विषयभोगजसुखप्रदानेन स्वीयं कृतं तर्हि सुलभ एवेन्द्रियाणां स्वार्थलाभः। एतादृशो लुब्धः प्रेष्यः कृतघ्न एव। इतोऽप्यधिकः कृतघ्नतरश्च कश्चित्प्रेष्यश्चोरप्रदत्तोपदालुब्धस्तस्यामवस्थायामपि स्वामिनः सकाशात्प्राप्यमाणं मासिकं वेतनं जिघृक्षुः 'वस्तुसंरक्षणरूपं मदीयं कृत्यं मया क्रियत एव' इति स्वामिनं प्रतिभासयति। ततोऽपि कृतघ्नतरः कश्चित् 'अहं भवत इव ममैते सेवकाः' इत्येवं चोराणां चोरत्वमाच्छाद्य सेवकत्वं च प्रदर्श्य कोशागारे स्वामिसमक्षमपि तान्संचारयति। तथाविधास्ते प्रच्छन्नचोराः कोशागारस्थवस्तूनां रूपान्तरं कुर्वन्ति। स्वामी च मूलप्रेष्ये विश्वासातिशयात् 'एतादृशान्येवेमानि वस्तूनि' इति संभावयति। एतादृश्यामवस्थायां च यदि स्वामी तदीयात्यन्तहितैषिणा केनचित्प्रेष्यदोषान्प्रकाश्य 'एवमेवम्' इति बोधितो भवेत् स्वामी च तदीयं वचनं सत्यतया गृह्णीयात्तर्हि स्वामी प्रथमतः किं

कुर्यात् । 'प्रेष्यत्यागे सर्वस्वहानिः स्याद्यतः सर्वं प्रेष्यकरतलगतम्' इति मत्वा न प्रेष्यं दूरी कुर्यात् । किंतु पूर्ववद्विश्वासं प्रदर्श्य केवलं तदीयसेवकत्वेन गृहीतान्प्रच्छन्नचोरान्प्रेष्यतो दूरी कुर्यात् । अतः प्रथमत इन्द्रियाणि मनसा वियुक्तानि कुर्यात् । एतदेव च तेषां नियमनम् ।

अत्रेदमवधेयम् । इन्द्रियाणि प्रमाथीनीति बहुवचनेन बहूनीन्द्रियाणि मनोहरणं यत्कुर्वन्ति तत्सामर्थ्यं तेषां सर्वेषां मिलित्वोत प्रत्येकं स्वातन्त्र्येण । आद्ये कस्याप्येकस्य नियमनेन स्वाभीष्टसिद्धिः स्यात् । यथा चतुष्पद्या वेद्याश्चतुःस्तम्भयुतमण्डपस्य वैकस्मिन्पादे स्तम्भे वा भग्ने न तत्र वेदिर्मण्डपो वा पूर्ववत्सारल्येनावस्थातुं शक्नोति । तिर्यगवस्थानं तु न कार्यकरम् । एवं मिलित्वा सामर्थ्ये कस्याप्येकस्येन्द्रियस्य नियमनेन सर्वेन्द्रियनिग्रहो जातप्राय इव भवेत्तथाऽपि मिलित्वा सामर्थ्यं तेषां न क्वापि संभवति । यतः कयोरपि द्वयोर्ज्ञानेन्द्रिययोर्युगपद्व्यापारः क्षणमात्रमपि न संभवति । युगपद्व्यापारानुत्पत्तिर्मनसो लिङ्गमिति गौतमीयाः पठन्ति । तथा च प्रत्येकमेव सामर्थ्यमङ्गीकार्यम् । आत्मज्ञानाय तेषां नियमनं च सर्वेषामावश्यकमित्यात्मज्ञानं दुर्घटतरं भवति ॥ २ । ६० ॥

तानि सर्वाणि संयम्य युक्त आसीत मत्परः ।<br>
वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता ॥ २ । ६१ ॥

सर्वाणि—नत्वेकमप्यनियमितमवशिष्टं त्यजेत् । संयम्य—नियमनं कृत्वा । युक्तः—समाहितचित्तः शान्त इति यावत् । मत्परः—मदेकप्रवणः । अत्र संयमनमिन्द्रियाणां कथं कार्यमिति विचारे क्रियमाणे 'इन्द्रियाणि किं कुर्वन्ति कथं च कुर्वन्ति' इति मीमांसाऽऽदौ कर्तव्या भवति । यतः—

साधनं तत्प्रकारश्च यावन्न ज्ञायते द्विषः ।<br>
न विधेयः प्रतीकार आत्मनो हितमिच्छता ॥ इति ।

किंचाऽऽत्मज्ञानाय यतमानो बलवानपि पुरुषः क्षुद्रैरिन्द्रियैर्जित इति हि कपटं विनाऽशक्यमेव । अतस्तस्यापि मीमांसाऽऽदौ कर्तव्या भवति । तदुक्तम्—

बलवान्यत्नवांश्चारिः क्षुद्रेण सहसा जितः ।<br>
न कथंचन युज्येत विनाऽन्तर्भेदमीदृशम् ॥ इति ।

तथा चात्रेन्द्रियैरन्तर्भेदः कृतः स्यात् । स चेत्थम्–'इन्द्रियैरयं विचारः कृतः स्यात् । 'यदस्मानवधूय विदुषा यतमानेन पुंसा तच्चिन्तनतत्कथनादिब्रह्माभ्यासरूपः प्रासादो विरचयितुमारब्धस्तत्सर्वथा चित्ताश्रयेणैव भवेत् । अतश्चित्तं यद्यस्मदधीनं भवेत्तर्हि वरम् ' इति । चित्तेऽस्मदधीने हि विदुषां विद्वत्ता, ज्ञानशक्तिः, क्रियाशक्तिः, प्रयत्नश्च सर्वमेव विफलं भवेत् । अयमेवान्तर्भेदः । अन्तर्भेदश्चायमत्यन्तावश्यकः, किंतु स कथं साधनीयः । यतश्चित्तमस्माकमिन्द्रियाणां नियामकम् । वयं तन्नियम्यानि । अतस्तादृशान्तर्भेदसाधनं दुर्घटम् । तथाऽपि नियाम्यनियामकभावमहायैव तदविरोधेन तत् ( चित्तं ) स्वानुकूलतां नेतुं शक्यते । यतः–

राजाश्रिता व्यसनिनः सखायः सेवका अपि ।
संपाद्य तादृशं भूपं साधयन्ति समीहितम् ॥ इति ।

नियाम्यनियामकभावश्चात्रेन्द्रियाणां मनसा सह प्रेष्यप्रेषणरूपो न त्वन्यादृशः । विषयाभिमुखमिन्द्रियाणां प्रेरणं केवलं मनसा क्रियत इति यावत् । तद्यदि विषयान्कक्षीकृत्य मनोभिमुखानीन्द्रियाणि भवेयुस्तर्हि प्रार्थनामन्तरेणापि मन इन्द्रियाणि प्रेरयेदेव । अयमेव चात्रान्तर्भेदमार्गः । यतः–

पुरस्कृत्य प्रियं वस्तु शनैरभ्यागतो यदि ।
द्विषन्नपि भवेत्प्रेयान्किमु साधारणो नरः ॥
रम्भां पुरस्कृत्य यथा विश्वामित्रे तपस्यति ।
शक्रेण साधितः स्वार्थः प्रच्याव्य तपसो मुनिम् ॥

एवमिन्द्रियैर्यन्मनसो हरणं कृतं तस्य किं स्वरूपं कथं च तत्संपादितमिति विचारः कृतः । अधुना तेषामिन्द्रियाणां संयमनं कथं कार्यमिति विचारः कर्तव्यः । इन्द्रियाणां यो मनसा सह संयोगो यश्च विषयेण सह संयोगस्तयोर्द्वयोः संयोगयोरन्यतरस्य वा विनाश आवश्यकः । यश्च कदाचिद्विषयसांनिध्याभावेन विषयेन्द्रियसंयोगो न भवति निद्रायां चेन्द्रियाणां मनसा सह संयोगो न भवति न तदिन्द्रियाणां संयमनम् । तस्याकिंचित्करत्वात् । पुनः पूर्ववत्परिस्थितेरमत्यूहत्वात् । अतो जागृतौ विषयसांनिध्ये च सत्येवेन्द्रियाणां संयमनं कर्तव्यं भवति । तच्च नाऽऽहत्यैकपदे संभवति किंतु क्रमश एव । तच्च कया विधया संपादनीयमिति तदर्थमन्तर्भेद आवश्यकः । अन्यथा जागृतौ विषयसां-

निग्ध्ये च सतीन्द्रियाणां मनसा विषयैश्च सह संयोगस्यावर्जनीयत्वात् । तथा च तादृशसंयोगं संरक्ष्यैव तदविरोधेनेन्द्रियसंयमनं कर्तव्यम् । यथा—

अपरावर्तिनं द्यूताच्छिशुमक्षरसंविदे ।
संक्रीडयत्येव पिता शारैरक्षैश्च साक्षरैः ॥

अत्र द्यूतग्रहणं क्रीडान्तरस्याप्युपलक्षणम् । सांप्रतं स्वल्पाभिः पाषाणगुटिकाभिः सततं क्रीडन्तो बालास्तदेकप्रवणा दृश्यन्ते । तेषां क ख ग इत्याद्यक्षरज्ञाने एक १ द्वि २ त्रि ३ प्रभृति संख्याबोधकचिह्नज्ञाने च सुलभमुपायान्तरमपश्यन्पिता तत्स्थानीयोऽन्यो वा क्रीडासाधनपदार्थेषु शार( सोंगटी )-अक्ष( फासे )गुटिका( गोट्या )प्रभृतिषु कखगेत्याद्यक्षराण्युल्लिख्य क्रीडत एव बालस्य क्रीडनाविरोधेनाक्षरपरिचयं संपादयति । अक्षरपरिचये चाक्षराणि चक्षुरिन्द्रियस्य स्वतन्त्रो विषयो भवतीत्यक्षरावलोकने पुस्तकादावपि प्रवृत्तिर्जायते । एवमत्र बालस्थानीयानामिन्द्रियाणां या विषयासक्तिस्तामप्रत्याख्यायैव तदविरोधेन प्रथमतः केवलं विषयपरिवर्तनं कार्यम् । मद्यमांसादयो ये निषिद्धा विषयास्तान्दूरीकृत्य पयआदिष्वनिषिद्धविषयेष्विन्द्रियासक्तिः प्रथमतः स्थापनीया । ततः प्रयत्नसाध्यान्विषयान् प्रयत्नरूपदोषप्रदर्शनेन दूरीकृत्यानायाससाध्येषु यादृच्छिकेषु विषयेष्विन्द्रियासक्तिः प्रस्थापनीया । ततस्तत्राप्यासक्तिपूर्वकत्वं दूरीकृत्य सामान्यतो विषयेन्द्रियसंबन्धः प्रस्थापयीयः । ततश्चित्तस्य समाधानं दृढतरं भवेत् । स्यादेतत् । अत्र—

‘ तानि सर्वाणि संयम्य युक्त आसीत मत्परः ’

इत्युक्तम् । सर्वेषामिन्द्रियाणां संयमनं कृत्वा समाहितचित्तो मदेकप्रवणश्च सन्नासीतेत्यर्थः । अत्र संयम्येति क्त्वाप्रत्ययेन चित्तसमाधानात् , मदेकासक्तेश्च पूर्वकालत्वेनेन्द्रियसंयमनस्य बोध्यते । सा च दुर्घटा । चित्तसमाधानमन्तरेणेन्द्रियसंयमनस्यासंभवात् । अथ ‘ युक्तः—समाहितचित्तः सन्सर्वाणीन्द्रियाणि संयम्य मत्पर आसीत ’ इत्यन्वयो युक्त इति संयमनहेतुगर्भं विशेषणम् । संयम्येत्यस्यान्वयस्तु मत्पर आसीतेत्यत्रैवेति चेत्तदपि न । इन्द्रियसंयमनात्पूर्वं चित्तसमाधानस्यासंभवादिति चेत्सत्यम् ।

यद्यप्येवं चित्तसमाधानेन्द्रियसंयमनयोरन्योन्याश्रयस्तथाऽपि युगपदेव द्वयमपि क्रमेणांशतः साधयितुं प्रयतितव्यम् । स च क्रम आदौ निषिद्धविषयवर्जनम् ।

पश्चादनिषिद्धेष्वपि विषयेषु तत्प्राप्त्यर्थं प्रयत्नविशेषाभावः । ततः पश्चाद्यादृच्छिकेष्वपि विषयेष्वासक्त्यभावो दोषदृष्ट्या । एवं यथा यथेन्द्रियसंयमनमधिकाधिकं स्यात्तथा तथा चित्तसमाधानमप्यधिकाधिकं स्यादिति ।

अत्र च, निषिद्धविषयवर्जनं शते पञ्चाशतः स्यादिति यदि संभाव्यते तर्हि तादृशपञ्चाशन्मध्येऽनिषिद्धविषयप्राप्त्यर्थं प्रयत्नविशेषाभावो दशानां संभवतु । परं तु विषयेष्वासक्त्यभावोऽतीव दुर्घटः । लक्षमध्येऽपि कस्यचिदेव स्यात् । तस्य चातीव महत्त्वं वेदान्तशास्त्रे कथ्यते—

देहस्त्रीपुत्रगेहादौ नाऽऽसक्तिर्लेशतोऽपि या ।
तदेव तीव्रं वैराग्यं तदेवानुत्तमं सुखम् ॥
वासनायाः क्षयः सैव मनोनाशः स एव च ।
तदेव निर्वाणपदं सैव स्यात्कृतकृत्यता ॥ इति ।

अत्र चाऽऽसक्त्यभावस्य यदेतादृशमनन्यसाधारणं महत्त्वमुच्यते तत्र को हेतुः ? । उच्यते—आसक्तिरेव ह्यस्य मोक्षप्रतिद्वंद्विभूतस्य महतः संसारवृक्षस्य मूलम् । सैव मोक्षप्रतिबन्धिका । आसक्तिसत्त्वे ह्यात्मज्ञानेच्छाऽपि न संभवति । दूरे आत्मज्ञानम् । प्रतिबन्धकाभावस्य च कार्यमात्रं प्रति कारणत्वं प्रसिद्धमेव ।

अथाऽऽसक्तिर्मोक्षं कथं प्रतिबध्नाति तदुच्यते । विषयेन्द्रियसंबन्धो द्विविधो बाह्य आन्तरश्च । प्रत्यक्षतोऽनुभूयमानो बाह्यः । तत्सादृश्येन प्रकल्पित आन्तरः । बाह्यो द्विविधः । अहमिदं पश्याम्यहमिदं शृणोमीत्याद्यभिसंधिपूर्वकस्तदपूर्वकश्च । अभिसंधिरपीच्छापूर्वकस्तदपूर्वकश्चेति द्विविधः । आन्तरस्त्विच्छापूर्वकाभिसंधिपूर्वक एव प्राय इति एकविध एवात्रोच्यते । तत्रानुभवो हि संस्कारोत्पादनद्वारा स्मृतिहेतुर्भवति । यश्चानुभवोऽभिसंधिपूर्वकविषयेन्द्रियसंयोगजः, न स तादृशं संस्कारं जनयेद्यादृशमभिसंधिपूर्वकविषयेन्द्रियसंयोगजोऽनुभवो जनयेत् । तदपेक्षयाऽपि चेच्छापूर्वकाभिसंधिपूर्वकविषयेन्द्रियसंयोगजोऽनुभवो दृढतरं संस्कारं जनयेत् । इच्छापूर्वकाभिसंधिरेवाऽऽसक्तिः । सा चोत्तरोत्तरं संस्कारातिशयोत्पादनद्वारा मोक्षमार्गं सुदूरमपसारयति । केषांचित्तु चार्वाकतुल्यानां तादृशेन विलक्षणेन लोकोत्तरेण संस्कारेण 'मोक्षमार्गो वन्ध्यापुत्रप्राय एव' इत्यपि मतिरुदेति । तथा चाऽऽसक्त्यभावोऽत्यन्तावश्यकः । स एव चात्र 'तानि

सर्वाणि संयम्य युक्त आसीत ' इत्यत्र युक्तपदेन बोध्यते । युक्तः समाहितचित्तः । आसक्तिरहित इति यावत् ।

नन्वेवमासक्त्यभावोऽत्यन्तावश्यक इति सत्यम् । किंतु कथं स साधनीयः । ' लक्षमध्येऽप्येकस्याऽऽसक्त्यभावः संभवेन्न वा ' इति संशय एव । अतस्तत्साधनाय कश्चिदुपायो वक्तव्य इति चेत्तत्राऽऽह–मत्पर इति । मयि परः, आसक्तः, मत्परः । मदासक्त इत्यर्थः । अत्र सप्तमीतत्पुरुषः । अहं पर आसक्तिविषयो यस्येति बहुव्रीहिर्वा । मत्पर इत्यत्र पूर्वपदभूतेनास्मच्छब्देन वक्तुर्भगवतः श्रीकृष्णस्य यज्जगदुत्पत्तिस्थितिलयकारणीभूतं सगुणं स्वरूपं तत्परामृश्यते। तत्र मनस आसक्तिर्भावनया । बाह्येन्द्रियाणां च तत्राऽऽसक्तिस्तत्प्रतिमाद्वारा बोध्या । देवागारे देवनामूर्तयो देवताचित्राणि वा प्रतिमाशब्देन गृह्यन्ते । विषयासक्तिर्मोक्षप्रतिबन्धिकेति तादृशासक्त्यभावः प्रयत्नेन साधनीयो जिज्ञासुना । विषयासक्तिश्च स्वाभाविकी । अतः सा निवर्तयितुमशक्येति तयैव स्वाभावः साधनीयः, तयाऽप्रतिहतयैव स्वाभावः साधनीय इति यावत् । स चेत्थम्–यद्युक्तपरमेश्वरस्वरूपमात्रविषयिणी तदितराविषयिण्यासक्तिरजस्रं जायते चेत्तस्या आसक्त्यभावे पर्यवसानं भवति ।

विषयासक्त्यविरोधेनैव हि पूर्वं केवलं विषयपरावर्तनं प्रतिपादितम् । निषिद्धान्विषयान् परित्यज्यानिषिद्धा ग्राह्याः । तत्राप्ययत्नसाध्या ग्राह्याः । ततश्च सर्वानितरान्परित्यज्य परमेश्वरस्वरूपान्तर्गता विषया ग्राह्याः । इतरे विषया अनित्या इति तेषां विनाशे दुःखमवर्जनीयम् । तेषां संयोगकालेऽपि च विनाशानन्तरं जायमानेन भाविना वियोगेन तत्संभावनद्वारा दुःखमवर्जनीयमेव । परमेश्वरस्वरूपान्तर्गता विषयास्तु न तथा किंतु नित्या इति यथा यथा तेषु नित्येष्वासक्तिराधिका स्यात्तथा तथेतरविषयेषु न्यूना भवेत् । यथा यथा च न्यूना भवेत्तथा तथा जीवात्मन उपाधिन्यूनता । यथा यथा चोपाधिविलयस्तथा तथा जीवात्मनः स्वस्वरूपप्रकाशः । यथा यथा च जीवात्मनः स्वस्वरूपप्रकाशोऽधिकाधिकस्तथा तथा परमात्मस्वरूपान्तर्गता विषया विद्यमाना अपि कल्पिता इति तेष्वासक्तिन्यूनता । ततः सर्वथाऽऽसक्त्यभावः । जीवात्मपरमात्मभेदोऽपि तदानीं न भासत इति क्रमो वेदान्तविदां समये प्रसिद्धः । अस्मिन् क्रमेऽर्थादेवेन्द्रियाणि स्वाधीनीभूतानीव भवन्ति । अतो न तेषामशंतोऽपि प्रातिकूल्यमिति तस्य प्रज्ञास्थैर्यं विज्ञेयमिति भावः ।

अत्र 'येनेन्द्रियाणि वशीकृतानि' इति नोक्तम् । उक्तक्रम इन्द्रियवशीकरणे जिज्ञासोः प्रयत्नान्तराभावात् । किंच वशीकरणापेक्षया वशीभवनस्य प्राधान्यमेव भवति । यथा भृत्यस्य स्वाम्यनुकूलवर्तने तत्प्रतिकूलवर्तनाभावे च 'स्वामिना भृत्यो वशीकृतः' इति 'भृत्यः स्वामिनो वशीभूतः' इति च प्रयुज्यते । तत्रैतावान् विशेषः। आद्ये प्रयोगे 'स्वामिप्रतिकूलाचरणेच्छुरपि भृत्योऽगत्या तथा कर्तुं न शक्नोति' इत्यस्यापि संभवः । अन्त्ये तु प्रयोगे भृत्यस्य स्वामिप्रतिकूलाचरणेच्छैव नास्तीति ।

नन्वेवमत्र वशीभवनमेव कुतो निर्दिष्टम् । वशीकरणेनापि प्रकृतोपयोगसंभवात् । यद्यपि तादृशावस्थायां स्वामिप्रतिकूलाचरणे भृत्यस्येच्छा स्यात्तथाऽपि तादृशाचरणमार्गेषु निरुद्धेषु किं तया केवलया स्यात् । तथा चात्रास्त्वासक्तिः, विषयेषु निरुद्धेषु सा नष्टप्राया भवेत् ।

'अतृणे पतितो वह्निः स्वयमेवोपशाम्यति'

इति न्यायात् । इति चेद्भ्रान्तोऽसि । प्रत्यक्षतो विषयसंबन्धाभावेन बाह्यत आसक्त्यदर्शनेऽप्यन्ततः सा विद्यत एव । सा हि महानर्थकारिणी । वरं केवलो बाह्यविषयसंबन्धो न त्वन्तरासक्तिः कथमपि । अतोऽत्र प्रज्ञास्थैर्यप्रदर्शनमुखेन सर्वथाऽऽसक्त्यभावः प्रदर्शितः ॥ २ । ६१ ॥

अथाऽऽन्तरासक्तिः कथमनर्थकारिणीति 'ध्यायतो०' इति श्लोकद्वयेन प्रदर्श्यते—

ध्यायतो विषयान्पुंसः सङ्गस्तेषूपजायते ।
सङ्गात्संजायते कामः कामात्क्रोधोऽभिजायते ॥ २ । ६२ ॥
क्रोधाद्भवति संमोहः संमोहात्स्मृतिविभ्रमः ।
स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात्प्रणश्यति ॥ २ । ६३ ॥

विषया भोग्याः पदार्थाः, रूपादयो गुणाश्च । तान्ध्यायत इत्यत्रोच्यमानं तत्कर्मकं ध्यानं च न पदार्थत्वेन नापि द्रव्यत्वेन गुणत्वेन वा किंतु विषयत्वेन। विषयत्वं चेन्द्रियग्राह्यत्वमिन्द्रियजन्यज्ञानविषयत्वम् । इन्द्रियाणि च प्रत्यासत्त्या ध्यानकर्तुः स्वकीयेन्द्रियाण्येव । यथा स्वभोग्यरूपरसादिध्यानात्तत्र संगो भवति न तथा मार्जारादिभोग्यमूषकादिध्यानात्तत्र मूषकादिषु मनुष्यस्य संगो भवति । ध्यानं च चिन्तापरपर्यायं स्मृत्यनुकूलव्यापाररूपम् । अत्र कश्चित्—यथा 'स्वकीयेन्द्रिय'शब्दे कर्मधारयः । स्वकीयानि च तानीन्द्रियाणीति । तथा षष्ठीतत्पु-

इष्टोऽपि । स्वकीयस्य (स्त्रीपुत्रपश्वादेः) इन्द्रियाणीति । अत एव मनुष्यस्यापि पशुमतस्तृणाङ्कुरध्यानात्तत्र संगो भवति स न विरुध्यत इति । अत्रोच्यते—नात्र षष्ठीतत्पुरुषः । किंतु कर्मधारय एव । यद्यपि तृणाङ्कुरस्य मनुष्येन्द्रियग्राह्यत्वं साक्षान्नास्ति तथाऽपि परम्परयावर्तत एव । तत्र मनुष्यस्य साक्षाद्रसनेन्द्रियग्राह्यं पयः । परम्परया तु स्वग्राह्यपयोधिकरणीभूतगवादिपशुभक्ष्यत्वसंबन्धेन तृणाङ्कुरस्य मनुष्यस्य रसनेन्द्रियग्राह्यत्वं भवति । अत एव पाकाद्यर्थं काष्ठादिध्यानजन्यस्य काष्ठादिसङ्गस्य संग्रहः । तत्रापि स्वग्राह्यान्नसाधनीभूताग्न्याश्रयत्वरूपपरम्परासंबन्धेन काष्ठादीनां मनुष्यस्य रसनेन्द्रियग्राह्यत्वात् । यद्यपि काष्ठादीनां साक्षादेव मनुष्यस्य चक्षुरिन्द्रियग्राह्यत्वं संभवति तथाऽपि न तेन रूपेण तेषां ध्यानं तेषु सङ्गो वेति बोध्यम् ।

सङ्गस्तेषूपजायते—विषयध्यानाद्विषयेषु सङ्गो भवतीत्यर्थः । नन्वत्र सङ्गः कीदृशः । सङ्गो हि संबन्ध उच्यते । विषयसंबन्धश्च याद‍ृच्छिकः प्रयत्नपूर्वकश्च । नाऽऽद्यः । ध्यायत इति हेतुगर्भविशेषणेन ध्यानमूलकस्य सङ्गस्यात्र निर्दिष्टत्वात् । नापि द्वितीयः । प्रयत्नो हीच्छाजन्यः । इच्छा काम इत्यपरपर्यायौ । अर्थान्तरं न भवति । तथा च कामजन्यप्रयत्नपूर्वकस्य सङ्गस्यात्र ग्रहणमिति वक्तव्यम् । तत्तु नात्र विवक्षितम् । ‘ सङ्गात्संजायते कामः ’ इत्येवमुत्तरार्धे कामसङ्गयोः कार्यकारणभावोक्त्या कामात्प्राक्कालिकस्य सङ्गस्यात्र विवक्षितत्वात् । तथा चात्र ध्यानजन्यः कामजनकश्च संयोगो वक्तव्यः । स च कीदृश इति । उच्यते—यद्यपि बाह्यो विषयसंबन्ध एतादृशो न भवति तथाऽप्यान्तरो विषयसंबन्ध एतादृशो भवत्येव । आन्तरो विषयसंबन्धश्च मनोवृत्तिविशेषरूपः । स च ध्यानजन्यो भवति । ध्यानं हि चिन्तापरपर्यायं स्मृत्यनुकूलव्यापाररूपम् । व्यापारश्चायं पूर्वानुभूतविषयस्य क आकारः, के वा तस्य गुणाः को वा तदानीं देशः, कश्च कालः, कथं च तस्यानुभवो जातः, इत्यादिविचारः । तादृशव्यापाराच्च संस्कारोद्बोधद्वारा स्मृतिविशेष उपजायते । स्मृतिविशेषश्चायमत्रेच्छा( काम )जनकत्वेन वर्णनीयः । तथा च यदि सुखसाधनत्वेन स्मृतिः स्यात्तर्हि तत इच्छोद्भवः स्यात् । एवं चात्र पूर्वानुभूतविषयस्य सुखसाधनत्वेन या स्मृतिस्तद्रूपा मनोवृत्तिरत्र सङ्गशब्देनोच्यते । अयं चाऽऽन्तरो विषयेन्द्रियसङ्गः स्मृतिरूपः । ईदृशी च सुखसाधनत्वविषयिका स्मृतिर्विषयस्य यदिन्द्रियग्राह्यत्वेन ( विषयत्वेन ) चिन्तनं तज्जन्या भवति ।

इन्द्रियग्राह्यत्वज्ञानं विना सुखसाधनत्वविषयकस्मरणायोगात् । कामश्च तादृश-स्मरणजन्यो भवति । सुखसाधनत्वज्ञानं विना तद्विषयकस्य कामस्यानुद्भवात् । एवं चात्र 'तेषु सङ्गः' इत्यनेन विषयासक्तिरुच्यते । आसक्तिश्च

'साऽऽसक्तिर्या पदार्थेषु भोगसाधनतामतिः'

इत्येवं लक्षिताऽत्र सङ्गपदेन गृह्यत इति सिद्धम् ।

ननु भोगसाधनताशब्देन सुखसाधनताया इव दुःखसाधनताया अप्यत्र संग्रहः प्रतीयत इति चेत्सत्यम् । तस्य कामजनकत्वाभावादत्राग्रहणम् ।

ननु सङ्गशब्देनात्र सुखसाधनपदार्थस्मरणवद्दुःखसाधनपदार्थस्य ग्रहणं दुर्वारम् ।

'ध्यायतो विषयान्पुंसः सङ्गस्तेषूपजायते'

इति हि पूर्वमुक्तम् । तत्र सुखसाधनपदार्थस्मरणस्येव दुःखसाधनपदार्थस्मरण-स्यापि ध्यानजन्यत्वाविशेषात् । विषयाणां विषयत्वेन ( इन्द्रियग्राह्यत्वेन ) यच्चिन्तनं तदुभयत्र सममेव । तथा च तदनुरोधेन 'सङ्गात्संजायते कामः' इत्युत्तरार्धेऽपि सङ्गशब्देन तस्य ग्रहणं दुर्वारमिति चेदस्तु । न काचित्क्षतिः ।

ननु तर्हि तत्र कामसङ्गयोः कार्यकारणभाव उक्तस्तस्य व्यभिचारः स्यात् । नहि दुःखसाधनीभूतपदार्थस्मरणेन तथाविधपदार्थप्राप्तिकामना कस्यचित्क-चिदपि दृश्यत इति चेद्भ्रान्तोऽसि । कार्यकारणभावस्य हि तत्र व्यभिचार आशङ्कनीयो यत्र कारणाभावेऽपि कार्यप्रतीतिः स्यात् । न तु कारणसत्त्वेऽपि कार्याभावस्तत्र । नहि सर्वे दण्डा घटोत्पादने व्यापृता नियमेन भवन्ति । न तावता घटदण्डयोः कार्यकारणभावो व्यभिचरितो भवति । तदुक्तम्—

नियमः कार्यसत्ताया नैव कारणसत्तया ।
किंतु कारणसत्ताया नियमः कार्यसत्तया ॥ इति ।

नन्वेवमपि प्रकरणविरोधः । स्थितप्रज्ञनिरूपणं हि पूर्वप्रक्रान्तम् । तत्र च—

'वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता' ( गी० २ । ६१ )

इत्युक्तम् । तमेव पूर्वप्रक्रान्तमर्थं 'यस्येन्द्रियाणि अधीनानि न सन्ति तस्य प्रज्ञा कथमपि प्रतिष्ठिता न भवति' इत्येवं व्यतिरेकमुखेण द्रढयितुं 'ध्यायतो विषयान्पुंसः' इत्यारभ्य 'बुद्धिनाशात्प्रणश्यति' ( गी. २ । ६१—६२ ) इति श्लोकद्वयेन १ विषयध्यान २ सङ्ग ३ काम ४ क्रोध ५ संमोह

६ स्मृतिभ्रंश ७ बुद्धिनाश ८ प्रणाशानामष्टानां क्रमिकाणामर्थानामान्तराणां कार्यकारणभावमूलिका परम्परा प्रतिपाद्यते। सा चावश्यंभाविनीत्येवमत्र भगवता प्रतिपिपादयिषिता। अन्यथाऽस्याः कार्यपरम्परायाः क्वचित्कदाचिद्विच्छेदश्चेत्तत्र पर्यन्ते प्रणाशाभाव इति तत्रेन्द्रियनिग्रहाभावेऽपि प्रज्ञास्थैर्यस्य संभव इति पूर्वप्रक्रान्तस्यार्थस्य दृढीकरणं न स्यात्। किंच कामसङ्गयोः कार्यकारणभावस्य व्यभिचारोऽप्यत्र स्थिर एव। तथा हि–

कार्यकारणभावो हि भावयोर्यत्र भासते।
अन्वयव्यतिरेकाभ्यां स निश्चेयो मनीषिणा॥

यथा दण्डसत्त्वे घटसत्त्वमन्वयः। दण्डाभावे घटाभाव इति व्यतिरेकः। तथा च व्यतिरेकवदन्वयोऽपि नियत एवेति वक्तव्यम्। यश्च दण्डो घटोत्पत्तौ न व्यापृतो भवति तेन दण्डेनान्वयव्यभिचारो नाऽऽशङ्कनीयः। यतः 'दण्डसत्त्वे घटसत्त्वम्' इत्यत्र दण्डसत्त्व इत्यस्य 'इतराखिलकारणसहितदण्डसत्त्वे' इत्यर्थः। तथा च यस्माद्दण्डाद्घटो नोत्पन्नः स दण्ड इतरकारणसहितो न भवत्येव। तथा च तादृशस्थले केवलदण्डसत्त्वेऽपीतरकारणसहितस्य तस्याभावान्नान्वयव्यभिचारः। प्रकृते तु दुःखसाधनत्वरूपात्सङ्गात्सङ्गेतरानिखिलकारणसहितादपि न काम उत्पद्यते। सुखसाधनत्वस्मरणं तु सङ्गविशेष एवेति न तत्कारणं सङ्गेतरद् भवति। तथा च दुःखसाधनविषयस्मरणेन तादृशविषयप्राप्तीच्छाया अनुत्पादेन 'इतरकारणसहितसङ्गसत्त्वे कामसत्त्वम्' इत्यन्वयस्य व्यभिचारः स्थिर एवेति चेत्–

अत्रोच्यते–विषयस्येन्द्रियग्राह्यत्वेन चिन्तनात्तदीयसुखसाधनत्वस्येव दुःखसाधनत्वस्यापि स्मरणं संभवत्येव। तादृशस्मरणरूपात्सङ्गाच्च तादृशविषयप्राप्तीच्छा न भवेत्तथाऽपि तादृशविषयनिवृत्तीच्छा (प्राप्त्यभावेच्छा) स्यादेव। तथा च सङ्गात्कामोऽवश्यंभावीति न कार्यकारणभावव्यभिचारः। नापि पूर्वप्रक्रान्तस्यार्थस्यासमर्थनम्। निवृत्तीच्छातोऽपि प्राप्तीच्छात इव क्रोधादिद्वाराऽन्ते प्रणाशसंभवात्। यत्र त्वेकस्यैव विषयस्य सुखसाधनत्वं दुःखसाधनत्वं च स्मर्यते तत्र यदि चाक्षुषरासनघ्राणाद्यन्यतमेनैकेन प्रकारेण सुखसाधनत्वं प्रकारान्तरेण च दुःखसाधनत्वं तत्र प्राप्तीच्छा निवृत्तीच्छा चेति द्विविधोऽपि कामः स्यात्। प्रकारभेदेन विरोधाभावात्। यत्र त्वेकेनैव प्रकारेणोभयसाधनत्वं तत्र विरोधाद्दुर्बलस्य बलीयसा बाध इत्येकविध एव कामः। यथा कटुकौषधग्रहणे। तत्र

च रासनप्रत्यक्षद्वारैव तात्कालिकं दुःखं रासनप्रत्यक्षद्वारैव च परिणामे सुखम्। तत्र तात्कालिकं दुःखं क्षणिकं स्वल्पम् । पारिणामिकं सुखं तु न क्षणिकमिति बलवत् । अतस्तत्र निवृत्तीच्छा न भवति किंत्वौषधप्राप्तीच्छैव भवति । तत्र सुखदुःखयोर्मध्य इदं प्रबलमिदं दुर्बलमिति तु स्वस्वशरीरप्रकृत्यनुसारेण दुःखस्य सह्यत्वमसह्यत्वं च विचार्य तदनुसारेण निर्णेयम् ।

सङ्गात्संजायते कामः। विषयस्य विषयत्वेनेन्द्रियग्राह्यत्वेन यत्स्मरणं तद्रूपान्तरात्सङ्गात्काम इच्छाविशेषः 'इदं मे भूयादिदं मे मा भूत्' इत्येवं प्राप्तिनिवृत्त्यन्तरविषयक उभयविषयको वा जायत उत्पद्यत इत्यर्थः ।

यद्यपि विषयस्याऽऽम्रफलादेः प्रत्यक्षदर्शनेनापि तद्विषयकः काम उत्पद्यते तथाऽपि न तेन प्रकृतार्थस्य हानिः । निरुक्तात्सङ्गात्काम उत्पद्यत एवेति हि प्रकृतवाक्यतात्पर्यम् । नहि तेन कामस्य कारणान्तरं निषिध्यते । तथा च न दोषः ।

ननु यद्रसनेन्द्रियग्राह्यत्वेन भुक्तस्यान्नस्य भोजनाव्यवहितोत्तरकाले स्मरणं तद्रूपात्सङ्गात्कामस्योत्पत्तिः सद्यो न दृश्यत इति चेन्नैतावता प्रकृतप्रतिपाद्यार्थस्य 'सङ्गात्संजायते कामः' इत्यस्य व्यभिचार आशङ्कनीयः । तदानीमपि कामस्योत्पत्तिरस्त्येव । स च यद्यपि 'इदानीमन्नं मे प्राप्नोतु' इत्याकारको न भवति तथाऽपि 'श्वो म ईदृशमन्नं प्राप्नोतु' इत्याकारकः कामस्तदानीमप्यस्त्येव । अत एव च भोजनाव्यवहितोत्तरक्षण एव दिनान्तरीयान्नप्राप्त्यर्थं प्रयतमाना दृश्यन्ते । नहीच्छां विना प्रयत्नः क्वापि पदं लभते । यत्नस्येच्छामात्रसाध्यत्वात् ।

अत्र स्मृतस्य वस्तुनः सत्त्वे तत्संबन्धेच्छा भवति । यथा ग्रीष्मे मध्याह्ने मार्गे पूर्वानुभूताम्रवृक्षादिच्छायां स्मृतवतस्तादृशच्छायासंबन्धेच्छा जायते । स्मृतस्य वस्तुनो विनष्टत्वे तु तादृशवस्तुसदृशवस्तुसंबन्धेच्छा जायते । यथा पूर्वभक्षिताम्रफलरसस्मरणे तत्सदृशाम्रफलरसेच्छा जायते । अत्रेदं बोध्यम्—स्मृतिबीजमनुभवजन्यः संस्कारः ।

'सदृशादृष्टचिन्ताद्याः स्मृतिबीजस्य बोधकाः' ॥

इति न्यायेन यत्रैकवस्तुदर्शनात्तादृशसंस्कारोद्बोधात्तत्सदृशवस्त्वन्तरस्मरणम् । यथा वैकसंबन्धिज्ञानमपरसंबन्धिस्मारकमिति न्यायेन देवदत्तादिदर्शनात्तदीयगृहस्त्रीपुत्रादिस्मरणम् । अदृष्टाद्वाऽहेतुकमिव कस्यचिदर्थस्य स्मरणं तत्र

'तस्मात्तादृशवस्तुप्राप्तीच्छोत्पद्यत एव' इति नियमो नास्ति। अतोऽत्र ध्यानजन्यं (चिन्ताजन्यं) स्मरणं निर्दिष्टम्। यद्यपि ध्यानजन्यस्मरणादपि तादृशवस्तुप्राप्तीच्छोत्पद्यत एवेति नियमो न संभवति। तत्र प्रयोजकहेतोरदर्शनात्। तथाऽपि 'ध्यायतो विषयान्पुंसः' इत्यत्र विषयस्य विषयत्वेन (इन्द्रियग्राह्यत्वेन) यद्ध्यानं तज्जन्यात्तादृशविषयस्मरणात्तद्विषयिणीच्छोत्पद्यत एव। विषयस्मरणस्येन्द्रियग्राह्यविषयकज्ञानत्वेनैवेच्छाजनकत्वात्। सा चेच्छा क्वचिदुद्भूता क्वचिदनुद्भूतेत्यन्यत्। तदानीमनुद्भूताऽपि च योग्ये काल उद्भूता भवेदेवेति।

यदि च कदाचिद्विषयस्येन्द्रियग्राह्यत्वेन यत्स्मरणं तद्रूपात्सङ्गात्प्रतिबन्धकवशेनेच्छाया अनुत्पत्तिः स्यात्। प्रतिबन्धकं चाऽऽकस्मिकविद्युत्पाताद्यद्भुतार्थप्रादुर्भावस्तदाऽपि न प्रकृतार्थस्य व्यभिचार आशङ्कनीयः। निरुक्तात्स्मरणरूपात्सङ्गात्पूर्वसंस्कारस्य दृढीकरणेन तस्मात्संस्कारात्कालान्तरे स्मरणद्वारेच्छाया अनिवार्यत्वात्। यदि वा कदाचित्पूर्वादृष्टवशेन तादृशस्मरणरूपसङ्गकाल आकस्मिकं मरणं स्यात्तर्ह्यपि न व्यभिचारः। तथा हि—किं सङ्गात्संजायते काम इत्यत्र प्रतिपादितस्य कामसङ्गयोः कार्यकारणभावस्य व्यभिचार आशङ्क्यतेऽथवैतत्प्रकरणसूचितस्य तात्पर्यार्थस्य। नाऽऽद्यः। प्रतिबन्धकस्य देहवियोगस्य सत्त्वेन प्रतिबन्धकाभावरूपस्य साधारणकारणस्याभावेनान्वयव्यभिचाराभावात्। इतरकारणकलापसहितसङ्गसत्त्वे कामसत्त्वमिति ह्यन्वयः। नान्त्यः। ध्यायतो विषयानित्यारभ्य बुद्धिनाशात्प्रणश्यतीत्येतत्पर्यन्तं श्लोकद्वयेन विषयध्यानं सङ्गादिपरम्परया प्रणाशकरमिति प्रतिपादितम्। तथा च तस्य जन्म विफलं स्यादिति तात्पर्यम्। विषयध्यानकाले सङ्गकाले क्रोधादिकाले वाऽऽकस्मिकमरणे तु कार्यानुत्पत्तावपि मरणेन जन्म विफलं जातमेवेति नैव तात्पर्यार्थस्य व्यभिचार इति बोध्यम्।

कामात्क्रोधोऽभिजायते—काम इच्छा। नन्विच्छातः क्रोधोत्पत्तिः कथं संगच्छते। इच्छायाः कार्यं हि प्रयत्नः प्रसिद्धः। तथा क्रोधस्य कारणं परकृतापकारादिकं प्रसिद्धमिति चेदुच्यते। इच्छातः साक्षात्क्रोधोत्पत्त्यसंभवेऽपि प्रयत्नद्वारा क्रोधोत्पत्तिसंभवात्। ननु प्रयत्ने क्रियमाणे यदि परस्य कस्यचिदपकारः स्यात्तर्हि तेनापकारेण जायमानः क्रोधः परस्मिन्स्यान्नतु प्रयत्नकर्तरीति चेत्सत्यम्। परो यदि प्रत्यपकारं कर्तुं प्रवृत्तश्चेत्तेन प्रत्यपकारेणोत्पद्य-

मानः क्रोधः प्रयत्नाश्रयपुरुष एवेति । यदि च प्रयत्ने क्रियमाणे परेण केनचिदपकारो विघ्नादिरूपः कृतो भवेत्तर्हि प्रयत्नाश्रये पुरुषे क्रोधोत्पत्तिर्भवत्येवेति ।

नन्वेवमप्युक्तयुक्त्या संभवः प्रदर्शितो नतु सर्वत्रैवं स्यादेवेति नियमः । कदाचित्तथा संभवेऽपि बहुधा तथा संभवाभावात् । किंच—

अर्थप्राप्तितदप्राप्त्योः कामस्य द्विविधा गतिः ।
वृद्धिः स्यादथवा क्रोधो न तृतीया कदाचन ॥

इत्युक्तरीत्याऽर्थप्राप्तौ सत्यां लेशतोऽपि क्रोधोत्पत्तिसंभवो नास्ति । अत्र च पूर्वप्रक्रान्तार्थानुगुण्येन कामात्क्रोधोत्पत्तिरव्यभिचरितवेति नियम आवश्यकः । अन्यथा विषयध्यानसङ्गादिकायाः प्रणाशान्तायाः परम्परायाः कदाचिन्मध्ये विच्छेदश्चेत् 'न विषयध्यानं नियमेनानर्थकरम्' इति मतिः स्यात्तथा चेन्द्रियसंयमनावश्यकता न सिध्येत् । इति चेत्—

अत्रोच्यते—'अर्थप्राप्तितदप्राप्त्योः०' इति वृद्धोक्तौ या कामस्य द्विविधा गतिः प्रदर्शिता सा सद्यः परिदृश्यमानावस्थाभेदानुसारेण नतु पार्यन्तिकदृष्ट्या । पार्यन्तिकी कामगतिस्त्वेकविधैव क्रोधरूपा । तथा हि—यत्र काममूलकप्रयत्नेनार्थप्राप्तिर्जाता तत्रार्थप्राप्त्या विषयोपभोगे सति तेन यदि स कामो निवर्तेत तर्हि तत्र 'कामात्क्रोधोऽभिजायते' इत्यस्य व्यभिचारः स्यात् । परं तु स कामस्तदा नैव निवृत्तो भवति । प्रत्युताभिवर्धते । तदुक्तं महाभारते—

न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥ इति ।

त्वदु(पूर्वो)दाहृतवृद्धोक्तावपि न कामस्य निवृत्तिरूपा गतिर्निर्दिष्टा । प्रत्युत 'न तृतीया कदाचन' इति चतुर्थचरणेन सा निषिद्धा । तथा चार्थप्राप्तौ सत्यां विषयोपभोगेन कामस्य वृद्धिः । तया च पुनर्यत्नजन्यार्थप्राप्तिपूर्वको विषयोपभोगः । एवं कामवृद्धिविषयोपभोगयोर्बीजाङ्कुरवच्चक्रे प्रवृत्ते 'यत्नेनार्थप्राप्तिर्नियता' इति नियमाभावात्कियताऽपि कालेन यत्नेऽप्यर्थाप्राप्तिरवर्जनीया । तदानीं च क्रोधोद्भव आवश्यक इति कामात्पार्यन्तिकः सर्वत्र क्रोधो भवत्येवेति ।

नन्वर्थप्राप्त्यर्थं प्रयतमानस्य यदि परकृतेन विघ्नेनार्थाप्राप्तिः स्यात्तर्हि तत्र क्रोधोद्भवो भवतु नाम। नत्वन्यत्र। यथा रजतकामस्य रजतभ्रमेण प्रवृत्तौ तथा जलकामस्य मृगतृष्णाम्भसि प्रवृत्तौ प्रयत्नस्य नैष्फल्येऽपि कस्मै क्रुध्येत्। तथा सत्येऽपि जलादौ वस्तुनि तदर्थं प्रवृत्तौ तादृशे वस्तुनि कृमिदुष्टत्वादिदोषज्ञाने प्रयत्नो विफलस्तथाऽपि कस्मै क्रुध्येत्सः। एवमन्यत्रापीति चेत्सत्यम्। तत्र क्रोधाभावेऽपि न प्रयत्नो विफल इत्येतावता कामः शाम्यति प्रत्युतान्तः प्रज्वलत्येव (धुमसतो)। तथा च पुनः पुनः प्रवृत्तिरित्येवं कालान्तरेण तस्य कामस्य क्रोधे पर्यवसानमवश्यंभाव्येव भवति। तथा च वृद्धोक्तिः—

नैसर्गिकी कालवशाद्भाविनी यस्य या गतिः।
सैव साधनसंपत्तौ केवलं त्वरया भवेत्॥ इति।

अत्र गतिः समीचीनासमीचीनसाधारणी। यथा कदल्याम्रफलान्युष्णतया शीघ्रं पक्वानि भवन्ति। पयसो दधिभावप्राप्तावातञ्चनेन शैघ्र्यं दृश्यते। पक्वमन्नं पर्युषितमाम्लायते। ग्रीष्मर्तौ तृष्णतातिशयेन तद्दिन एव सायमाम्लायते। तथा च सद्यः क्रोधसाधनभावेन क्रोधानुद्भवेऽपि कालान्तरेण कामस्य क्रोधे पर्यवसानमवश्यंभाव्येवेति सिद्धम्।

इयं च या विषयध्यानादिप्रणाशान्ता परम्पराऽत्रोक्ता सा—

'तानि सर्वाणि संयम्य युक्त आसीत मत्परः।
वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता॥'

इति प्रतिपादितस्येन्द्रियसंयमनस्यात्यन्तावश्यकत्वप्रदर्शनाय 'इन्द्रियसंयमनाभावे महाननर्थः' इति प्रदर्शयितुं प्रासङ्गिकसंगत्या निर्दिष्टा। वेदान्तशास्त्रे हीन्द्रियसंयमनं मुख्यतः प्रतिपाद्यविषयेषु गण्यत इति प्रसिद्धमेव। ततश्च विषयध्यानादिप्रणाशान्तायाः परम्पराया अत्र परार्थं प्रासङ्गिको निर्देश इत्यतः 'कामक्रोधयोर्मध्ये यत्न—विघ्न—कोपानामनिर्देशान्न्यूनता' इति नाऽऽशङ्कनीयम्। तेन—

'सङ्गात्संजायते कामः कामाद्यत्नोऽभिजायते।
यत्ने विघ्नस्ततः कोपः कोपात्क्रोधोऽभिजायते॥'

इति नोक्तम्। इयं हि विषयध्यानादिप्रणाशान्ता परम्परा परम्पराघटकान् यान् पदार्थान् समालोच्य निश्चयेन बुद्ध्यारूढा स्यात्ते पदार्था अत्र निर्दिष्टाः,

न तु सर्वेऽत्र निर्देष्टव्या भवन्ति । तस्याः प्रामुख्येण प्रतिपिपादयिषितत्वाभावात् । यद्यपि क्रोधः कोपादनतिरिक्तस्तथाऽप्यवस्थाभेदात्तयोर्भेदः । 'नह्यकुपितः क्रुध्यति' इति 'क्रुधद्रुहेर्ष्या०' इतिसूत्रस्थं पातञ्जलमहाभाष्यमत्र प्रमाणम् । क्षोभविशेषोन्मुखश्चित्तवृत्तिविशेषः कामः । उद्भूतक्षोभविशेषश्चित्तवृत्तिविशेषः कोपः । प्ररूढक्षोभविशेषश्चित्तवृत्तिविशेषः क्रोधः । यथा मृदेव घटः । तत्र मृत्स्थानापन्नः कामः । आमघटस्थानापन्नः कोपः । भर्जितदृढघटस्थानापन्नः क्रोधः । इह विषयध्यानादिप्रणाशान्तपरम्परायां विषयध्यानजनितसङ्गजन्य-कामस्य क्रोधरूपेण परिणामोऽवश्यंभाव्येव न तु कदाचिदपि मध्ये कोपावस्थान्तो विराम इति ध्वनयितुं कोपस्यानुक्तिः ॥ ६२ ॥

'क्रोधाद्भवति संमोहः संमोहात्स्मृतिविभ्रमः' ।

क्रोधात्संमोहो जायते । संमोहो वस्तुतत्त्वानवधारणं मोहः । सम्यङ्मोहः संमोहः । वस्तुतत्त्वानवधारणप्रकर्ष इति यावत् ।

ननु क्रोधः कया विधया संमोहस्य कारणं भवति । किंचात्र संमोहः स्मृति-विभ्रमस्य कारणत्वेनोक्तः । तथा च संमोहानन्तरं स्मृतिविभ्रमो नतु ततः प्राक् संमोहोत्पत्तिकाले । तथा च तदानीं स्मृतिविभ्रमाभावेनार्थादेव यथार्थस्मृतौ सत्यां संमोहोत्पत्तिरेव न संभवति । अतः केनाऽऽशयेनैतदुक्तं तद्वक्तव्यम् ।

उच्यते—कामेन विषयाभिलाषरूपेणाऽऽविष्टे मनसि सति शारदेन श्वेतमे-घेनाऽऽवृतः स्फुटतरमप्रकाशमानोऽपि यथा चन्द्रमाः स्पष्टं प्रकाशते तथा स्वभा-वतः स्वच्छं मनः स्फुटं प्रकाशते । कोपोद्गमे तु क्षुब्धं मनो विरलकृष्णमेघा-वृतचन्द्रवत्सामान्यतः प्रकाशते । क्रोधे तु संक्षुब्धं सान्द्रकृष्णमेघावृतचन्द्रवत्क्षो-भेनाऽऽच्छादितं सन्न प्रकाशते । यथा च तदानीमदृश्यमानेऽपि चन्द्रे विशेषतः प्रकाशाभावेऽपि नामावास्यायामिव तमिस्राप्रसारः किंतु सामान्यतः प्रकाशोऽ-स्त्येव। तथा सामान्यतो मनःकार्यं तदानीं जायते नतु विशेषतः। यथा पूर्वानुभूते देवदत्ते पुनः कालान्तरेण कदाचिद्दृष्टे तदानीं द्रष्टा कारणान्तरेण क्रुद्धश्चेत्तस्य 'अयं पूर्वं मया दृष्टः' इति स्मृतिर्भवति सामान्यतः। 'न त्वयं देवदत्त एव, अमुक-स्थलेऽमुककाले दृष्टः । तदानीमयममुककार्यव्यापृत आसीत्' इत्यादिर्विशे-षस्मृतिर्भवति । तदानीं पूर्वानुभवजन्या विशेषाः संस्कारा विद्यमाना अपि क्षो-भेणाऽऽच्छादितत्वान्न कार्यकारिणो भवन्ति । सामान्यसंस्कारात्तु 'अयं पूर्वं

दृष्टः ' इति सामान्यस्मृतिर्भवति । अतो विशेषस्मरणाभावात् ' किमयं देवदत्त एवोत यज्ञदत्तः, रामनवरात्रे दृष्टोऽथवा शारदे नवरात्रे दृष्टः प्रयागे दृष्टोऽथवा काश्याम् ' इत्यादयो यथायथमनेके संदेहाः प्रादुर्भवन्ति । अयं च संशयगणः संमोह इत्युच्यते वस्तुतत्त्वानवधारणप्रकर्षरूपः । इत्थं क्रोधात्संमोहः कथं जायते तत्प्रदर्शितम् । अत्र च कासांचित्स्मृतिव्यक्तीनामभावो वर्तते न तु स्मृतिविभ्रमः। स्मृतिविभ्रमस्तु–अयथार्था स्मृतिरप्रमाजन्या । यदा च पूर्वोक्ते संमोहे जायमाने वस्तुतो देवदत्तोऽपि मुग्धेन यज्ञदत्तत्वेन ज्ञातश्चेत्तस्य पुनः कालान्तरेण जायमाना स्मृतिः ' स यज्ञदत्तः ' इत्येव स्यात् । अयं स्मृतिविभ्रमः । अयं ह्यनर्थकारी । अज्ञानमपि विपरीतज्ञानाद्वरमिति हि न्यायः । रज्जोरज्ञानमात्रात्तु लेशतोऽपि न बिभेति । तत्रैव सर्पज्ञानात्तु भीतिरुत्पद्यत एव ।

वरं केवलमज्ञानं रज्ज्वादेर्न तु सर्पधीः ।
अकर्मणे भवेदाद्या द्वितीया तु विकर्मणे ॥

अत्राकर्म तूष्णींभावः । विकर्म तु भीत्या पलायनं सर्पघातार्थं दण्डाद्यानयनादिसंभ्रमश्च । तस्य तत्र पर्यन्तेऽनुपयोगाद्विकर्मत्वम् ।

ननु ' क्रोधाद्भवति संमोहः ' इति नियमो नोपपद्यते । तथा हि—

क्षमैव क्रोधविजये समर्थेति विवेकिनः ।
क्रोधः कार्यविभङ्गाय तस्मात्तं क्षमया जयेत् ॥

क्रोधे हि परापकारकरणम् । क्षमायां तद्विरुद्धमपकर्तुरपि प्रत्यपकाराकरणम् । एवं तयोः कार्यतो महति विरोधे ' पिण्डे पिण्डे मतिर्भिन्ना ' इति न्यायेन कश्चित्क्रोधाक्रान्तः क्षमामनालक्ष्य परापकारं करोति । कश्चित्तु क्षमया गृहीतः क्रोधमवगूह्य परापकारं न करोति । 'क्षमैव क्रोधविजये समर्था०' इत्युक्तेस्तात्पर्यं तु ' सर्वत्र क्षमा क्रोधं जयत्येव ' इति न मन्तव्यम् । किंतु ' क्रोधस्य जयश्चेत्क्षमयैव नान्येन केनापि'इति । तथा च क्रोधः क्षमया जेतुं शक्य इति क्षमावलम्बनेन क्रोधस्य विनाशे तत्रैव परम्परा विच्छिन्ना न त्वग्रे संमोहाद्युत्पत्तिरिति विषयध्यानादिपरम्परायां प्रवृत्तायामपि न पर्यवसाने प्रणाशनियमः । तथा चेन्द्रियसंयमनाभावेऽपि न क्षतिरित्यतोऽत्र प्रतिपिपादयिषितमिन्द्रियसंयमनावश्यकत्वं न सिध्यति । इति चेत्—

अत्रोच्यते—क्रोधो द्विविधः। क्रमिक आगन्तुकश्च । 'ध्यायतो विषयान्पुंसः'

इत्युक्तया विषयध्यानादिपरम्परया जायमानः क्रमिकः । तदन्य आगन्तुकः । तत्रोक्तकारणपरम्परया जायमानोऽत एव प्ररूढमूलः क्रमिकः क्रोधो न क्षमया जेतुं शक्यः । तादृशस्थले क्षमाया उद्भवस्यैवाभावात् । किंत्वागन्तुकः । 'किंचापकर्तुरपि प्रत्यपकाराकरणम्' इत्येवं यत्क्षमायाः स्वरूपं प्रदर्शितं तन्न सम्यक् । किंत्वपकर्तुरपि प्रत्यपकाराचिन्तनम् । नह्यसामर्थ्यात्प्रत्यपकाराकरणे 'अयं क्षमावान्' इत्येवं तं प्रत्येति कश्चित् । अत एव 'परापकारजनकप्रवृत्तिविरोधी कारणान्तरनिरपेक्षो मनोवृत्तिविशेषः क्षमा' इति क्षमालक्षणमुक्तम् । 'क्षमैव' इत्युक्तेस्तात्पर्यं 'क्षमयैव क्रोधस्य जयः' 'क्षमया क्रोधस्य जयो भवत्येव' इति द्विविधमपि । अत एव 'तस्मात्तं क्षमया जयेत्' इत्येवं चतुर्थचरणेऽसंकोचेन ( व्यापकत्वेन ) उक्तं संगच्छते ।

इति द्वितीयोऽध्यायः ।

---

इति श्रीमद्भगवद्गीतायाः प्रथमद्वितीयाध्यायौ ।

---



# अद्वैताङ्कुराख्यटीकायां प्रमाणत्वेन धृतानां वचनानामकाराद्यनुक्रमेण सूची ।

—:+×+:—

इति श्लोकादिसूची समाप्ता ।



| ग्रन्थनाम । | मूल्यम् । रू० | आ० |
|---|---|---|
| ८६ विधानमाला—श्रीनृसिंहभट्टविरचिता । ... ... ... | ४ | ४ |
| ८७ अग्निहोत्रचन्द्रिका—किंजवडेकरोपाह्ववामनशास्त्रिकृता । | २ | १४ |
| ८८ निरुक्तम्—दुर्गाचार्यकृतवृत्तिसमेतम् । भागद्वयात्मकम् । ... | १६ | ४ |
| ८९ काव्यप्रकाशः—संकेताख्यटीकासमेतः । ... ... | ३ | ४ |
| ९० शाङ्खायनारण्यकम्—ऋग्वेदान्तर्गतबाष्कलशाखीयम् । ... | ० | ९ |
| ९१ गौतमप्रणीतन्यायसूत्राणि—भाष्यवृत्तिभ्यां समेतानि । ... | ४ | ८ |
| ९२ श्रीमद्भगवद्गीता—सटीकरामानुजभाष्ययुता । ... ... | ७ | ८ |
| ९३ दर्शपूर्णमासप्रकाशः—किंजवडेकरोपाह्ववामनशास्त्रिकृतः । | ६ | १२ |
| ९४ संस्कारपद्धतिः—अभ्यंकरोपाह्वभास्करशास्त्रिविरचिता । | २ | ८ |
| ९५ काश्यपशिल्पम्—महेश्वरोपदिष्टम् । ... ... ... | ३ | १ |
| ९६ करणकौस्तुभः—कृष्णदैवज्ञविरचितः । ... ... ... | ० | ९ |
| ९७ मीमांसादर्शनम्—सतन्त्रवार्तिकशाबरभा० भागषट्कात्मकम् । | २५ | ९ |
| ९८ धर्मतत्त्वनिर्णयः—म. म. अभ्यंकरोपाह्ववासुदेवशास्त्रिप्रणीतः । | ० | ९ |
| ९८ धर्मतत्त्वनिर्णयपरिशिष्टम्— ,, ,, | ० | १३ |
| ९९ भास्करीयबीजगणितम्—नवाङ्कुराटीकासहितम् । ... | २ | ० |
| १०० प्रायश्चित्तेन्दुशेखरः—नागेशभट्टविरचितः । कुण्डार्कयुतः । | १ | १० |
| १०१ शांकरपादभूषणम्—पर्वतेइत्युपाह्वरघुनाथशास्त्रिकृतं द्विभा० | ८ | ५ |
| १०२ ब्रह्मवैवर्तपुराणम्—भागद्वयात्मकम् । ... ... ... | ९ | ४ |
| १०३ श्रुतिसारसमुद्धरणम्—गिर्यपरनामकतोटकाचार्यप्रणीतम् । | ० | १३ |
| १०४ त्रिंशच्छ्लोकी—टिप्पणीविवृतिभ्यां समेता । धर्मशास्त्रग्रन्थः । | २ | १५ |
| १०५ आश्वलायनगृह्यसूत्रम्—आश्वलायनाचार्यप्रणीतम् । ... | २ | १२ |
| १०६ दशोपनिषदः—मूलमात्रम् । ... ... ... ... | २ | ० |
| १०७ लीलावती—श्रीमद्भास्कराचार्यप्रणीता । टीकाद्वयोपेता द्विभागा । | ३ | ० |
| १०८ व्याकरणमहाभाष्यम्—प्रदीपोद्द्योतयुतं (अङ्ग ०)प्र. भा. । | २ | १२ |
| श्रीमत्पद्मपुराणम्—महापुराणान्तर्गतं चतुर्भागात्मकम् । | २० | ० |
| सिद्धान्तदर्शनम्—महर्षिवेदव्यासप्रणीतं निरञ्जनभाष्ययुतम् । | १ | ४ |
| आधानपद्धतिः—किंजवडेकरोपाह्ववामनशास्त्रिभिः कृता । | १ | १४ |
| पश्वालम्भमीमांसा—किंजवडेकरोपाह्ववामनशास्त्रिविरचिता । | ० | १० |
| शिवभारतम्—कवीन्द्रपरमानन्दविरचितम् । ... ... | १ | ० |

## आनन्दाश्रममुद्रणालयमुद्रितग्रन्थावल्या अकारादिवर्णानुक्रमेण ग्रन्थाङ्केन मूल्याङ्केन च सहितं सूचीपत्रम् ।

—०:~~~~~:०—

| ग्रन्थाङ्काः | | मूल्यम् रू० | आ० |
|---|---|---|---|
| ४१ | अग्निपुराणम् | ५ | ४ |
| ८७ | अग्निहोत्रचन्द्रिका | २ | १४ |
| ८४ | अद्वैतामोदः | २ | ० |
| ५७ | आचारभूषणम् | ४ | ६ |
| ५८ | आचारेन्दुः | ४ | ० |
| | आधानपद्धतिः | १ | १४ |
| १०५ | आश्वलायनगृह्यसूत्रम् | २ | १२ |
| ८१ | आश्वलायनश्रौतसूत्रम् | ४ | ११ |
| ६२ | ईशाकेनकठाद्युप०(रामा०) | २ | ८ |
| ७६ | ईशाकेनकठोपनिषदः | १ | ० |
| ५ | ईशावास्योपनिषत् | ० | १४ |
| २९ | उपनिषदां समुच्चयः | ६ | १२ |
| ३२ | ऐतरेयब्राह्मणम् | १० | १० |
| ३८ | ऐतरेयारण्यकम् | ३ | ० |
| ११ | ऐतरेयोपनिषत् | १ | ४ |
| ९६ | करणकौस्तुभः | ० | ९ |
| ७ | काठकोपनिषत् | १ | ४ |
| ६६ | काव्यप्रकाशः | ६ | ४ |
| ८९ | काव्यप्रकाशः | ३ | ४ |
| ९५ | काश्यपशिल्पम् | ३ | १ |
| ६ | केनोपनिषत् | १ | ० |
| ५२ | गणेशगीता | २ | ० |
| १ | गणेशाथर्वशीर्षम् | ० | ६ |
| ७३ | गायत्रीपुरश्चरणपद्धतिः | १ | ८ |
| ६१ | गौतमसूत्रम् | २ | ८ |
| १४ | छान्दोग्योपनिषत्(शां०) | ५ | ० |
| ६३ | छान्दोग्योपनि०(रामा०) | ३ | १२ |
| ७९ | छान्दोग्योप०(मिताक्षरा०) | २ | ० |

| ग्रन्थाङ्काः | | मूल्यम् रू० | आ० |
|---|---|---|---|
| २० | जीवन्मुक्तिविवेकः | ३ | १२ |
| २४ | जैमिनीयन्यायमालाविस्तरः | ८ | ० |
| ६९ | ज्ञानार्णवतन्त्रम् | १ | ४ |
| ८५ | ज्योतिर्निबन्धः | ३ | १५ |
| ३७ | तैत्तिरीयब्राह्मणम् | १४ | ८ |
| ४२ | तैत्तिरीयसंहिता | ४८ | १० |
| ३६ | तैत्तिरीयारण्यकम् | ९ | ३ |
| १२ | तैत्तिरीयोपनिषत् | १ | १२ |
| १३ | तैत्तिरीयोपनिषद्भाष्यवा० | २ | २ |
| ७८ | त्रिस्थलीसेतुः | ३ | १२ |
| १०४ | त्रिंशच्छ्लोकी | २ | १५ |
| ९३ | दर्शपूर्णमासप्रकाशः | ६ | १२ |
| १०६ | दशोपनिषदः | २ | ० |
| ७४ | द्राह्यायणगृह्यसूत्रवृत्तिः | १ | ० |
| ३३ | धन्वन्तरीयनिघण्टू रा०स० | ६ | ४ |
| ९८ | धर्मतत्त्वनिर्णयः | ० | ९ |
| ९८ | धर्मतत्त्व०परिशिष्टम् | ० | १३ |
| ५६ | नित्याषोडशिकार्णवः | ३ | ४ |
| ८८ | निरुक्तम् | १६ | ४ |
| ३० | नृसिंहपूर्वोत्तरतापनीयोप० | १ | १२ |
| ९१ | न्यायसूत्राणि | ४ | ८ |
| | पद्मपुराणम् | २० | ० |
| | पश्वालम्भमीमांसा | ० | १० |
| ७२ | परिभाषेन्दुशेखरः | २ | ६ |
| ४७ | पातञ्जलयोगसूत्राणि | ३ | ० |
| ३ | पुरुषसूक्तम् | ० | ४ |
| ५५ | पुरुषार्थचिन्तामणिः | ४ | ० |
| ८ | प्रश्नोपनिषत् | १ | ० |

| ग्रन्थाङ्काः | | मूल्यम् रू० | आ० |
|---|---|---|---|
| १०० | प्रायश्चित्तेन्दुशेखरः | १ | १० |
| १५ | बृहदारण्यकोपनिषत् | ८ | ० |
| ६४ | ,, (रामानुजटी०) | ३ | ४ |
| ३१ | ,, ( मिताक्षरा ) | २ | १२ |
| १६ | बृहदारण्यको०भा०वा० | २२ | ८ |
| ७१ | बृहद्योगतरङ्गिणी | १० | १२ |
| ६८ | बृहद्ब्रह्मसंहिता | १ | १२ |
| २८ | ब्रह्मपुराणम् | १ | ४ |
| १०२ | ब्रह्मवैवर्तपुराणम् | ९ | ४ |
| २१ | ब्रह्मसूत्राणि (शां०) | १२ | ० |
| ६७ | ,, ब्रह्मामृतवर्षिणी-दीपिकासमेतानि | ४ | ८ |
| ८२ | ब्रह्मसूत्रवृत्तिः | २ | ७ |
| ३४ | भगवद्गीता (शां०भा०) | २ | ० |
| ३४ | ,, ( सटीकशां०भा०) | ६ | ४ |
| ४४ | ,, ( पैशाचभाष्य० ) | १ | ८ |
| ४५ | ,, (मधुसूदनीश्रीधरीटी० | ५ | ४ |
| ९२ | ,, ( रामानुजीया ) | ७ | ८ |
| ९९ | भास्करीयबीजगणि.सटी. | २ | ० |
| ७५ | भाष्यार्थरत्नमाला | ४ | ४ |
| ५४ | मत्स्यपुराणम् | ६ | ० |
| १० | माण्डूक्योपनिषत् | २ | ५ |
| ९७ | मीमांसादर्शनम् | २५ | ९ |
| ९ | मुण्डकोपनिषत् | ० | १० |
| ६० | यतिधर्मसंग्रहः | १ | १२ |
| ५० | यतीन्द्रमतदीपिका | १ | ४ |
| ४६ | याज्ञवल्क्यस्मृतिः | १३ | ० |
| ४ | योगरत्नाकरः | ५ | ० |
| १९ | रसरत्नसमुच्चयः | ३ | १२ |
| २ | रुद्राध्यायः | १ | ६ |

| ग्रन्थाङ्काः | | मूल्यम् रू० | आ० |
|---|---|---|---|
| १०७ | लीलावती | ३ | ० |
| ८० | वाक्यवृत्तिः | ० | ८ |
| ८९ | वायुपुराणम् | ४ | १२ |
| ८६ | विधानमाला | ४ | ४ |
| २७ | वृन्दमाधवः | ६ | १२ |
| ७७ | वेदान्तसूत्रमुक्तावलिः | २ | ६ |
| ४३ | वैयाकरणसिद्धान्तकारिकाः | ० | १२ |
| २३ | वैयासकन्यायमालाविस्तरः | १ | १२ |
| १०१ | शांकरपादभूषणम् | ८ | ५ |
| ६५ | शाङ्खायनब्राह्मणम् | १ | ४ |
| ९० | शाङ्खायनारण्यकम् | ० | ९ |
| | शिवभारतम् | १ | ५ |
| ५९ | श्राद्धमञ्जरी | २ | ० |
| २२ | श्रीमच्छंकरदिग्विजयः | ६ | ० |
| १०३ | श्रुतिसारसमुद्धरणम् | ० | १३ |
| १७ | श्वेताश्वतरोपनिषत् | २ | ४ |
| ९४ | संस्कारपद्धतिः | २ | ८ |
| ८३ | संक्षेपशारीरकम् | ९ | १ |
| ३५ | संगीतरत्नाकरः | १० | ४ |
| ५३ | सत्याषाढश्रौतसूत्रम् | २८ | ५ |
| ५१ | सर्वदर्शनसंग्रहः | २ | ० |
| ४० | संध्याभाष्यसमुच्चयः | २ | ० |
| ३९ | संस्काररत्नमाला | १२ | ८ |
| | सिद्धान्तदर्शनम् | १ | ४ |
| २५ | सूतसंहिता | ११ | ८ |
| १८ | सौरपुराणम् | ३ | ० |
| ४८ | स्मृतीनां समुच्चयः | ५ | ० |
| ७० | स्मृत्यर्थसारः | १ | १० |
| २६ | हस्त्यायुर्वेदः | ७ | ६ |